सम्पूर्णानन्द-ग्रन्थमाला

[ १४ ]

# नीतिविधिविमर्शः

[ प्रथमो भागः ]

प्रणेता

डॉ० हरिहरनाथत्रिपाठी




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

SAMPŪRṆĀNANDA-GRANTHAMĀLĀ

[ Vol. 14 ]

# NĪTIVIDHIVIMARŚAḤ

[ Part-1 ]

BY

DR. HARIHARANĀTHA TRIPĀṬHĪ

Ācārya, M. A. Ph. D.

Director, Center for the Study of State Governments

&

Professor & Head of the Department of Political Science

Benaras Hindu University




VARANASI

1988

**Research Publication Supervisor—**
**Director, Research Institute,**
Sampurnanand Sanskrit University
Varanasi.



□

**Published by—**
**Dr. Harish Chandra Mani Tripathi**
Publication Officer,
Sampurnanand Sanskrit University
Varanasi–221 002.

□

Available at—
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi–221002.

□

**First Edition, 1100 Copies**
**Price Rs. 85·00**

□

**Printed by—**
**VIJAYA PRESS,**
Sarasauli, Varanasi.

सम्पूर्णानन्द-ग्रन्थमाला

[ १४ ]

# नीतिविधिविमर्शः

[ प्रथमो भागः ]

प्रणेता

डॉ० हरिहरनाथत्रिपाठी

आचार्यः एम० ए०, पी-एच० डी०

निदेशकः, सेण्टर फार द स्टडी ऑफ स्टेट गवर्नमेण्ट्स

आचार्योऽध्यक्षश्च

राजनीतिशास्त्रविभागस्य

काशीहिन्दूविश्वविद्यालये

वाराणसी




वाराणस्याम्

२०४५ तमे वैक्रमाब्दे    १९१० तमे शकाब्दे    १९८८ तमे ख्रैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः—
**निदेशकः, अनुसन्धानसंस्थानस्य**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी ।

□

प्रकाशकः—
**डॉ० हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१ ००२.

□

प्राप्तिस्थानम् :—
**विक्रयविभागः,**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१ ००२.

□

प्रथमं संस्करणम्, ११०० प्रतिरूपाणि
मूल्यम्—८५.०० रूप्यकाणि

□

मुद्रकः—
**विजय-प्रेस,**
सरसौली, वाराणसी ।

# आत्मनिवेदनम्

भारतीयानामपि विद्यानामध्ययनं सामग्रचेणैव कार्यं न त्वेकाङ्गितया। तदर्थं नीतेर्विधेश्चाध्ययने समाजशास्त्रस्याध्ययनमुपजीव्यैव राजशास्त्रं विधिशास्त्रञ्च मीमांसनीम्। ग्रन्थ एष मीमांसामिमां प्रस्तौति। पाश्चात्त्यैर्भारतीयानां विद्यानां मूलभूतेष्वपि मतेषु भ्रान्तय उत्पादिताः। तत्र कारणमज्ञानं साम्राज्यवादश्च। एतच्च खेदावहं यद् भारतीया अपि विद्वांसोऽद्यत्वे एतासामेव भ्रान्तीनामाखेटः। सामान्यतः पाश्चात्त्यानां दिशा भारतीया मौलिकाः सिद्धान्ता विपरीततया निरुच्यन्ते। भागद्वयात्मा प्रस्तुतो ग्रन्थो वैपरीत्यमिदं निराचिकीर्षति 'भारतीयविचारदर्शनम्' इति एतस्याग्रज इव।

ग्रन्थेऽस्मिन् सर्वेऽध्याया लक्ष्यमिदं निर्वहन्ति। तत्रापि प्रथमे त्रयोऽध्याया देशः, कालः, पात्रञ्चेति त्रयाणां मीमांसां प्रातिपद्येन प्रस्तौति। किं तावद् भारतवर्षत्वम्? कोऽस्माकं संस्कृतेः कालः? काऽस्माकं कालपरिभाषा? अस्य देशस्य के नु निवासिनः, आसीच्च पृथिवीयं केषां संस्कृतेः प्रसारलीला इत्यादीन् विषयानधिकृत्याधुनिकैर्विद्वद्भिर्ये विवादाः प्रस्तुताः प्रयतितं च भारतीयस्य ज्ञानकोशस्याध्ययनदिशं परिवर्तयितुं ग्रन्थस्यास्य प्रथमैस्त्रिभिरध्यायैस्तत्रैव प्रतिवदद्भिरस्माभिर्भारतीयं पक्षम्, उपस्थापयितुं प्रायासि। दिङ्मात्रञ्चेदम्, विषयस्य नितान्तं व्यापकत्वात्। न शक्यमेतैरिदमित्थन्तया सर्वोऽपि विषयः साकल्येनोपस्थापयितुम्। नैरन्तर्येण स्वातन्त्र्येण च क्रियमाणोऽध्यवसाय एव कार्यमिदं साकल्येन सम्पादयितुं शक्नोति। अध्यायेष्वेषु भावनेयं प्रतिपदं स्थिता।

विधेर्विषये आवश्यकं यदस्य स्रोतांसि समाजशास्त्रानुशासनैः सह सम्बन्धश्च सविशेषं विश्लेषणीयानि। विधेः स्रोतःसु वेदापौरुषेयता विवादो नितान्तं महत्त्वपूर्णः। वैदिकैरत्र भृशं परिश्रान्तम्। आधुनिकेषु करपात्रस्वामिभिर्वेदार्थपारिजातग्रन्थे पूर्ववर्तिनो वेदापौरुषेयतासम्बन्धिनो विचाराः साकल्येन सङ्गृहीताः। अस्माभिरेते विचाराः स्वतन्त्ररूपेण उपस्थापिताः, प्रयतितं च तेषां वाक्यानि यथावदुद्धर्तुम्। ये च पक्षस्यास्य प्रतिवादास्ते संक्षिप्यैवोपस्थापिताः। अत्र कारणं विस्तरभीः। सुविदितमिदं विदुषां कियान् खलु विस्तरो विषयस्यास्य, वादप्रतिवादयोः।

ग्रन्थस्यास्य प्रणयने पूर्वग्रन्थसूरीणां सर्वेऽपि ग्रन्था मया पूर्णरूपेणानुशीलिताः। सूचीमेषां द्वितीये भागे प्रस्तोष्यामि, प्रस्तोष्यामि च तत्रैव भूमिकामपि विस्तरेण। एतेन भागेन विदुष उपतिष्ठे तेषां कृपाभिरात्मानं सम्भावयितुम्। विश्वसिमि तेषामाशिषो वर्षिष्यन्त्येव जनेऽस्मिन् इति।

श्रावणपूर्णिमा २०४५ } हरिहरनाथत्रिपाठी

## विषयानुक्रमणी

बिहारराज्यस्य मुख्यमन्त्रिभ्य
आजादोपाह्वयेभ्यो विद्वत्प्रवर-
**श्रीभागवतझामहाभागेभ्यः**
समर्प्यतेतरां ग्रन्थ एष सबहुमानं
**सश्रद्धातिरेकञ्च**

# नीतिविधिविमर्शः

## [ प्रथमोऽध्यायः ]

## देशः

**सृष्टेः पूर्वं जगद्रूपम्**

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥

मनोरयं श्लोको बौद्धदार्शनिककमलशीलेन तत्त्वसङ्ग्रहपञ्जिकायाम् ( का० ३११८ ) स्मृतिकारवचनतया धृतः; श्रीसुरेश्वराचार्येण च बृहदारण्यकभाष्यवार्त्तिके (पृ०४८७), श्रीसायणाचार्येण तैत्तिरीयब्राह्मणभाष्ये (२।२।९।१), अन्यत्र च स्वकीयवेदभाष्यादिषु, अन्यैश्च बहुभिर्मूलभाष्यटीकानिबन्धादिग्रन्थकारैर्यथाप्रसङ्गं स्वग्रन्थेषु बहुत्र प्रमाणतया समादृतो दृश्यते ।[१] सृष्टेः प्राक्कालिकं नैव जगद्रूपं सुनिश्चितम् । जगतोऽव्यक्तावस्था नैकरूपा निरूपिता । अस्याः सृष्टेः क्रमोऽपि नैकः, नैकतत्त्वञ्च कारणम्—

ब्रुवन्ति शङ्करं केचिन्मत्वा कारणकारणम् ।
अन्ये विष्णुं स्तुवन्त्येनं सर्वेषां प्रभुमीश्वरम् ॥
धातारं च तथाऽन्ये ब्रुवन्ति सृष्टिकारणम् ।
दिनेशं प्रवदन्त्यन्ये वासवञ्च शतक्रतुम् ॥

---

१. आसीदिदं तमोभूतं न प्राज्ञायत किञ्चन ।
ततः स्वयम्भूर्भगवान् प्रादुरासीच्चतुर्मुखः ॥

( ना० स्मृ० १।५ )

अव्यक्ते पुरुषं याते पुंसि सर्वगतेऽपि च ।
तम एवाऽभवत्सर्वं न प्राज्ञायत किञ्चन ॥

( महा० शा० ३५१।१६ )

आसीदेकार्णवं घोरमविभागं तमोमयम् ।
शान्तवातादिकं सर्वं न प्राज्ञायत किञ्चन ॥

( कूर्म० पूर्वभागः ६।१ )

वरुणञ्च तथा सोमं पावकं पवनं तथा ।
यमं कुबेरं धनदं गणाधीशं तथाऽपरे ॥
भवानीं केचनाचार्याः प्रवदन्त्यखिलार्थदाम् ।
आदिमायां महाशक्तिं प्रकृतिं पुरुषानुगाम् ॥
ब्रह्मैकतासमापन्नां सृष्टिस्थित्यन्तकारिणीम् ।
मातरं सर्वभूतानां देवतानां तथैव च ॥
निरञ्जनं निराकारं निर्लेपं निर्गुणं किल ।
अरूपं व्यापकं ब्रह्म प्रवदन्ति मुनीश्वराः ॥
वेदोपनिषदि प्रोक्तस्तेजोमय इति क्वचित् ।
सहस्रशीर्षा पुरुषः सहस्रनयनस्तथा ॥
सहस्रकरकर्णश्च सहस्रास्यः सहस्रपात् ।
विष्णोः पादमथाकाशं परमं समुदाहृतम् ॥
विराजं विरजं शान्तं प्रवदन्ति मनीषिणः ।
पुरुषोत्तमं तथा चाऽन्ये प्रवदन्ति पुराविदः ॥
नैकोऽपीति वदन्त्यन्ये प्रभुरीशः कदाचन ।
अनीश्वरमिदं सर्वं ब्रह्माण्डमिति केचन ॥
न कदापीशजन्यं यज्जगदेतदचिन्तितम् ।
सदैवेदमनीशञ्च स्वभावोत्थं सदेदृशम् ॥
अकर्त्ताऽसौ पुमान् प्रोक्तः प्रकृतिस्तु तथा च सा ।
एवं वदन्ति सांख्याश्च मुनयः कपिलादयः ॥
( दे० भा० स्कं० ३ अ० १ )

एवं नानामतं सृष्टेः स्वरूपे प्रयोजने च—

विभूतिं प्रसवं त्वन्ये मन्यन्ते सृष्टिचिन्तकाः ।
स्वप्नमायास्वरूपेति सृष्टिरन्यैर्विकल्पिता ॥
इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः ।
कालात् प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः ॥
भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चाऽपरे ।
देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा ॥
( गौडपाद० १।७-९ )

'सद्, असत् , तम, आपो वा, त्रिगुणम् , ब्रह्म, कर्म वा, आत्मा, हिरण्यगर्भो वा प्रागासीदिति वेदवाक् । आकाशादिक्रमात्सृष्टिरात्मनो ब्रह्मरूपिणो महदादिक्रमाच्चोक्ता प्रधानात्त्रिगुणात्मनः ।' अद्भ्यश्च तेजसः शब्दब्रह्मणः प्रणवात्मनः क्रमात्सृष्टौ वेदवादाः पृथग्विधाः प्रवर्तन्ते—

"सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयम्, 'असदेवेदमग्र आसीदेकमेवाद्वितीयम्, तस्मादसतः सज्जायत'; कुतस्तु खलु सोम्यैवं स्यादिति होवाच, कथमसतः सज्जायतेति; सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्; तदैक्षत बहु स्यां प्रजायेयेति; तत्तेजोऽसृजत; तत्तेज ऐक्षत बहुस्यां प्रजायेयेति; तदपोऽसृजत;.......ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति, ता अन्नमसृजन्त" ( छा० उ० ६।२–६ )।

"असदेवेदमग्र आसीत्; तत्सदासीत्तत्समभवत्, तदाऽण्डं निरवर्तत; तत्संवत्सरस्य मात्रामशयत, तन्निरभिद्यत; ते आण्डकपाले रजतं सुवर्णं चाऽभवताम्। तद् यद्रजतं सेयं पृथिवी, यत्सुवर्णं सा द्यौः, यज्जरायु ते पर्वता, यदुल्वँ स मेघो नीहारो या धमनयस्ता नद्यो यद्वास्तेयमुदकं स समुद्रः" ( छा० उ० ३।१९।१-२ )।

"असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद् वेद, सन्तमेनं ततो विदुरिति। तस्यैष एव शारीर आत्मा,... .. सोऽकामयत 'बहु स्यां प्रजायेयेति;' स तपोऽतप्यत, स तपस्तप्त्वा इदं सर्वमसृजत, यदिदं किञ्च; तत्सृष्ट्वा तदेवानुप्राविशत्। असद्वा इदमग्र आसीत्, ततो वै सदजायत; तदात्मानं स्वयमकुरुत, तस्मात्सुकृतमुच्यते; यद्वै तत् सुकृतम्" ( तै० उ० २।६-७ )।

ब्रह्मणस्पतिरेता सं कर्मार इवाधमत्।
देवानां पूर्व्ये युगेऽसतः सदजायत॥

( ऋ० सं० १०।७२।२ )

नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत्।
किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम्॥
न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास॥
तम आसीत्तमसा गूढमग्रेऽप्रकेतं सलिलं सर्वमा इदम्।
तुच्छ्येनाभ्वपिहितं यदासीत्तपसस्तन्महिनाऽजायतैकम्॥
कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्।
सतो बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा॥
तिरश्चीनो विततो रश्मिरेषामधःस्विदासीदुपरि स्विदासीत्।
रेतोधा आसन् महिमान आसन् स्वधा अवस्तात् प्रयतिः परस्तात्॥
को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः।
अर्वाग्देवा अस्य विसर्जनेनाऽथा को वेद यत आबभूव॥
इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न।
योऽस्याध्यक्षः परमे व्योमन् सो अङ्ग वेद यदि वा न वेद॥

( ऋ० १०।१२९ )

किं स्विदासीदधिष्ठानमारम्भणं कतमत्स्वित्कथासीत् ।
यतो भूमिं जनयन् विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः ॥
विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतोबाहुरुत विश्वतस्पात् ।
संबाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन्देव एकः ॥
किंस्विद् वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद् भुवनानि धारयन् ॥

( ऋ० १०।८१ )

यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा ।
यो देवानां नामधा एक एव तं सम्प्रश्नं भुवना यन्त्यन्या ॥
परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति ।
कं स्विद्गर्भं प्रथमं दध्र आपो यत्र देवाः समागच्छन्त विश्वे ॥
अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः ।

( ऋ० १०।८२ )

आत्मा वा इदमेक एवाग्र आसीत्, नान्यत्किञ्चन मिषत्, स ईक्षत, लोकान्नु सृजा इति; स इमाँल्लोकानसृजत, अम्भो मरीचिर्मरमापः ( ऐ० उ० १।१-२ ) ।

यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत ।

( कठ० ४।६ )

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥

( ऋ० १०।१२१ )

आत्मैवेदमग्र आसीत् ( बृ० उ० १।४।१-३ ) ।

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते, जहात्येनां भुक्तभोगामजोऽन्यः ॥
स विश्वकृद् विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद्यः ।
प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः ॥

( श्वे० उ० ४।६ )

महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥

( कठ० ३।११ )

अथाऽन्यत्राप्युक्तं यः कर्त्ता सोऽयं भूतात्मा, करणैः कारयिताऽन्तःपुरुषोऽथ यथाऽग्निनाऽयःपिण्डो वाऽभिभूतः कर्त्तृभिर्हन्यमानो नानात्वमुपैति, एवं वाव खलु

असौ भूतात्मा अन्तःपुरुषेणाऽभिभूतो गुणैर्हन्यमानो नानात्वमुपैति। अथ यत् यत्त्रिगुणं चतुरशीतिलक्षयोनिपरिणतं भूतत्रिगुणमेतद्वै नानात्वस्य रूपम्, तानि ह्वाइमानि गुणानि पुरुषेणेरितानि चक्रमिव चक्रिणेत्यथ यथाऽयःपिण्डे हन्यमाने नाऽग्निरभिभूयति, एवं नाऽभिभूयत्यसौ पुरुषोऽभिभूयत्ययं भूतात्मोपसंश्लिष्टत्वादिति। तमो वा इदमेकमग्र आस, तत्पश्चात्तत्परेणेरितं विषमत्वं प्रयाति, एतद्वै रजसो रूपम्, तद्रजः खल्वीरितं विषमत्वं प्रयाति, एतद्वै तमसो रूपम्, तत्तमः खल्वीरितं तमसः संप्रास्रवति, एतद्वै सत्त्वस्य रूपम्, तत्सत्त्वमेवेरितं तत्सत्त्वात्संप्रास्रवत्, सोंऽशोऽयं यश्चेतनमात्रः प्रतिपुरुषं क्षेत्रज्ञः संकल्पाऽध्यवसायाभिमानलिङ्गः प्रजापतिः, तस्य प्रोक्ता अग्रयास्तनवो ब्रह्मा रुद्रो विष्णुरिति; अथ यो ह खलु वा वाऽस्य राजसोंऽशोऽसौ स योऽयं ब्रह्मा, अथ यो ह खलु वा वाऽस्य तामसोंऽशोऽसौ स योऽयं रुद्रः, अथ यो ह खलु वा वाऽस्य सात्त्विकोंऽशोऽसौ स एव विष्णुः" ( मैत्रा० उ० ३-४ )।

ओमित्येकाक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद् भविष्यद्, इति सर्वमोङ्कार एव, यच्चाऽन्यत्त्रिकालातीतं तदप्योंकार एवेति ( माण्डू० उ० १ )।

सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च ( गौ० पा० का० १।२७ )।

"आदिमध्यान्ता उत्पत्तिस्थितिप्रलयाः सर्वस्यैव" इत्यादि तत्रत्यं शाङ्करभाष्यम्। 'प्रणवब्रह्मणोरैक्यं वाच्यवाचकभेदतः, सूते स मात्रिकं विश्वं शब्दमेकाक्षरो मनुः॥ यतश्चेमानि भूतानि जीवन्ति च यतः पुनः, प्रलीयन्ते यतो यस्मिंस्तद्ब्रह्मेति विदुर्बुधाः॥ शक्तिरूपसमाधारे कार्यं तिष्ठति कारणे। ततोऽवस्थान्तरं प्राप्य बहिरन्वेति पूर्ववत्।

शब्दब्रह्म परं ब्रह्म, द्वयं वै विश्वकारणम्।

( बृ० ब्र० सं० ६।४१-४४ )

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥

(वाक्यप० १।१ )

बौद्धदार्शनिकेन शान्तिरक्षितेन स्वकीये 'तत्त्वसंग्रहे' एतस्या हरिकारिकाया अर्थः सोपज्ञकारिकया ( १२८ ) इत्थमनूक्तः—

"नाशोत्पादासमालीढं ब्रह्मशब्दमयं परम्। यत् तस्य परिणामोऽयं भावग्रामः प्रतीयते" इति॥ 'परम्' इति प्रणवात्मकम्, प्रणवो हि किल सर्वेषां शब्दानां सर्वेषां चार्थानां प्रकृतिः, इति कमलशीलकृता तत्रत्या पञ्जिका।

सूक्ष्मार्थेनाप्रविभक्ततत्त्वामेकां वाचमनभिष्यन्दमानाम्
उतान्ये विदुरन्यामिव चैनां नानारूपामात्मनि सन्निविष्टाम्।

त्रयीरूपेण तज्ज्योतिः परमं परिवर्तते, पृथक्तीर्थप्रवादेषु दृष्टिभेदनिबन्धनम् ।
ब्रह्मेदं शब्दनिर्माणं शब्दशक्तिनिबन्धनम्, विवृत्तं शब्दमात्राभ्यस्तास्वेव प्रविलीयते ।
( वाक्यप० १।१ )

शब्दस्य प्रमाणोऽयमित्याम्नायविदो विदुः ।
छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत ॥
( वाक्यप० १।१२० )

इन्द्राच्छन्दः प्रथमं प्रास्यदन्नं तस्मादिमे नामरूपे विषूची,
नामप्राणाच्छन्दसो रूपमुत्पन्नमेकं छन्दो बहुधा चाकशीति ।
वागेव विश्वा भुवनानि जज्ञे वाच इत्सर्वममृतं यच्च मर्त्यम्,
अथेद्वाग्बुभुजे, वागुवाच, पुरुत्रा वाचो न परं यच्च नाह ।

विभज्य बहुधाऽऽत्मानं स च्छन्दस्यः प्रजापतिः, छन्दोमयीभिर्मात्राभिर्बहुधैव विवेश तम् ।
साध्वी वाग्भूयसी येषु पुरुषेषु व्यवस्थिता, अधिकं वर्तते तेषु पुण्यं रूपं प्रजापतेः ।
प्राजापत्यं महत्तेजस्तत्पात्रैरिव संवृतम्, शरीरभेदे विदुषां स्वां योनिमुपधावति ।
यदेतन्मण्डलं भास्वद् धाम चित्रस्य राधसः, तद्भावमभिसंभूय विद्यायां प्रविलीयते ।
( वाक्य० १।१२० )

परस्परस्य संभूतिः श्रूयते च परस्परात्, तत्राऽपि पित्रोः स्वपुत्रजन्यत्वं परमाद्भुतम्—

क उ नु ते महिमनः समस्यास्मत्पूर्व ऋषयोऽन्तमापुः ।
यन्मातरं च पितरं च साकमजनयथास्तन्वः स्वायाः ॥
( ऋ० १०।५४।३ )

एवमेव 'अदितेर्दक्षोऽजायत, दक्षाच्चादितिरिति' 'देवानामन्योन्यस्मादुत्पत्तिरपि श्रूयते—"भूर्जज्ञ उत्तानपदो भुव आशा अजायन्त, अदितेर्दक्षोऽजायत, दक्षाद्वदितिः परि" ( ऋ० १०।७२।४ )। अत्र "आदित्यो 'दक्ष' इत्याहुः, आदित्यमध्ये च स्तुतः, अदितिः 'दाक्षायणी'; तत्कथमुपपद्येत ? समानजन्मानौ स्यातामिति । अपि वा देवधर्मेण इतरेतरजन्मानौ स्यातामितरेतरप्रकृती" इति निरुक्तम् ( ११।२३।२-४ )।

यद्यपि सर्वेषां पुराणानामुपपुराणानां च मुख्यः प्रथमश्च प्रतिपाद्यः 'सर्ग' एव, अतः सर्वेषु पुराणेषु महाभारतादीतिहासेषु च विशिष्टा सृष्टिवादाऽध्यायास्तथाऽपि विशेषतोऽस्मिन्विषयेऽधस्तान्निर्दिष्टानि पुराणादीनि स्थलानि द्रष्टव्यानि । अग्निपुराणस्य श्लोकाः (१७।६-१०) मनुश्लोकसदृशाः सन्ति । अग्निपुराणस्य विंशत्यध्याये प्राकृतवैकृतादिसर्गभेदाः प्रदर्शिताः । कूर्मपुराणस्य पूर्वविभागे ( अध्यायाः ४–१० )

जगतःसृष्टेः प्राक्कालिकाऽवस्थावर्णनपूर्वकं सोपपत्तिकं प्राकृतादिसर्गनिरूपणं महदादिविशेषान्तेभ्योऽण्डोत्पत्तिस्तत्र हिरण्यगर्भस्य जन्म, तेन च जगन्निर्माणम्, ब्रह्मनारायणादिशब्दनिर्वचनं चेत्येवमादयो विषयाः प्रतिपादिताः, मनोःसृष्टिप्रकरणस्था बहवः श्लोका गर्भीकृताश्च। गरुडपुराणे पूर्वखण्डे ( अध्यायः ४ ) अनादिनिधनाऽनन्तपुरुषोत्तमादिक्रमेणाण्डहिरण्यगर्भोत्पत्तिस्ततश्च प्राकृतादिसर्गवर्णनं वर्तते। देवीभागवते ( ३।१-७;९।१-३ ) साम्यावस्थमायोपाधिकब्रह्मणो भगवतीपदवाच्याद् ब्रह्मविष्णुरुद्राणाम्, गौरीलक्ष्मीसरस्वतीनां चोत्पत्तिः, भगवत्यैव तासां तेभ्यः प्रदानञ्चाभिहितम्, तत्त्वसृष्टिनिरूपणं च कृतम्। नवमस्कन्धे तु ब्रह्मवैवर्तान्तर्गतप्रकृतिखण्ड इव गोपालसुन्दरीरूपश्रीकृष्णमूर्त्तेर्ब्रह्मादीनां गौर्यादीनाञ्चोत्पत्तिः, श्रीकृष्णेनैव तेभ्यस्तासां शक्तीनां प्रदानम्, श्रीकृष्णचिच्छक्त्या राधया डिम्भोत्पादनं ब्रह्माण्डगोलके जले तत्प्रक्षेपश्च, ततो विराडादिक्रमेण ब्रह्मण उत्पत्तिस्ततो विश्वसृष्टिश्चेत्यादिकमुक्तम्; प्रकृतिकृष्णशब्दयोः समीचीनं निर्वचनं च कृतम्।

नरसिंहपुराणे ( अ० १-५ ) अण्डकथादिपूर्वकं नवधासृष्टिवर्णनं दृश्यते। इत्थमेव पद्मपुराणान्तर्गतादिखण्डेऽपि ( अ० २ सृष्टिखं० २।८३-११७ )। मनोः ( १।८-१३ ) श्लोकसदृशाः सन्ति ब्रह्मपुराणश्लोकाः ( १।३७-४१ )। ब्रह्मवैवर्तपुराणवर्णनम् ( ब्रह्मखं० अ० ३-७ प्र० खं० अ० १-३ ) अध्यायतः शब्दानुपूर्वीतश्च देवीभागवतनवमस्कन्धेन भूयसा समानो दृश्यते। श्रीमद्भागवतपुराणप्रसङ्गम् ( स्कं० २ अध्या० ५-६; स्कं० ३ अ० ५-१०; स्कं० ११ अ० २४ ) सर्वेषां सृष्टिप्रस्थानभेदानां निरूपणम् सुनिपुणम्, विभिन्नदृष्ट्या तया तया द्वारा साधुत्वेनाऽभिमतानां तेषां नानामतानां वेदान्तानुसारतः समन्वयप्रदर्शनं च सोपपत्तिकं कृतमस्ति। मत्स्यपुराणश्लोकाः ( २।२५-२९ ) मनोः ( १।५-९ ) श्लोकैः किञ्चित्पाठभेदेन सादृश्यं भजन्ते। अस्मिन्नेवाध्याये आदित्यब्रह्मणोरेकत्वम्, तन्नाम ( आदित्यब्रह्ममार्तण्डादि ) निर्वचनं च कृतं दृश्यते। मत्स्यपुराणे ( ३।१४-२९ ) गुणत्रयोद्देशपूर्वकं प्रकृतिलक्षणाभिधानम्, सांख्यानुमतप्रक्रियया जगत्सृष्टिवर्णनं च महत्त्वपूर्णम्। मार्कण्डेयपुराणे ( अ० ४७-४८; १०१-३ ) अण्डकथा तत्र ब्रह्मण आविर्भावस्ततश्च सकाशात् प्रणवव्याहृतिवेदानां विश्वस्य चोत्पत्तिरभिहिता। लिङ्गपुराणे ( अ० ७० ) सविस्तरमादिसर्गवर्णनम्, "मनो महान्, मतिर्ब्रह्मा" इत्यादिवायुपुराणवन्निरुक्तप्रदर्शनम्, स्थाने स्थाने बहूनां सृष्टिप्रकरणीयमनुश्लोकानां क्रोडीकरणं च दृश्यते। अण्डकथाऽन्यपुराणवदत्राऽपि विद्यत एव। वायुपुराणे प्रक्रियापादे ( अ० ३-६ ) सांख्यवेदान्तप्रक्रियासमन्वयपूर्वकं वैज्ञानिकं सृष्टितत्त्वकथनम्, ब्रह्मादिपदनिर्वचनम्, अण्डरहस्यार्थसूचनं चेत्यादिकमुपपादितं दृश्यते।

विष्णुपुराणे ( अ० १-२ ) 'वासुदेव'पदनिरुक्ति ( श्लो० १२ ) पूर्वकं प्रकृतेः स्वरूपलक्षणम्, प्रलयकाले ( सृष्टेः पूर्वम् ) जगतस्तत्र सूक्ष्माऽव्यक्तरूपतया ( अव्याकृत-

नामरूपात्मकतया ) अवस्थानम्, ततः परस्य ब्रह्मणः प्रकृतिपुरुषक्षोभकत्वम्, तया च द्वारा महदादिक्रमेण महाभूतपर्यन्तं जगद्व्यञ्जनम्, ततो महदादिविशेषान्तसङ्घातैरण्डोत्पादनम्, तत्र च विष्णोरेव ब्रह्म ( हिरण्यगर्भ ) रूपेणावस्थानम्, ततस्तन्निर्भिद्य निर्गतेन ब्रह्मणा समस्तभौतिकविश्वनिर्माणं चेत्यादयो विषयाः सम्यङ्निरूपिताः सन्ति। सृष्टिविषययोः क्रियावादपरिणामवादयोः सर्वविरोधपरिहारेण यथा समन्वयोऽत्र कृतो दृश्यते, न तथाऽन्यत्र क्वाऽपीति तुलनया विज्ञेयं सृष्टितत्त्वानुसन्धानपरायणैर्विद्वद्भिः। किं बहुना, यदुपज्ञं खलु सर्ववेदार्थपरिबृंहितं नानेतिहासपुराणं विविधज्ञानविज्ञानैरद्याऽपि विश्वमखिलं विशेषतो भारतं वर्षमुद्भासयदतितरां विजयते, तस्य कृष्णद्वैपायनस्य जनकेन महर्षिणा पराशरेण प्रवर्तितमिदं पुराणं यथाऽन्यस्मिन्विषये सर्वस्मिनपि पुराणान्तरमतिशेते, तथैव सृष्टिविद्यायामपीति तत्त्वकथनमेतत्।

सौरपुराणेऽपि ( अ० २१-२४ ) पुराणान्तरवत् प्रायशः सर्वोऽपि सृष्टिवादविस्तारः प्रपञ्चितो दृश्यते। स्कन्दपुराणे ( सू० सं० शिवमाहात्म्य० अ० १०-११ ) नवविधसर्गनिरूपणपुरस्सरं हिरण्यगर्भादिविशेषसृष्टिवर्णनं सयुक्तिकं दृश्यते। सूतसंहितायां यज्ञवैभवखण्डोपरिभागे ब्रह्मगीतायाम् ( अ० ५ ) विवर्त्तवादानुसारेण सोपपत्तिकं परमताऽऽलोचनपूर्वकं च परस्य ब्रह्मणो नामरूपात्मकजगद्व्याकरणं सुनिरूपितमस्ति। दुर्गासप्तशतीवर्णने 'प्राधानिकरहस्यम्' सम्पूर्णं सृष्टिविषयकं विद्यते। अत्र 'चण्डिका'पदवाच्यं परब्रह्मैव धर्मिरूपं निर्गुणं जगत्कारणम् तदेव च समष्टिरूपं चण्डिकाख्यं ब्रह्म महालक्ष्म्याद्यात्मकव्यष्टित्रयरूपेण परिणतं सद्हिरण्यगर्भादिक्रमेण विश्वं ससर्जेति विलक्षणमेव सृष्टिक्रमनिरूपणं दृश्यते। अत्रत्यं 'दर्शन'मवगन्तुं दुर्गासप्तशत्या गुणवतीटीकोपोद्घातः, तस्यामेव टीकायां चण्डिकापदव्याख्यानं च द्रष्टव्यम्। नारदपाञ्चरात्रे ( बृहद्ब्रह्मसं० प्रथमपादे अ० १३ ) वासुदेवादिचतुर्व्यूहोत्पत्तिः विष्णुनाभिकमलाद् ब्रह्मण उत्पत्तिः ( द्वि० पा० अ० १ ), अण्डवर्णनम् , चिदचितोः परब्रह्मशरीरत्वप्रतिपादनं च ( तृ० पा० अ० १ ), नारायणपदनिर्वचनम् ( चतुर्थपा० अ० ३ श्लो० २३ ) ततः सृष्टिक्रमनिरूपणं ब्रह्मणः सर्वजीवसमष्टित्व-सर्वजीवनिकायत्वादिवर्णनं च, चिदचिद्विशिष्टस्य परमात्मनः जगदुपादानत्वतन्निमित्वोत्पादनम् ( चतुर्थपा० अ० ९ ) ततः सर्वसृष्टिनिरूपणं च विशिष्टाद्वैतानुसारतः समीचीनतया कृतम्।

महाभारते ( आदि०१।२९-४९ ) अण्डवृत्तान्तकथनपूर्वकं हिरण्यगर्भोत्पत्तिवर्णनं सारतः समस्तसृष्टिक्रमसूचनं च। वनपर्वणि ( २२७।३१-४७,८२ ) जलनिधौ शेषपर्यङ्कमधिशयानस्य भगवतोऽरविन्दनाभस्य नाभिपद्माद् विश्वाभिमानिनः सूत्रात्मनः हिरण्यगर्भस्य जन्म; तेन मरीचिप्रमुखानां महर्षीणां मनसा सङ्कल्पमात्रेण सर्जनम्,

तेश्च चराचरात्मकसर्वभूतसृष्टिरित्यादिकं संक्षेपादभिहितम्। शान्तिपर्वणि (अ० १८२) अनादिनिधनः कश्चिद्देवो 'मानसो' नाम जगतो मूलकारणम्, स एव महदादिक्रमेण महाभूतपर्यन्तं विश्वमसृजत्, तेनैव पद्मं सृष्टम्, तस्माद् 'ब्रह्मा' समभवद् इत्यादि वर्णितम्। अत्रत्य ७३ तमे श्लोके पद्मशब्दार्थः पृथिवीति प्रोक्तः। शान्तिपर्वणि (अ० १८३) सलिलादिक्रमेण जगदुत्पत्तिवर्णनं दृश्यते। २७५ अध्याये वेदान्तानुमतक्रमतो गूढार्थं भूतोत्पादविनाशादिवर्णनमस्ति। ३१० अध्याये सांख्यानां चतुर्विंशतितत्त्वानि, नवविधाः सर्गाश्चोक्ताः। ३११ अध्याये (३-५ श्लोकाः) अर्थतः शब्दतश्च भूयसा मनोः श्लोकैः (१।११-१३) संवदन्ते। ३३९ अध्याये जगतः प्रतिलोमपरिणामेन पृथिव्यादिक्रमतः परमात्मनि लयाभिधानपूर्वकं वासुदेवादिचतुर्व्यूहसृष्टिनिरूपणं वर्तते। अत्र ३३-३४ श्लोकाभ्यां शरीरलक्षणम् श्लो० ७२-७५ चतुर्व्यूहोत्पत्तिः, ब्रह्मणोऽनिरुद्धनाभिकमलोद्भवत्वं च प्रदर्शितम्। शान्तिपर्वणि (अ० ३४७) प्रलयक्रमनिर्देपूर्वकं सृष्टेः प्राक्कालिकतमः स्थितिवर्णनम्, ततोऽनिरुद्धाख्यस्य परमात्मव्यूहाविर्भावः। तन्नाभिपद्माद् ब्रह्मणोऽहङ्कारात्मकस्योत्पत्तिः, तस्यानेकजन्मकथा चेत्यादिकमभिहितम्। हरिवंशे (१ प. १-३ अ०) आदिसर्गकथनमस्ति। अत्रत्या २७-३१ श्लोका मनोः (१।८-१३) श्लोकैः शब्दार्थाभ्यां तुलामधिरोहन्ति। बृहद्धर्मपुराणे मध्यखण्डे (अ० ३१-३२) सृष्टिवर्णनं सविस्तरं कृतमस्ति। अत्रत्यौ १२-१३ श्लोकौ क्रमशः मनोः १।८ तथा १।१० श्लोकाभ्यां समानौ स्तः।

**जगत्प्रकाशयतः परमात्मनः प्रादुर्भावः**

अत्र विषये मनुना प्रतिपादितम्—

ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदम्।
महाभूतादि वृत्तौजाः प्रादुरासीत्तमोनुदः॥

(मनु० १।६)

भगवद्गीतायां श्रीकृष्णेनोपदिष्टम्—

मया ततमिदं सर्वं जगदव्यक्तमूर्त्तिना।
मत्स्थानानि सर्वभूतानि न चाऽहं तेष्ववस्थितः॥
सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम्।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्॥
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्॥
मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्।
हेतुनाऽनेन कौन्तेय जगद् विपरिवर्तते॥

(गीता० अ० ९)

एषा प्रक्रिया श्रीमद्भागवते स्पष्टीकृता—

भगवानेक आसेदमग्र आत्माऽऽत्मनां विभुः ।
आत्मेच्छाऽनुगतौ ह्यात्मा नानाशक्त्युपलक्षितः ॥
स वा एष तदा द्रष्टा नाऽपश्यद्दृश्यमेकराट् ।
मेनेऽसन्तमिवात्मानं सुप्तशक्तिरसुप्तदृक् ॥
सा वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका ।
माया नाम महाभाग ययेदं निर्ममे विभुः ॥
कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः ।
पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान् ॥
ततोऽभवन् महत्तत्त्वमव्यक्तात्कालचोदितात् ।
विज्ञानात्मात्मदेहस्थं विश्वं व्यञ्जंस्तमोनुदः ॥
सोऽप्यंशगुणकालात्मा भगवद्दृष्टिगोचरः ।
आत्मानं व्यकरोदात्मा विश्वस्यास्य सिसृक्षया ॥

( भा० ३।५। २३-२८ )

एवमुक्तश्लोकैः स्पष्टं समर्थ्यते प्रकृतेः 'प्रेरकत्वेन स्रष्टृत्वं परमात्मनः । जगत्कर्तृत्वमीशस्य मायोपाधिकमिष्यते । श्वेताश्वतरवेदान्ते तदर्था दृश्यते श्रुतिः ।'[१] मायाशब्दात् प्रकृतेरत्र बोधः ।[२] यमिन्द्रियाण्यतिक्रान्तं योगिनां मनो गृह्णाति, सोऽसावतीन्द्रियग्राह्यो न जात्विन्द्रियगोचरः—

नैनमूर्ध्वं न तिर्यञ्च न मध्ये परिजग्रभत्,
न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः ।
न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्,
हृदा हृदिस्थं मनसा य एनमेवं विदुरमृतास्ते भवन्ति ॥
(श्वे० उ० ४।१८-२०; महाना० उ० १।२; कठ० ६।९; मुण्ड० ३।८-९)

एषु सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ।

( कठ० १।३।१२ )

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ( तै० उ० २।४।१; ब्र उ० ३ ) ।

नैवाऽसौ चक्षुषा ग्राह्यो न तु शिष्टैरपीन्द्रियैः,

---

१. अस्मान्मायी सृजते विश्वमेतत् ( श्वेता० उ० ४।९ )
२. मायां तु प्रकृतिं विद्यान् मायिनं तु महेश्वरम् ।
तस्याऽवयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ ( श्वे० ४।१० )

मनसा तु प्रसन्नेन गृह्यते सूक्ष्मदर्शिभिः ( मे० ति० धृतं व्यासवचनम् ) ।

योऽसौ आत्मा अतीन्द्रियेण मनसा ग्रहीतुमशक्यः, 'सूक्ष्मः' सूक्ष्मबुद्धिग्राह्यत्वात् 'सर्वभूतमयः' सर्वस्य तत्प्रभवत्वात् (गो०रा०) । 'सूक्ष्मः' सर्वविकल्पेभ्यः परोऽणीयानणोरपि, तस्मादेव तथाऽव्यक्तोऽनाद्यनन्तः सनातनः—

यस्मात्परं नापरमस्ति किञ्चिद् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्,
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ।
( श्वे० ३।९; महाना० उ० १०।४ )

अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः ।
तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥
( श्वे० ३।२०; कठ० १।२।२०; महाना० ८।३; कैव० २० )

यः सर्वपरिकल्पानामाभासेऽप्यनवस्थितः,
तर्कागमानुमानेन बहुधा परिकल्पितः ।
व्यतीतो भेदसंसर्गौ भावाभावौ क्रमाक्रमौ,
सत्यानृते च विश्वात्मा प्रविवेकात्प्रकाशते ।
अन्तर्यामी स भूतानामाराद् दूरे च दृश्यते,
सोऽत्यन्तमुक्तो मोक्षाय मुमुक्षुभिरुपास्यते ॥
प्रकृतित्वमपि प्राप्तान् विकारानाकरोति सः,
ऋतुधामेव ग्रीष्मान्ते महतो मेघसंप्लवान् ।
तस्यैकमपि चैतन्यं बहुधा प्रविभज्यते,
अङ्गाराङ्कितमुत्पाते वारिराशेरिवोदकम् ॥
तस्मादाकृतिगोत्रस्थाद् व्यक्तिग्रामाविकारिणः,
मारुतादिव जायन्ते वृष्टिमन्तो बलाहकाः ।
शान्तविद्यात्मकं योंऽशस्तदु हैतदविद्यया,
तयाग्रस्तमिवाजस्रं या निर्वक्तुं न शक्यते ॥
सर्वतः परिवर्तानां परिमाणं न विद्यते,
तस्या या लब्धसंस्कारा न स्वात्मन्यवतिष्ठते ।
यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः,
संकीर्णमिव मात्राभिश्चित्राभिरभिमन्यते ॥
तथेदममृतं ब्रह्म निर्विकारमविद्यया, ,
कलुषत्वमिवापन्नं भेदरूपं विवर्तते ।

वाक्यपदीये धृतं प्राचीनतमार्षवचनमेतत्प्रतिभाति । अत्रत्यमाद्यश्लोकद्वयं मेधातिथिनाऽपि स्वमनुभाष्ये ( १।७ ) उद्धृतं दृश्यते ।

सः सर्वभूतमयः "मया स्रष्टव्यमस्तीदं सर्वभूतमयं जगत्" इति संकल्पत्वात्। यद् भावयति योऽत्यन्तं स हि तन्मयः कथितः, यथा च 'स्त्रीमयः' कामी, भक्तो देवमयः पुमान्। सर्वभूतमयः सर्वभूताश्रयात्; श्रद्धामयो हि श्रद्धालुः, दयालुश्च दयामयः। परमात्मा विकारो स्यान्मृत्पिण्डो मृण्मये यथा। परमात्मनः शरीरं त्रिगुणं प्रधानं प्रोक्तम्। सर्वकारणकारणे सर्वभूतमयोक्तिः। सर्वभूतविवर्तानामधिष्ठानतयाऽथवा तत्त्वतोऽद्वैतभावत्वात्सर्वभूतमयो[1] विभुः। कारणाभिन्नरूपेण कार्यं कारणमेव हि। सद्रूपेण सदा सत्यं भेदेनोक्तिर्मृषा खलु। भेदाऽनिरूपणादेव भेदाऽभेदो न सङ्गतः, अतश्च कारणं नित्यमेकमेवाऽद्वयं सुराः। प्रतीत्या केवलं शक्तिरचिद्रूपा तमोमया, सर्वप्रकारैर्विद्वद्भिरनिरूप्याऽस्ति शाङ्करी; तया दुर्घटकारिण्या तादात्म्येनैव संगतम्, कारणं सकलस्रष्टृसर्वसंहर्तृपालकम्।

( सूतसंहितायां ब्रह्मगीता अ० ५ )

एकमेव यदाम्नातं भिन्नशक्तिव्यपाश्रयात्।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते॥
अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः।
जन्मादयो विकाराः षड्भावभेदस्य योनयः॥[2]
एकस्य सर्वबीजस्य यस्य चेयमनेकधा।
भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः॥

( वाक्यपदीये १।२-४ )

## जगत्सर्गार्थं परमात्मनोऽभिध्यानम्, अपां सृष्टिः, तत्र बीजाधानम्, तस्याऽण्डाकारपरिणामस्ततो ब्रह्मण आविर्भावः

---

१—बृ० आ० उ० ३।७।

२. "षड्भावविकारा भवन्तीति वार्ष्यायणिः—जायते, अस्ति, विपरिणमते, वर्द्धते, अपक्षीयते, विनश्यतीति—अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्तीति ह स्माह" ( निरुक्त १।२-३ )।

"अन्येषामपि भावविकाराणां त्रिष्वेवान्तर्भाव इति जन्मस्थितिनाशानामिह ग्रहणम्; यास्कपरिपठितानां तु 'जायते अस्ति' इत्यादीनां ग्रहणे तेषां जगतः स्थितिकाले संभाव्यमानत्वाद् मूलकारणादुत्पत्तिस्थितिनाशा जगतो न गृहीताः स्युरिति आशङ्क्येत, तन्मा शङ्कीति योत्पत्तिर्ब्रह्मणस्तत्रैव स्थितिः प्रलयश्च त एव गृह्यन्ते 'इति' जन्माद्यस्य यतः ( १।१।२ ) इति ब्रह्मसूत्रभाष्ये शङ्कराचार्यः।

अद्वैतदर्शने नैव चेतनाऽचेतनानिभूतानि पृथक्त्वेन सन्ति, तस्यैवायं विवर्तः अतो विवर्तानां भूतमयत्वात्, तैश्च तस्याभेदाद् युक्तमेव तन्मयत्वम्।......यथा समुद्राद्-वायुनाऽभिहता ऊर्मयः समुत्तिष्ठन्ति, ते च न ततो भिद्यन्ते, नापि लिप्यन्ते, सर्वत्रा भेदाऽभेदाभ्यामनिर्वाच्याः, एवमयं ब्रह्मणो विश्वविवर्तः ( मनु० १।७-मेधातिथिः )।

स स्वदेहात्प्रधानाख्यात्स्रष्टुमिच्छन्महन्मुखाः नानारूपाः प्रजा आदौ संकल्पादप आसृजत् । तासु 'बीजं' क्रियाशक्तिस्वरूपं जगदङ्कुरम्, न्यषिञ्चत्, तदभूदण्डं तत्र ब्रह्मा व्यजायत । 'तदैक्षत बहुस्यां प्रजायेयेति ( छा० उ० ६।२।३ ); स ईक्षत लोकान्नु सृजा इति' ( ऐ० उ० १।१।१ ); स ईक्षां चक्रे ( प्रश्न० ६।३ ); सोऽकामयत ( तै० उ० २।६ ) इत्यादि सर्गार्थं परमात्मनोऽभिध्यानमीक्षणरूपमनुसन्धेयम् । अत एव "ईक्षतेर्नाऽशब्दम्" ( १।१।५ ) "कामाच्च नानुमानापेक्षा" ( १।१।१८ ) "तदभिध्यानादेव तु तल्लिङ्गात्सः" ( २।३।१३ ) इति वेदातसूत्राणि ।

इह यद्यपि यं कमपि पुरुषार्थमर्थयमानाः शुद्धबुद्धस्वभाव इत्यौपनिषदाः, आदिविद्वान् सिद्ध इति कापिलाः, क्लेशकर्मविपाकाऽऽशयैरपरामृष्टो निर्माणकायमधिष्ठाय सम्प्रदायद्योतकोऽनुग्राहकश्चेति पातञ्जलाः, लोकवेदविरुद्धैरपि निर्लेपः स्वतन्त्रश्चेति महापाशुपताः, शिव इति शैवाः, पुरुषोत्तम इति वैष्णवाः, पितामह इति पौराणिकाः, यज्ञपुरुष इति याज्ञिकाः, सर्वज्ञ इति सौगताः, निरावरण इति दिगम्बराः, उपास्यत्वेन देशित इति मीमांसकाः, लोकव्यवहारसिद्ध इति चार्वाकाः, यावदुक्तोपपन्न इति नैयायिकाः, किं बहुना, यं कारवोऽपि विश्वकर्मेति उपासते, तस्मिन्नेवं जातिगोत्रप्रवरचरणकुलधर्मादिवदासंसारं सुप्रसिद्धाऽनुभवे भगवति भवे सन्देह एव कुतः, किं निरूपणीयम् ? तथापि न्यायचर्चेयमीशस्य मननव्यपदेशभाक् उपासनैव क्रियते श्रवणान्तरागता । अद्वैतदर्शने प्रधानमेव तस्येदं शरीरं तदिच्छाऽनुवर्तित्वात्, स्वतःशरीरनिर्माणहेतुत्वाच्च । अव्याकृतमेव प्रकृतिस्तदेव तस्य शरीरम् । अव्याकृतशब्देन पञ्चभूतबुद्धीन्द्रियकर्मेन्द्रियप्राणमनःकर्माऽविद्यावासना एव सूक्ष्मरूपतया शक्त्यात्मना स्थिता अभिधीयन्ते; अव्याकृतस्य च ब्रह्मणा सह भेदाऽभेदस्वीकाराद् 'ब्रह्माद्वैतं' शक्त्यात्मना च ब्रह्म जगद्रूपतया परिणमते ।[१]

एतदण्डकथा किञ्चिद्भिन्नशब्दार्थपद्धतिर्वेदशास्त्रेतिहासेषु बहुत्राऽस्ति प्रपञ्चिता[२] । 'स ईक्षत इमे नु लोकालोकपालान्नु सृजा' इति; सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत; तमभ्यतपत्, तस्याभितप्तस्य मुखं निरभिद्यत, यथा अण्डम् ( ऐ० उ० १।३-४ ) ।

निष्प्रभेऽस्मिन्निरालोके सर्वतस्तमसावृते ।
बृहदण्डमभूदेकं प्रजानां बीजमव्ययम् ॥

---

१. गो० ब्रा० पू० प्रपाठ १; दे० भा० ९।३।२१ नीलकण्ठः; मनु० १।८ मे० ति०. मन्वर्थमु० १।९; निघण्टुः १।३ ।

२. छान्दो० उ० ३।१९।१-२; अथर्वशिर० ६; मैत्रा० उ० ६।८; महोपनिषदि१; भा० २।५।३४-३६; २।६।२१-२२; २।१०।१०-११; ३।६।६; ३।२०।१२-१६; ३।११।३९-४१; १०।१४।११; ११।१६।३९; ११।२४।९-११; वि० पु० १।२।५४-६१ । सर्वेषु पुराणेषूपपुराणेषु चाण्डोपाख्यानं दृश्यते ।

युगस्यादौ निमित्तं तन्महद्दिव्यं प्रचक्षते ।
यस्मिन् संश्रूयते सत्यं ज्योतिर्ब्रह्म सनातनम् ॥
अद्भुतं चाऽप्यचिन्त्यं च सर्वत्र समतां गतम् ।
अव्यक्तं कारणं सूक्ष्मं यत्तत्सदसदात्मकम् ॥
यस्मात्पितामहो जज्ञे प्रभुरेकः प्रजापतिः ।
ब्रह्मा सुरगुरुः स्थाणुर्मनुः कः परमेष्ठ्यथ ।

( महा० भा० १।१।२९-३२ )

ततो ब्रह्माणमसृजद्धिरण्यभाण्डसमुद्भवम् ॥
सा मूर्त्तिः सर्वभूतानामित्येवमनुशुश्रुम ॥
संवत्सरमुषित्वाऽण्डे निष्क्रम्य च महामुनिः ।
संदधे स महीं कृत्स्नां दिवमूर्ध्वं प्रजापतिः ॥
छायापृथिव्योरित्येष राजन् वेदेषु पठ्यते ।
तयोः शकलयोर्मध्यमाकाशमकरोत्प्रभुः ॥

( म० भा० शां० ३११।३-५ )

एवमण्डपदार्थोऽपि नानारूपः प्रकल्पितः—"डिम्भो ब्रह्माण्डमाकाशो भूतपिण्ड" इतीदृशः[1] । यथा महाभारते—

---

१. अथ सा कृष्णचिच्छक्तिः कृष्णाद् गर्भं दधार ह ।
सुषाव डिम्भं स्वर्णाभं विश्वधारालयं परम् ॥
दृष्ट्वा डिम्भं च सा देवी हृदयेन व्यदूयत ।
उत्ससर्ज च कोपेन ब्रह्माण्डगोलके जले ॥
अथ डिम्भो जलेऽतिष्ठद् यावद्वै ब्रह्मणो वयः ।
ततः स काले सहसा द्विधाभूतो बभूव ह ॥
तन्मध्ये शिशुरेकश्च शतकोटिरविप्रभः ।
स्थूलात् स्थूलतमः सोऽपि नाम्ना देवो महाविराट् ॥
महाविराड् लोमकूपे ब्रह्माण्डगोलके जले ।
बभूव च विराट्क्षुद्रो विराडंशेन साम्प्रतम् ॥
तन्नाभिकमले ब्रह्मा बभूव कमलोद्भवः ।

( दे० भा० स्कं० ९ अ० २-३ )

इमे श्लोका 'डिम्भ' शब्द स्थाने अण्डशब्दं पठित्वा, किञ्चित्पाठभेदेन च सह ब्रह्मवैवर्त्तेऽपि ( प्रकृति० अ० २-३ ) सन्ति । 'डिम्भोऽपि बालिशे बाले' इति मेदिनीकोशात् 'डिम्भो' बालो यो राधया पूर्वं स्वस्माज्जातो जले प्रक्षिप्तः । स यावद् ब्रह्मणो वयस्तावत्परिमितकालपर्यन्तं जलेऽतिष्ठत् । ततः स बालकः 'काले' पूर्णसमये जाते सति द्विधा भूतो बभूव, तदण्डं निर्भिद्य बहिर्निर्गतः । अनेन ग्रन्थेन पूर्वं राधाया उदरात् पक्ष्यण्डवद् अण्डरूपेण निर्गतः । स च बृहदण्डरूपो भयात्तया जले क्षिप्तः, तदण्डं बहुना कालेन पुनर्निभिन्नं सद् द्विधा जातम्, तन्मध्ये पुरुषो बालकरूपोऽथ स्थित इति भाति । पुराणान्तरे "तद् अण्डम् उदकेशयम्" इत्यादिना तथैव श्रुतिपादनाच्च ।

तथा प्रजापतिर्ब्रह्मा अव्यक्तः प्रभुरव्ययः ।
येनेदं निखिलं विश्वं जनितं स्थावरम् चरम् ॥
अण्डजातं तु ब्रह्माणं केचिदिच्छन्त्यपण्डिताः ।
अण्डाद् भिन्नाद् बभुः शैला दिशोऽम्भः पृथिवी दिवम् ॥
द्रष्टव्यं नैतदेवं हि कथं जायेद् अजो हि सः ।
स्मृतमाकाशमण्डं तु तस्माज्जातः पितामहः ॥
तिष्ठेत्कथमिति ब्रूहि न किञ्चिद्धि तदा भवेत् ।
अहङ्कार इति प्रोक्तः सर्वतेजोगतः प्रभुः ॥
नास्त्यण्डम् अस्ति तु ब्रह्मा……… ।

( अनु० १५३।१५-१९ )

ननु ब्रह्माण्डे जातत्वात् कथमण्डमजनयत् ? इत्यत्राह अण्डेति, केचिदिति, तन्न इत्यर्थः । दूषयति द्रष्टव्यम् इति; अजत्वादेव ब्रह्मा न अण्डजातः, अण्डजत्ववचनं त्वस्य प्रकाराणान्तरेणेत्याह—स्मृतमिति । आकाशमव्याकृतम् । आकाशजः पितामहः किमाश्रयेण तिष्ठेदिति चेत् कश्चिद् ब्रूयात्, तं प्रति ब्रूहि—तदा न किञ्चिद् भवेद् इति । पितामहस्य निरधिष्ठानत्वे सति तज्जमिदं सर्वं शून्यमेव स्यात्, न किञ्चिद् भूयात् इत्यर्थः । ननु कोऽयं प्रजापतिपदेनोच्यते ? अत आह—अहङ्कार इति प्रोक्त इति । 'प्रभुः' व्यापकः, यतः सर्वतेजो गतः जलचन्द्रन्यायेन कृत्स्नं चैतन्यज्योतिः प्राप्तः । अयं भावः—सुषुप्तिसदृशादव्याकृताकाशादुत्थितोऽहङ्काररूप उपाधिः, तेन साक्षी सर्वात्मनाऽवच्छिन्नः, सोऽयमहङ्कारविशिष्टो बाह्यं व्योमादिकं कल्पितवान् ।

इह इदानीं चतुर्णां महाभूतानां सृष्टिसंहारविधिरुच्यते । ब्राह्मेण मानेन वर्षशतान्ते वर्तमानस्य ब्रह्मणोऽपवर्गकाले संसारखिन्नानां सर्वप्राणिनां निशि विश्रामार्थं सकलभुवनपतेर्महेश्वरस्य संजिहीर्षासमकालं शरीरेन्द्रियमहाभूतोपनिबन्धकानां सर्वात्मगतानामदृष्टानां वृत्तिनिरोधे सति महेश्वरेच्छात्माणुसंयोगजकर्मभ्यः शरीरेन्द्रियकारणाणुविभागेभ्यस्तत्संयोगनिवृत्तौ तेषामापरमाण्वन्तो विनाशः, तथा पृथिव्युदकज्वलनपवनानामपि महाभूतानामनेनैव क्रमेण उत्तरस्मिन्नुत्तरस्मिन् सति पूर्वस्य पूर्वस्य विनाशः, ततः प्रविभक्ताः परमाणवोऽवतिष्ठन्ते; धर्माधर्मसंस्काराऽनुविद्धा आत्मानश्च तावन्तमेव कालम् ।

ततः पुनः प्राणिनां भोगभूतये महेश्वरसिसृक्षाऽनन्तरं सर्वात्मगतवृत्तिलब्धाऽदृष्टापेक्षेभ्यस्तत्संयोगेभ्यः पवनपरमाणुषु कर्मोत्पत्तौ तेषां परस्परसंयोगेभ्यो द्व्यणुकादिप्रक्रमेण महान् वायुः समुत्पन्नो नभसि दोधूयमानस्तिष्ठति । तदनन्तरं तस्मिन्नेव वायौ आप्येभ्यः परमाणुभ्यस्तेनैव क्रमेण महान् सलिलनिधिरुत्पन्नः पोप्लूयमानस्तिष्ठति । तदनन्तरं तस्मिन्नेव सलिलनिधौ पार्थिवेभ्यः परमाणुभ्यः (द्व्यणुकादिप्रक्रमेण समुत्पन्ना)

महापृथिवी संहता घनीभूताऽवतिष्ठते। तदनन्तरं तस्मिन्नेव महोदधौ तैजसेभ्योऽणुभ्यो द्व्यणुकादिक्रमेण समुत्पन्नो महांतेजोराशिः केनचिदनभिभूतत्वाद् देदीप्यमानस्तिष्ठति।

एवं समुत्पन्नेषु चतुर्षु महाभूतेषु महे-( परमे )-श्वरस्य अभिध्यानमात्रात् ( इच्छामात्रात्, न तु व्यापारान्तरात् ) तैजसेभ्योऽणुभ्यः पार्थिव-( वादि )-परमाणुसहितेभ्यो महद् 'अण्डम्' उत्पद्यते ( अरभ्यते ); तस्मिंश्चतुर्वदनकमलं सर्वलोकपितामहं ब्रह्माणं सकलभुवनसहितमुत्पाद्य प्रजासर्गे विनियुङ्क्ते[1]। स च महेश्वरेण विनियुक्तो 'ब्रह्मा' अतिशयज्ञानवैराग्यैश्वर्यसम्पन्नः सर्वप्राणिनां कर्मविपाकं विदित्वा कर्मानुरूपज्ञानवैराग्यभोगायुषः सुतान् प्रजापतीन् मानसान्, मनुदेवर्षिपितृगणान्, मुखबाहूरुपादतश्चतुरो वर्णान् अन्यानि चोच्चावचानि[2] भूतानि च सृष्ट्वा आशया-( वासना )-अनुरूपैर्धर्मज्ञानवैराग्यैश्वर्यैः संयोजयति[3]।

स्थूलशरीरोत्पत्तिरुच्यते। दशगुणितमहत्तत्त्वमध्ये अहङ्कारः, अहङ्कारस्यापि दशगुणितस्य मध्ये व्योम, व्योम्नोऽपि दशगुणितस्य मध्ये वायुः, वायोरपि दशगुणितस्य मध्ये तेजः, तेजसोऽपि दशगुणितस्य मध्ये जलम्, जलस्याऽपि दशगुणितस्य मध्ये पृथिवी समुत्पद्यते। सैव स्थूलशरीरस्य बीजम्; तदेव च पृथिवीरूपं बीजम् 'अण्डरूपेण' परिणमते। तस्यापि दशगुणितस्याऽण्डरूपस्य पृथिव्यावरणस्य मध्ये चतुर्दशभुवनात्मकं स्वयंभुवः स्थूलशरीरम्, तत्संकल्पादेव, उत्पद्यते। तेनैव शरीरेण स्वयम्भूः 'नारायण' इत्युच्यते। तदुक्तं मनुना स्वयभुवं प्रकृत्य—

सोऽभिध्याय शरीरात् स्वात्सिसृक्षुर्विविधाः प्रजाः।
अप एव ससर्जादौ तासु बीजमवाऽसृजत्॥

१. एवमनन्तरोक्तेन प्रक्रमेण महाभूतेषु 'महेश्वरस्याऽभिध्यानमात्रात्' संकल्पमात्रात्, तैजसेभ्यः परमाणुभ्यः पार्थिवपरमाणुसहितेभ्यो 'महद् अण्डं' महद् विम्बेमारभ्यते। विम्बारम्भे पार्थिवा अवयवा उपष्टम्भकाः, तेनेदं वह्निपुञ्जप्रायं नाऽभूत्। तस्मिन्नण्डे चत्वारिवदनकमलानि यस्य तं ब्रह्माणं 'सर्वलोकपितामहम्' सर्वेषामेव लोकानामाद्यं पुरुषम्, समस्तैर्भुवनैः सहोत्पाद्य प्रजानां 'सर्ग' जनने, 'विनियुङ्क्ते' त्विदं कुर्विति ( न्यायकन्दली )।

२. अत्रेदं बोध्यम्—एषा हि आदिसृष्टिरयोनिजैव; तत्र 'उच्चा' धर्मविशेषसहकृतेभ्योऽणुभ्यः, 'अवचा' च अधर्मविशेषसहकृतेभ्यो जायते। 'ब्रह्मा' अयोनिजः अतिशयितधर्मविशेषसहकृतेभ्योऽणुभ्यो जायते, ईश्वराऽभिध्यानमात्रात् ( प्रशस्त० टिप्प० पृ० १९ )।

३, प्रशस्तपादभाष्ये द्रव्यग्रन्थे सृष्टिसंहारविधिनिरूपणम् पृ० ४८-४९। पदार्थमालायां कालनि० पृ० ९३।
तत्त्वावल्यां परि० ५ पृ० १२६-१२७ न्या० को०।

तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः[१] ॥
स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्तत[२] ॥

'आपो नारा इति प्रोक्ता, आपो वै नरसूनवः, ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः' इत्यादिनेति । तत एव चादिपुरुषाद् व्यष्टिपुरुषाणां विभागाद्, अन्ते च तत्रैव लयात्, स एव चैक आत्मेति श्रुतिस्मृत्योर्व्यवह्रियते । अतो न व्यवहारतया 'नारायण एव सर्वभूतानामात्मेति' श्रुतिस्मृतिविरोध इति । ततश्च स नारायणो विराट्शरीरी पृथिवीरूपस्वनाभिकमलकर्णिकास्थानीयस्य सुमेरोरुपरि चतुर्मुखाख्यस्वयंभुवमवान्तर-ब्रह्माणं सृष्ट्वा तद्द्वारा अन्यानपि व्यष्टिशरीरिणः स्थावरान्तरान् ससर्ज । तथा च स्मर्यते—

तच्छरीरसमुत्पन्नैः कार्यैस्तैः कारणैः सह ।
क्षेत्रज्ञाः समजायन्त गात्रेभ्यस्तस्य धीमतः[३] ॥

एवं पञ्चीकृतानां भूतानामेव अण्डोत्पादकत्वम् । अण्डोत्पादनात् पूर्वसृष्टिः 'समष्टिसृष्टिः' 'व्यष्टिसृष्टिः' ।........"अण्डं नाम कपित्थफलाकारं पञ्चीकृतपञ्चभूतारब्धं प्राकृतद्रव्यम्"[४] ।

---

१. चतुर्दशभुवनात्मकसमष्टिस्थूलशरीरावच्छिन्नस्य हिरण्यगर्भस्य ब्रह्मणः 'नारायण' संज्ञायां मनुवाक्यं प्रमाणयति--'सोऽभिध्याय' इति । तदर्थश्च--'सः' समष्टिसूक्ष्मशरीराऽवच्छिन्नः परमात्मा, विविधाः प्रजाः 'सिसृक्षुः' स्रष्टुमिच्छुः, 'अभिध्याय' 'बहु स्याम्, प्रजायेयम्' 'आपो जायन्ताम्' इत्याद्येवंरूपेण स्वसंयोगात्मकेन अभिध्यानमात्रेण, 'स्वात् शरीरात्' अव्याकृतरूपात् स्वतोऽविभक्तात् प्रधानादिरूपात्, शरीरात्, 'आदौ' पृथिवीसृष्टेः प्राक् महदादिसृष्टेः परम्, अपः जलम्, ससर्ज सृष्टवान्; तासु अप्सु, 'बीजं' पृथिवीरूपम् 'अवासृजत्' आरोपितवान् । एतेन प्रकृतिपुरुषसंयोगात् प्रकृतेः प्रथमपरिणामरूपा आदिसृष्टेः प्रोक्ता । 'तद्' बीजं पृथिवीरूपं 'हैमं' हैममिव हैमं शुद्धिगुणयोगाद् विशुद्ध-रूपम्, अतएव 'सहस्रांशुसमप्रभम्'। अण्डम्' चतुर्दशभुवनावरणभूतं स्वयभुवः स्थूल-शरीरमभवत् । 'तस्मिन्' अण्डे समष्टिस्थूलशरीरे, 'सर्वलोकपितामहः' स्वांशद्वारा सकलपुरुषव्यष्टिस्थूलशरीरजनकः, 'ब्रह्मा' विराडाख्यः, 'जज्ञे' प्रकटीभूतः । तस्यैव आदिशरीरित्वे प्रमाणमाह--'स वै शरीरी प्रथमः' इति । तस्य नारायणसंज्ञायां बीजमाह--आपः इति ( सांख्यसारविवेकप्रदीपे पृ० ९४-९५ )।

२. इह मानवीयत्वेन समुद्धृतः एष श्लोकः साम्प्रतमुपलब्धमनुस्मृतौ न दृश्यते । कूर्मपुराणे ( पूर्ववि० ४ श्लो० ३८ ); वा० पु० ४ । ७७; लैङ्गमार्कण्डयोश्च नूपलभ्यते ।

३ सांख्यसारे पूर्वभा० तृ० प० पृ० ९४-९६; सांख्यतत्त्वविवेचने पृ० ३९-४१; तत्त्वयाथार्थ्यदी० पृ० ६८-६९ ।

४. यतीन्द्रमतदी० अवता० ४ प्रकृतिनि० पृ० ४६-४७ ।

'तस्यानेकमुपपादनं तेजो वीर्यं परात्मनः। भूः पञ्चीकृतभूतानीत्यादि शास्त्रेषु विश्रुतम्। तदुत्पत्तेः प्रकारश्च क्रमश्चाऽपि बहुः स्मृतः। तथैवाण्डस्वरूपं च भिन्नभिन्नं निरूपितम्। सर्वभूतमयं हैमं चैवादिकम्। क्वचित्तद् ब्रह्मणः कार्यं कारणं च क्वचिन्मतम्—

नानावीर्याः पृथग्भूताः सप्तैते संहतिं विना।
नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः॥
समेत्यान्योन्यसंयोगमन्योन्याश्रयिणश्च ते।
एकसंघातचिह्नाश्च सम्प्राप्तैक्यमशेषतः॥
पुरुषाधिष्ठितत्वाच्च अव्यक्तानुग्रहेण च।
महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते॥
जलबुदबुदवत्तत्र क्रमाद्वै वृद्धिमागतम्।
भूतेभ्योऽण्डं महाबुद्धेः बृहत्तदुदकेशयम्॥
प्राकृतेऽण्डे विवृद्धः सन् क्षेत्रज्ञो ब्रह्मसंज्ञितः।
स वै शरीरी प्रथमः स वै पुरुष उच्यते॥
आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत।
तेन सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम्॥
मेरुस्तस्यानुसंभूतो जरायुश्चाऽपि पर्वताः।
समुद्रा गर्भसलिलं तस्याऽण्डस्य महात्मनः॥
तस्मिन्नण्डे जगत्सर्वं सदेवाऽसुरमानुषम्।
द्वीपाद्याद्रिसमुद्रांश्च स ज्योतिर्लोकसंग्रहः॥

( मार्कण्डेय० ४५।५९-६६; वि० पु० १।२; ५२-५८; कूर्म० पु० अ० ४; लिं० पु० पूर्व० ७०।५१-६६; वा० पु० प्रक्रियापादे अ० ४ श्लो० ७३-८३ )

अस्मिन्विषयेऽप्येवं 'मिथो भिन्नार्थवद्वचः' यथा सर्गनिरूपणे पुराणादिषु भूयोऽस्ति। तदेतन्मतभिन्नत्वं कल्पभेदात् समाहितम्,अन्तःसर्गपराद्वा, वैश्वरूप्यात्परात्मनः। नारायणं प्रति ब्रह्मोक्तिः—

त्वत्तो मे मानसं जन्म प्रथमं द्विजपूजितम्।
चाक्षुषं वै द्वितीयं मे जन्म चासीत् पुरातनम्॥
त्वत्प्रसादात्तु मे जन्म तृतीयं वाचिकं महत्।
त्वत्तः श्रवणजं चाऽपि चतुर्थं जन्म मे विभो॥
नाऽसत्यं चाऽपि मे जन्म त्वत्तः पञ्चममुच्यते।
अण्डजं चाऽपि मे जन्म त्वत्तः षष्ठं विनिर्मितम्॥
इदं च सप्तमं जन्म पद्मजन्मेति वै प्रभो।
सर्गे सर्गे ह्यहं पुत्रस्तव त्रिगुणवर्जितः॥

( महा० शां० ३४७।४०-४३ )

क्वचित् क्वचित् पुराणेषु विरोधो यदि लभ्यते ।
कल्पभेदादिभिस्तत्र व्यवस्था सद्भिरिष्यते ॥
( ब्र० वै० पु० द्वितीयभागस्य भूमिका )

कल्पभेदेनोभयमपि उपपद्यते । यथा पुराणेषु क्वचित् शिवाद् ब्रह्मविष्णोरुत्पत्तिः, क्वचित्तु ब्रह्मणः सकाशात् शिवविष्णोः, क्वचिद् गणेशाद् एतेषां त्रयाणाम्, तथा सूर्यादेतेषां त्रयाणाम्, कल्पभेदेनोत्पत्तिरभिहिताः, अत्र तु एकस्मिन्नेव पुराणे भिन्ना प्रक्रियाऽभिहितेति जनमेजयस्यैकस्य श्रोतुर्व्यामोहः स्यादिति चेद् ? न; महाभारते शिवमाहात्म्यप्रकरणे शिवस्य ब्रह्मविष्णुकारणत्वम्, विष्णुमाहात्म्यप्रकरणे विष्णोरेव ब्रह्मरुद्रकारणत्वमिति मर्यादाया एकस्मिन्नपि पुराणे दृष्टत्वात्; एवमेव कूर्मपुराणादिषु कल्पभेदेन सृष्टिभेदस्यैकपुराणे एव दृष्टत्वाच्च ।

ननु तथाऽपि श्रोतुर्व्यामोहः कथं न भवतीति चेद् ? न; उभयोर्विरुद्धयोः प्रतिपादनेन, सृष्टेर्मायिकत्वेन मिथ्यात्वात्, मिथ्यापरार्थे श्रुतेः पुराणादीनां च नाग्रह इति श्रोतुर्बोधसंभवात्; यथेन्द्रजालं कस्मादुत्पन्नमिति विमर्शे, न तत्र किञ्चित् कारणं मायाऽतिरिक्तं लभ्यते; तथाऽत्राऽपि सृष्टौ मायैव मुख्यं कारणमिति बोधनार्थमेव व्यासेन तथोक्तत्वाच्च ।

यद्येकविधैव सृष्टिः, तस्याश्च कारणमेकविधमेव प्रतिपाद्येत ; तदा जगतः सत्यत्वशंकाऽपि स्यात्; सा मा भवतु, किन्त्वनिर्वचनीयमेव जगद्भवतीति अनिर्वचनीयत्वज्ञानार्थं विविधसृष्टिप्रतिपादनस्य विविधकारणप्रतिपादनस्याऽवश्यकत्वाच्च ।

तदुक्तं गौणपादाचार्यैः—

मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा ।
उपायः सोऽवताराय नास्ति भेदः कथञ्चन ॥
( गौ० पा० का० ३।१५ )

व्याख्यातं भाष्यकारैः –

"मृल्लोहविस्फुलिंगादिदृष्टान्तोपन्यासैः सृष्टिर्या 'चोदिता' प्रकाशिता, अन्यथा च सर्वसृष्टिप्रकारो जीवपरमात्मैकत्वबुद्धयवताराय उपायोऽस्माकम् । यथा प्राणसंवादे वागाद्यासुरपाप्मवेधाद्याख्यायिका कल्पिता प्राणमुख्यत्वबोधनाय ( प्राणवैशिष्टयबोधावताराय ) तदपि असिद्धमिति चेत् ? न, शाखाभेदेष्वन्यथा प्राणिसंवादश्रवणात् । यदि हि संवादः परमार्थ एवाऽभूत्, एकरूप एव संवादः सर्वशाखास्वश्रोष्यत्, विरुद्धानेकप्रकारेण नाऽश्रोष्यत्; श्रूयते तु; तस्मान्न तादर्थ्यं संवादश्रुतीनाम् । तथा उत्पत्तिवाक्यानि प्रत्येतव्यानि ।"[१]

---

१. दे० भा० नीलकण्ठटीका स्कं० ९ उपोद्घाते ।

इमामेव गौणपादीयकारिकामुपादाय तैत्तिरीयारण्यकभाष्ये[१] सायणाचार्योऽपीत्थमाह—

न हि सृष्टिरुपास्यत्वेन ज्ञेयत्वेन वा स्वतन्त्रपुरुषार्थाय कल्पते; 'सृष्टिमुपासीत', 'सृष्टिवित् श्रेयः प्राप्नोति' इत्येवं वचनाऽभावात्। अत एव श्रुतिस्मृतिपुराणागमेषु परस्परविरोधेन बहुधा कथ्यमाना सृष्टिः सर्वा अपि वार्त्तिककारैरङ्गीकृता—

यथा यथा भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि।
सा सैव प्रक्रियेह स्यात्साध्वी सा चाऽनवस्थिता॥

इति। न बहुभिर्दृष्टेषु बहुविधस्वप्नेषु कश्चिदेवाऽङ्गीकार्यः, न त्वितरेऽङ्गीकार्या इति नियमोऽस्तीति।

यत्तु शेषशायिनो नारायणस्य नाभिकमलश्रोत्रचक्षुरादिभ्यश्चतुर्मुखस्याविर्भावः श्रूयते, तद् दैनन्दिनसर्गेष्वेव कल्पभेदेन मन्तव्यम्। दैनन्दिनप्रलयेष्वेव हि नारायणशरीरे प्रविश्यैकीभूय सुप्तानां देवानां चतुर्मुखादिक्रमेणाऽऽविर्भावः शेषशायिनः सकाशाद् घटते, न त्वादिसर्गेषु। दैनन्दिनप्रलय एव लीलाविग्रहेण शयनात्।[२]

मायावादिमते सृष्टिक्रमनानात्वदर्शनं जगतो वास्तवत्वस्य द्योतनार्थमिति स्थितम्। तत्तद् ब्रह्मादिजन्मनः प्रकारक्रमभेदो वा शास्त्रेषु निरूपितः स्यात्, ब्रह्माण्डानामनन्तत्वात्—

आधारः सर्वविश्वानां महाविष्णुश्च प्राकृतः।
प्रत्येकं लोमकूपेषु विश्वानि निखिलानि च।
अस्याऽपि तेषां संख्यां च कृष्णो वक्तुं न हि क्षमः॥
संख्या चेद्रजसामस्ति विश्वानां न कदाचन।
ब्रह्मविष्णुशिवादीनां तथा संख्या न विद्यते॥
प्रतिविश्वेषु सन्त्येवं ब्रह्मविष्णुशिवादयः।
पातालाद् ब्रह्मलोकान्तं ब्रह्माण्डं परिकीर्तितम्॥
सप्तद्वीपमिता पृथ्वी सप्तसागरसंयुता।
ऊनपञ्चाशदुपद्वीपाऽसंख्यशैलवनान्विता॥
ऊर्ध्वं सप्त स्वर्गलोका ब्रह्मलोकसमन्विताः।
पातालानि च सप्ताऽधश्चैवं ब्रह्माण्डमेव च॥

---

१. प्रपा० ८ अनु० २।
२. सांख्यसारे पू० भा० परि० ३ पृ० ९६-९७; सां० त० वि० पृ० ५१; तत्त्वयाथार्थ्यदी० पृ० ६९।

एवं सर्वं कृत्रिमं च बाह्याभ्यन्तरमेव च।
जलबुदबुदवत्सर्वं विश्वसंघमनित्यकम् ॥
( दे० भा० स्कं० ६ अ० ३; ब्र० वै० प्र० अ० ३ )

सर्गे सर्गे पृथग्रूपं सन्ति सर्गान्तराण्यपि।
तेष्वन्तःस्थसर्गौघाः कदलीदलपीठवत् ॥

चिद्घनैकघनात्मत्वाज्जीवान्तर्जीवजातयः ।
कदलीदलवत्सन्ति कीटा इव धरोदरे ॥

त्रिजगच्चिदणावन्तरस्ति स्वप्नपुरं यथा।
तस्याऽप्यन्तश्चिदणवस् तेष्वप्येकैकशो जगत् ॥

आकाशे परमाण्वन्तर्द्रव्यादेरणुकेऽपि च।
जीवाणुर्यत्र तत्रेदं जगद् वेत्ति निजं वपुः ॥

अन्तरन्तस्तदन्तश्च स्वकोशेऽप्यणुकं प्रति।
जातानि जायमानानि कदलीदलपीठवत् ॥

जगतोऽन्तरहं रूपमहं रूपान्तरे जगत्।
स्थितमन्योऽन्यवलितं कदलीदलपीठवत् ॥

परमाणुनिमेषाणां लक्षांशकलनास्वपि।
जगत्कल्पसहस्राणि सत्यानी वविभान्त्यलम्॥

तेष्वप्यन्तस्तथैवान्तः परमाणुकणं प्रति।
भ्रान्तिरेवमनन्ताऽहो इयमित्यवभासते ॥

अणावणावसंख्यानि तेन सन्ति जगन्ति खे।
तेषां तान् व्यवहारौघान् संख्यातुं क इव क्षमः ॥

अनन्तानि जगन्त्यस्मिन् ब्रह्मतत्त्वमहाम्बरे।
अम्भोधिवीचिजलवन्निमज्जन्त्युद्भवन्ति च ॥

भूयो भूयो विवर्तन्ते सर्गेष्वप्स्विव वीचयः।
अत्यन्तसदृशाः केचित् केचिदर्धसमक्रमाः ॥

केचिदीषत्समाः, केचिन्न कदाचित्पुनस्तथा।
सर्वासां (?) सृष्टिराशीनां चित्राकारा विचेष्टिताः ॥

दैवमात्रैकसर्गाणि नरमात्रमयानि च।
दैत्यवृन्दमयान्येव कृमिनिर्विवराणि च ॥

कदाचित्सृष्टयः शार्व्यः कदाचित् पद्मजोद्भवाः।
कदाचिदपि वैष्णव्यः कदाचित्मनुनिर्मिताः ॥

भूरभून्मृण्मयी काचित् कदासीद्दृशन्मयी ।
आसीद्धेममयी काचित् काचित्ताम्रमयी तथा ॥

( योगवासिष्ठसारे )

तदेतत्समग्रं पञ्चाशत्कोटिपरिमितं भूगोलं सुप्रतिष्ठितम्, अण्डमध्ये व्यूढम् । तादृशं च शतकोटिविस्तरमण्डं सप्तावरणसहितमपि प्रधानस्याणुरवयवो यथा आकाशे खद्योतः । प्रकृतिं प्रकृत्य—

अण्डानां तु सहस्राणां सहस्राण्ययुतानि च ।
ईदृशानां प्रदृश्यन्ते कोटिकोटिशतानि च ॥

( वि० पु० २।७।२७ )

अत्राण्डप्लवनमप्सु, ततो ब्रह्मणश्चोद्भवः । अप्सु आकाशस्वरूपासु अनिशं यदण्डं प्लवते, तत्र सूर्यात्मको 'ब्रह्मा' भृशं राजते । प्रत्यक्षं हिरण्मयं भास्वद्विम्बाण्डं खे दृश्यते, 'तस्मिन् हिरण्यगर्भोऽयं स्थितो गर्भ इवांशुमान् ।' "तं रुक्मं उपधाति । असौ वा आदित्य एष रुक्मोऽथ य एष एतस्मिन् मण्डले पुरुषः, स एष, तमेवैतदुपदधाति ।.... 'हिरण्यगर्भ-समवर्तताग्र' इति हिरण्यगर्भो ह्येष समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् इत्येष ह्यस्य सर्वस्य भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमामिति एष वैदिकं च पृथिवीं च दाधार । कस्मै देवाय हविषा विधेमेति प्रजापतिर्वै 'कः' तस्मै हविषा विधेमेत्येतत्"[१] ।

आदित्यमण्डलात्मको हि एष रुक्मः, आदित्यमण्डलमध्ये यो हिरण्मयः पुरुष आस्ते, अत एव श्रूयते—**य एष अन्तरादित्ये हिरण्मयः पुरुषो दृश्यते** हिरण्यश्मश्रु-र्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः[२] इति । एष एवोपधीयमानो हिरण्मयः पुरुषः रुक्मरूपे आदित्यमण्डले तमेव पुरुषमुपहितवान् भवति । एषः हिरण्यपुरुषः, सूर्य-मण्डलान्तर्वर्त्ती हिरण्यगर्भः, **अपञ्चीकृतभूततत्कार्याभिमानी परमेश्वरो हि हिरण्यगर्भः** स च हिरण्मयाण्डमध्ये गर्भवदवस्थानात् हिरण्यगर्भ इत्युच्यते ।

"आदित्यो वा एष एतन्मण्डलं तपति, तत्र ता ऋचस्तदृचा मण्डलम्, स ऋचां लोकः; अथ च एष एतस्मिन् मण्डलेऽर्चिषि पुरुषस्तानि यजूंषि, स यजुषा मण्डलम्, स यजुषा लोकः, सैषा त्रय्येव विद्या तपति, य एषोऽन्तरादित्ये हिरण्मयः पुरुषः[३] ।

"आदित्यो वै तेज' ओजो बलं यशश्चक्षुः श्रोत्रमात्मा मनो मन्युर्मनुर्मृत्युः सत्यो मित्रो वायुराकाशः प्राणो लोकपालः कः किं कं तत् सत्यमन्नमायुरमृतो जीवो विश्वः

१. शत० ब्रा० कां० ७ प्र० ३ ब्रा० १ ।
२. छान्दो० ब्रा० ३।६।६।
३. तै० आ० प्रपाठ १० अनु० १३ ।

कतमः स्वयम्भूः प्रजापतिरिति संवत्सरोऽसावादित्यो य एष पुरुष एव भूतानामधिपतिः[१]।"

देवमाता अदितिर्वेदादिषु विश्रुता। तस्या अपत्यमादित्यः। निरुक्तादौ सा अन्तरिक्षादिरूपाः—

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः।
विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्॥

( ऋ० १।८९।१०; अथ० सं० ७।६।१; वा० सं० २५।३३ )

तद्गर्भाण्डस्थितश्चायं मार्त्तण्डो विश्वसृड्ऽमतः। मृते व्यृद्धेरर्थतः शून्ये नभस्यण्डमित्युक्तम्, तद्भवो मार्त्तण्डः—

अष्टौ पुत्रासो अदितेर्ये जातास्तन्वस्परि।
देवाँ उपप्रैत्सप्तभिः परा मार्त्ताण्डमास्यत्॥
सप्तभिः पुत्रैरदितिरुपप्रैत्पूर्व्यं युगम्।
प्रजायै मृत्यवे त्वत्पुनर्मार्त्ताण्डमाभरत्॥

( ऋ० १०।७२।८-९ )

सा अदितिः सप्तभिः पुत्रैर्देवानुपप्रैत्—उपागच्छत्; अष्टमं पुत्रं मार्त्तण्डं सूर्यम्, परास्यद् उपरि पराक्षिपत् इत्यर्थः। अथ 'प्रजायै' प्राणिनामुत्पत्तये, 'मृत्यवे' तेषां मरणाय 'मार्त्ताण्डं' मृताद् व्यृद्धाद् अण्डाज्जातं मार्त्तण्डनामानं सूर्यं 'पुनराभरत्' आहरत् द्युलोके अधारयत्। प्राणिमरणजननादीनां सूर्योदयास्तमयायत्तता स्फुटा इति।

अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत्। तस्या उच्छेषणमददुः। तत् प्राश्नात् सा रेतोऽधत्त। तस्यै चत्वार आदित्या अजायन्त। सा द्वितीयमपचत्, साऽमन्यत—'उच्छेषणान्म इमेऽज्ञत, यदग्रे प्राशिष्यामि, इतोऽपि मे वसीयांसो जनिष्यन्त इति। सा अग्रे प्राश्नात् सा रेतोऽधत्त, तस्यै व्यृद्धमाण्डमजायत। सा अदितेभ्य एव तृतीयमपचत्, योऽस्य प्रजायामृध्याता, अस्माकं भोगाय भवदिति। ततो विवस्वान् आदित्योऽजायत्। तस्य वा इयं प्रजा, यन्मनुष्याः। तास्वेक एवर्द्धो यो यजते, स देवानां भोगाय भवति[२]।

---

१. तै. आ. प्रपा. १० अनु. १४।

२. स सिसृक्षुरभूद्देवः प्रजापतिररिन्दम।
तत्तेजसश्च तत्रैष मार्त्तण्डः समजायत॥
मृतेऽण्डे जायते यस्मान्मार्त्तण्डस्तेन संस्मृतः।
रजोगुणमयं यत्तद्रूपं तस्य महात्मनः॥

मार्त्तण्डस्तद्भवः, भवनं व्यापनं सत्ताधारणं तत्र संस्थितिः, न तु जन्मेति । असौ वा आदित्यो ब्रह्माऽहरहः पुरस्ताज्जायते; एष उपतिष्ठते, 'सतश्च योनिमसतश्च विवरिति । इमे वै लोकाः सतश्च योनिरसतश्च, यच्च ह्यस्ति, यच्च न । तदेभ्य एव लोकेभ्यो जायते । स प्रजापतिः, सोऽग्निः[१] । असौ वा आदित्य इति; अत्र प्रादुर्भाव एव जनेरर्थः, न तु उत्पत्तिः । तदुक्तविधं ब्रह्म सगुणं सत् 'असौ' द्युलोकस्थः 'आदित्यो' भूत्वा प्रत्यहं 'पुरस्तात्' पूर्वस्यां दिशि जायते, उदेति । एवंभूतः सूर्यः 'सतः' लोकत्रयात्मकस्य भावरूपस्य, 'असतः' अभावात्मकस्य च 'योनिम्' उत्पत्तिस्थानम् 'विवः' विवृणोति, 'सः' उपधेयः पुरुषः 'प्रजापतिः' स्थूलप्रपञ्चाऽभिमानिविराडात्मकः, स एव 'अग्निः' सूक्ष्मप्रपञ्चाभिमानिहिरण्यगर्भात्मकः । अण्डे भवः, तस्मिन् अधिष्ठितः, सूर्यात्मा जगतो धाता विधाता च स गीयते—

चित्रं देवानामुद्गादनीकं चक्षुर्मित्रस्य वरुणस्याऽग्नेः ।
आ प्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥
( ऋ० सं० १।११५।१ )

ईदृग्भूतो मण्डलान्तर्वर्ती सूर्योऽन्तर्यामितया सर्वप्रेरकः परमात्मा, जगतः जङ्गमस्य, 'तस्थुषः' स्थावरस्य च आत्मा स्वरूपभूतः, स हि सर्वस्य स्थावरजङ्गमात्मकस्य कार्यवर्गस्य कारणम्, कारणाच्च कार्यं नातिरिच्यते, तथा च सूत्रम् **तदनन्यत्वमारम्भणशब्दादिभ्य** इति ।

गोपथेब्राह्मणे **पुष्करे ससृजे ब्रह्म ब्रह्माणम्**" इति श्रूयते । तस्माच्चायमर्थोऽवगम्यते । "आपो वै[२] पुष्करं तासामियम् ( पृथिवी ) पर्णम्; यथा ह वा इदं पुष्करपर्णमप्स्वध्याहितम् एवमियमप्स्वध्याहिता; सेयं योनिरग्नेः[३] ।" अपां प्रथमसर्गश्च स्मर्यते—**अप एव ससर्जादौ तासु वीर्यमवाकिरत्** । आपो वै पुष्करमित्यादि । पुष्करं सर्वतोमुखमित्यादिनिगदप्रसिद्धिद्योतको 'वै' शब्दः । तासामपां प्रथमसृष्टानामियं पृथिवी

---

**चतुर्मुखं स भगवानभूल्लोकपितामहः ।
येन सृष्टं जगत्सर्वं स देवासुरमानुषम् ॥
तमवेहि रजोरूपं महत्तत्त्वमुदाहृतम् ।**
( मत्स्य. २।२५-३७ )

१. शत. ब्रा. ७।३।१।१४ १५ ।
२. शत. ब्रा. ७।३।१।६-८ ।
३. आपो ह यद् बृहतीर्विश्वमायन् गर्भं दधाना जनयन्तीरग्निम्,
ततो देवानां समवर्ततासुरेकः, कस्मै देवाय हविषा विधेम ।
यश्चिदापो महिना पर्यपश्यद् दक्षं दधाना जनयन्तीर्यज्ञम्.
यो देवेष्वधि देव एक आसीत्, कस्मै देवाय हविषा विधेम ॥
( ऋ. १०।१२१।७-८; वा. सं. २७।२५-२६ )

पर्णस्थानीया। एतदेव विशदयति 'यथा ह वा' इति। 'इदं' पुष्करपर्णं पद्मपत्रम्, यथा खलु अप्सु 'अध्याहितम्' उपर्याश्रितं सद् दृश्यते, एवमियं पृथिवी 'अप्सु' उदकेषु 'अध्याहिता' उपर्याश्रिता वर्त्तते। 'पुष्करं' ह्यन्तरिक्षार्थे निघण्टौ परिपठ्यते। तस्मिन् हिरण्मयं त्वण्डं साक्षात् सवितृमण्डलम्, तद्गर्भे च परं ब्रह्म ब्रह्माणं ससृजे पुरा। नारायणाऽपराख्यानम् अब्नाराऽऽकाशशायिनम्। एतन्नारायणात् कार्यब्रह्मरूपात्परः पुमान्, अन्यो नारायणो ब्रह्मा यद् विसृष्टोऽयमिष्यते—

अनन्तमेतदाकाशं　　सिद्धदैवतसेवितम्।
रम्यं नानाश्रयाकीर्णं यस्यान्तोऽनाधिगम्यते॥

ऊर्ध्वं गतेरधस्तात्तु चन्द्रादित्यौ न दृश्यतः।
तत्र देवाः स्वयं दीप्ता भास्वराभाग्निवर्चसः॥

ते चाप्यन्तं न पश्यन्ति नभसः प्रथितौजसः।
दुर्गमत्वादनन्तत्वादिति मे विद्धि मानद॥

उपरिष्टोपरिष्टात्तु प्रज्वलद्भिः स्वयं प्रभैः।
निरुद्धमेतदाकाशमप्रमेयं सुरैरपि॥

पृथिव्यन्ते समुद्रास्तु समुद्रान्ते तमःस्मृतम्।
तमसोऽन्ते जलं प्राहुर्जलस्यान्तेऽग्निरेव च॥

रसातलान्ते सलिलं जलान्ते पन्नगाधिपाः।
तदन्ते पुनराकाशमाकाशान्ते पुनर्जलम्॥

एवमन्तं भगवतः प्रमाणं सलिलस्य च।
अग्निमारुततोयेभ्यो दुर्ज्ञेयं देवतैरपि॥

अग्निमारुततोयानां वर्णाः क्षितितलस्य च।
आकाशादवगृह्यन्ते भिद्यन्ते तत्त्वदर्शनात्॥

---

हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः।
अग्निं या गर्भं दधिरे विरूपास्ता न आपः शं स्योना भवन्तु॥
अद्भ्यः संभूतो हिरण्यगर्भः।

( तै. सं. ५।६।१ )

अद्भ्यः संभूतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताधिः।
तस्य त्वष्टा विदधद्रूपमेति तत्पुरुषस्य विश्वमाजानमग्रे।

( तै. आ. प्रपा. १० अनु. १ )

आपो वा इदं सर्वम्, विश्वाभूतान्यापः, प्राणा वा आपः, पशव आपोऽन्नमापोऽमृतमापः, सम्राडापो विराडापः, स्वराडापश्छन्दाँस्यापो ज्योतींष्यापो यजूंष्यापः सत्यमापः, सर्वा देवता आपो भूर्भुवः सुवराप ओम् ( तै. आ० प्रपा० १०।२२ )।

ततः पुष्करतः सृष्टः सर्वज्ञो मूर्तिमान् प्रभुः ।
'ब्रह्मा' धर्ममयः पूर्वः प्रजापतिरनुत्तमः ॥
मानसस्येह या मूर्त्तिर्ब्रह्मत्वं समुपागता ।
तस्यासनविधानार्थं 'पृथिवी' पद्ममुच्यते ॥
कर्णिकान्तस्य पद्मस्य मेरुर्गगनमुच्छ्रितः ।
तस्य मध्ये स्थितो लोकान् सृजते जगतः प्रभुः ॥

( महा० शां० अ० १८२ )

क्षीराब्धावन्तरिक्षाख्ये व्याप्य सोऽयमवस्थितः । तन्नाभिकमलम् 'पृथ्वी' रूपमुत्प्रेक्षितम् बुधैः[१] । तस्योपरि हिरण्याभश्चतुर्दिग् दृश्यमण्डलः । ब्रह्मा चतुर्मुखो नाम मार्तण्डात्मा विराजते । आदित्यमण्डले देवः स्थितः कश्चिद्धिरण्मयः स्तूयते । वेदोत्पत्तिप्रसङ्गाच्च ब्रह्माऽऽदित्याऽभिधानयोः । पुंसोरेकत्वमेवाद्धा तत्त्वतः प्रसमीक्ष्यते । आदित्यः 'सविता' ब्रह्मा 'विश्वसृट्' च निगद्यते । सोऽयं चतुर्विधो ब्रह्मा, (१) महद्रूपो मनोमयः अहङ्कारस्वरूपो वा, (२) स्वब्रह्माण्डाऽभिमानिकः, (३) सर्गे चाधिकृतो देवः, (४) समष्टयात्मेति च स्मृतः । **इति सृष्टिवादसमन्वयः** ।

## तत्त्वसृष्टिक्रमः

मुख्यतया सृष्टेः क्रमो द्वेधा निरूपितः—ब्रह्मणः प्रधानाच्च आद्यो वेदान्तिनाम्, अन्तिमः सांख्यानाम् । ऋक्संहितायां विश्वोत्पत्ति सूक्तानि बहूनि सन्ति[२] । ब्राह्मणग्रन्थेषु तु देवतोपाख्यानप्रसङ्गैः, यज्ञादिसम्बन्धैश्च करम्बिताः सृष्टिवादाः प्रायेण पदे पदे श्रूयन्ते । तेषु कियन्ति सृष्टिब्राह्मणानि भारतीयार्षतत्त्वविद्यायाः मूलभूतानि रमणीयतराणि च सन्ति[३] । वेदान्तिनां साङ्ख्यानां मध्ये मनुः समन्वयः कृतवान्—

---

१. महा. शां. १८२ अ.; सौरपु. अ. ३१; योगवार्त्तिके. ३।२६ ।
ऋ० ३।६२।१०; वा० सं० ३।३५; निरु० ५।१६।१०; २।१; तै० आ० ८।२१५६५; शत० ब्रा० ६।१।२।१०-११; मुण्ड० २।१; तै० आ० १०।६३; महा० शां० ३३६।२; अग्नि० १७।८; हरिवंश पु० १।२८; महा० वन० २७२।४१-४२; महा० अनु० ७०।१०; महा० शां० ३४१।३९-४०; लिं० पु० ७०।११५-२०; वा० पु० ६।१-५; बृह० सं० ४।६।१४-२४; महा० अश्व० ४० अध्यायः; मत्स्य० ३।१६; महा० शां० १८२।१६; ३४७।२१; अनु० १५३।१८; वा० पु० ४ अध्यायः; लिं० पु० ७० अ०; योगवा० ३।३।२४-३९ ।

२. ऋ० १०।७२; १०।८१-८२; १०।९०; १०।१२१; १०।१२९ ।

३. तै० ब्रा. कां. २।२।९, शत० ब्रा० कां० ६।१।१-२; गोपथब्रा० पूर्व० प्रपा० १ ।

उद्‌बर्हात्मनश्चैव मनः सदसदात्मकम् ।
मनसश्चाप्यहङ्कारमभिमन्तारमीश्वरम् ॥
महान्तमेव चात्मानं सर्वाणि त्रिगुणानि च ।
विषयाणां ग्रहीतॄणि शनैः पञ्चेन्द्रियाणि च ॥

तेषां त्ववयवान्सूक्ष्मान्षण्णामप्यमितौजसाम् ।
सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्ममे ॥
यन्मूर्त्यवयवाः सूक्ष्मास्तस्येमान्याश्रयन्ति षट् ।
तस्माच्छरीरमित्याहुस्तस्य मूर्त्तिं मनीषिणः ॥

तदाविशन्ति भूतानि महान्ति सह कर्मभिः ।
मनश्चावयवैः सूक्ष्मैः सर्वभूतकृदव्ययम् ॥
तेषामिदं तु सप्तानां पुरुषाणां महौजसाम् ।
सूक्ष्माभ्यो मूर्त्तिमात्राभ्यः संभवत्यव्ययादव्ययम् ॥

आद्याद्यस्य गुणं त्वेषामवाप्नोति परः परः ।
यो यो यावत्तिथयश्चैषां स स तावद्‌गुणः स्मृतः ॥
सर्वेषां स तु नामानि कर्माणि च पृथक् पृथक् ।
वेद शब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥

(मनु० १।१४–२१)

सामान्यपाठभेदेनाधोलिखितश्लोकानामुल्लेखो दृश्यते विभिन्नेषु पुराणेषु[१]—

अव्यक्तं कारणं यत्तत्प्रधानमृषिसत्तमैः ।
प्रोच्यते प्रकृतिः सूक्ष्मा नित्यं सदसदात्मकम् ॥

त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् ।
वेदवादविदो विद्वन्नियन्ता ब्रह्मवादिनः ॥

पठन्ति चैतमेवार्थं प्रधानप्रतिपादकम् ।
नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभूच्च नान्यत् ।
श्रोत्रादिबुद्ध्यानुपलभ्यमेकं प्राधानिकं ब्रह्म पुमांस्तदासीत् ॥
विष्णोः स्वरूपात्परतोदिते द्वे रूपे प्रधानं पुरुषश्च विप्र ॥

( विष्णुपु० १।२।१९।२१-२४ )

स्पष्टं यदहङ्कारतन्मात्रेन्द्रियसंहतेः प्राक् समष्ट्यात्मकं सूक्ष्मं शरीरं ब्रह्मणः स्वयं

---

१. ब्रह्माण्डपु० १।३।१-९; वायु० पु० ४।१७; ब्रह्मपु० १।३३; मार्कण्डेय० ४२।३६-५२,५९-६३; विष्णु० १।२।३४-४९, ५१-५५ ।

सर्वसूक्ष्मशरीराणां मूलभूतं सनातनमेकमेवाऽक्षयं विश्वस्थानं सम्पद्यते। ततो व्यष्टिलिङ्ग-शरीराणि विभज्यन्ते सहस्रशः, ब्रह्मांशव्यष्टिजीवानां विस्फुलिङ्गा इवानलात्।

सर्वस्य भूतभव्यादेर्वेदादेव समुद्भवम्
चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक्।
भूतं भव्यं भविष्यश्च सर्वं वेदात् प्रसिध्यति॥
शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः।
वेदादेव प्रसूयन्ते प्रसूतिगुणकर्मतः॥

एतस्मिन्विषये द्वेधा मतं दृष्टं मनीषिणाम्। वेदशब्देभ्य एवादौ ब्रह्मा निर्मितवाञ्जगत्। अर्थाज्जगदुपादानं शब्दब्रह्मैव सोऽकरोत्। शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः। छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत[1]। विभज्य बहुधात्मानं स छन्दस्यः प्रजापतिः। छन्दोमयीभिर्मात्राभिर्बहुधैव विवेश तम्[2]। साक्षाद् वेदानुमोदितमेकं मतम्[3]। ब्रह्मसूत्रादिभिश्चाऽन्यन्मतं त्वित्थं निरूप्यते—वेदशब्देभ्य इत्यर्थाद् वेदशब्दानुसारतः, ब्रह्मा नामादिसर्वेषां यथापूर्वमकल्पयत्। अन्तरण्डं समुत्पाद्य वेदमध्यापयद्विधिं, परमात्मा स तच्छब्दैः सर्वे नामादि निर्ममे[4]।

## भुवनकोशदिक्प्रदर्शनम्

अस्मिन् विषये भीष्मपर्वस्थमहाभारतवर्णनं तत्रत्यं नैलकण्ठीयं पर्याप्तमस्ति—

पञ्चेमानि महाराज महाभूतानि संग्रहात्।
जगतीस्थानि सर्वाणि सामान्याहुर्मनीषिणः॥

भूमिरापस्तथा वायुरग्निराकाशमेव च।
गुणोत्तराणि सर्वाणि तेषां भूमिः प्रधानतः॥

शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः।
भूमेरेते गुणाः प्रोक्ता ऋषिभिस्तत्त्ववेदिभिः॥

चत्वारोऽप्सु गुणा राजन् गन्धस्तत्र न विद्यते।
शब्दः स्पर्शश्च रूपं च तेजसोऽथ गुणास्त्रयः॥

---

१. वाक्यप० १।१२० ।

२. वाक्यपदीयधृतानि ऋग्वर्णपुराकल्पवचनानि (ब्र. कां. १२०)।

३. वाक्य० १।१२०; तै० ब्रा० २।२।४।२; ब्र० सू० १।३।२८।

४. यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै (श्वेता०६।१८)।

शब्दः स्पर्शश्च वायोस्तु आकाशे शब्द एव तु ।
एते पञ्चगुणा राजन् महाभूतेषु पञ्चसु ॥

वर्तन्ते सर्वलोकेषु येषु भूताः प्रतिष्ठिताः ।
अन्योऽन्यं नाभिवर्तन्ते साम्यं भवति वै यदा ॥

यदा तु विषयीभावमाविशन्ति परस्परम् ।
तदा देहैर्देहवन्तो व्यतिरोहन्ति नान्यथा ॥

आनुपूर्व्या विनश्यन्ति जायन्ते चाऽनुपूर्वशः ।
सर्वाण्यपरिमेयाणि तदेषां रूपमैश्वरम् ॥

तत्र तत्र हि दृश्यन्ते धातवः पाञ्चभौतिकाः ।
तेषां मनुष्यास्तर्केण प्रमाणानि प्रचक्षते ॥

अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेत् ।
प्रकृतिभ्यः परं यत्तु तदचिन्त्यस्य लक्षणम् ॥

(महा० शां० ५।३-१२)

अत्रत्यमन्तिमं श्लोकद्वयं वायुपुराणेऽपि (३४।७-८) दृश्यते । मात्स्ये (११३।४-६) तु एतद्विपरीतार्थोऽस्ति पाठः ।

'आनुपूर्व्या' भूम्यादिक्रमेण, विनश्यन्ति; 'जायन्ते चाऽनुपूर्वशः' आकाशादिक्रमेण; विपर्ययेण क्रमोऽत उपपद्यते चेति न्यायेन सृष्टिक्रमविपरीतत्वात्संहारक्रमस्य । अत एव उत्पत्तिविनाशशीलत्वादेव 'सर्वाणि' एतानि भोक्तृभोग्यानि, 'अपरिमेयाणि' अनन्तानि, मरीचिकोदकह्रदतुल्यत्वात्, न हि मरीचिकोदकमियत्प्रमाणमिति परिमातुं शक्यम् । यत एतान्यपरिमेयाणि, 'तत्' तस्माद्धेतोः, 'एषां रूपमैश्वर्यम्'ए व, न तु भौतिकम्; न ह्यध्यस्तस्याऽधिष्ठानादन्यद्रूपमस्ति । अत एव 'सर्वं खल्विदं ब्रह्म' 'आत्मैवेदं सर्वं' 'ब्रह्मैवेदं सर्वम्' इति सर्वस्य ब्रह्मभावश्रवणमुपपद्यत इत्यर्थः ।

अपरिमेयत्वमेवाह—'तत्र तत्र' इति । सिद्धा अपि यत्र ब्रह्माण्डं भित्वा गच्छन्ति, तत्राऽपि वासनामया 'धातवो' व्यक्तयः पाञ्चभौतिका 'दृश्यन्ते' अतः अपरिमेया एव ते । एवं सत्यपि 'मनुष्या' गणकादयः, 'तर्केण' सूर्यगत्या, देशभेदेन दिनमानभेद-पादच्छाया भेदादिना च, तेषां प्रमाणानि प्रचक्षते । एतच्चोपलक्षणमाकारभेदस्यापि । तथा हि—केचित्कन्दुकाकारं केचिच्चतुरस्रं केचित्त्रिकोणं केचिच्चक्राकारञ्च भूमिसंस्थानं कल्पयन्ति, तथा प्रमाणभेदोऽपि जम्बूद्वीपपरिणाहगणकाः—**'तद् व्यासः कुभुजङ्गसायक-भुवः सिद्धांशकेनाऽधिका'** इति वदन्ति, पञ्चदशशतान्येकाशीतियोजनानि, योजनचतुर्विंशांशसहितानि । तथा लक्षयोजनं तत्परिणाह इति पुराणान्तरे ।

कस्तर्हि अत्र सिद्धान्तः ? इत्याशङ्क्य अनिर्वचनीय एवाऽयमर्थो न तर्केण साधयितुं योग्य इत्याह— अचिन्त्या इति 'ये भावाः' जगज्जन्मोपादाननिमित्तपरिमाणधर्माऽधर्मादयः पदार्थाश्चिन्तयितुमयोग्याः न हि ते तर्केण साधयितुं शक्यन्ते, तर्कान्तरेण तस्य बाधसम्भवात्, 'तर्काऽप्रतिष्ठानाद्' इति न्यायाच्च । तथा हि कन्दुकाकारे भुवनकोशे कल्प्यमाने, ये कन्दुकपृष्ठे कमठपृष्ठोपमे तिष्ठन्ति तेषां कियानपि देशो जलपशुमनुष्याश्रययोग्योऽस्तीति वक्तुं युक्तम् । ये तु तन्नितम्बे तदधश्च वसन्ति, तेषां गुरुत्ववतामर्थानामधस्तादाश्रयाऽभावेनाऽवश्यं पतनं भवतीति तावान्देशो रिक्त एवाऽस्तीति वक्तव्यम् । तथा च तदाश्रया तत्कृता द्वीपान्तरकल्पना लोकदृष्टिविरुद्धेति पामराअपि प्रतियन्ति ।

ननु यथा पृथिव्या अन्तरिक्षेऽवस्थानशक्तिर्दिगम्बरादन्यैः सर्वैर्वादिभिः कल्प्यते; तथा वयमपि तस्या आकर्षणशक्तिमन्यां कल्पयामहे, यया सर्वदिक्स्थाः प्राणिनः पृथिवीं पादाधस्यामेव मन्यन्ते, खं चोपरिस्थमिति ? तर्हि लोकदृष्टिविरुद्धकल्पनापेक्षया सर्वप्राणिप्रत्यक्षस्वप्नमायेन्द्रजालान्दितुल्यतैवास्याः कुतो न कल्प्यते ? ननु स्वप्नादिवदस्या बाधो न दृश्यत इति चेत् ? प्राग्ब्रह्मात्मज्ञानान्मादर्शि, किं नाश्छिन्नम् ? श्रुत्या तु ज्ञाते, द्वैतं न विद्यते, नेह नानाऽस्ति किञ्चन' इत्यादिकया ब्रह्मादर्शनेन तेन रज्जुदर्शनेन सर्पस्येव प्रपञ्चबाध आम्नायते । तथा च निष्कलङ्कात् श्रुतिप्रमाणाद् ब्रह्माऽद्वैतमेवादर्त्तव्यम्, न तु सकलङ्कात्तर्काज्जगतोऽनिर्वचनीयत्वम् ।

द्वीपोत्पत्तिर्यथा—सूर्यः सुमेरुं प्रदक्षिणीकुर्वन् अर्द्धां पृथ्वीं प्रकाशयति, अर्द्धां तमसा आवृणोति । तदा भगवदुपासनोपचिताऽतिक्रान्तपुरुषप्रभावः प्रियव्रतो राजा, सूर्यरथसमवेगेन ज्योतिर्मयरथेन 'रजनीमपि दिनं करिष्यामीति' प्रतिज्ञां कृत्वा, सप्तवारं द्वितीयसूर्य इव सूर्यमनुपर्यक्रामत् । अस्य रथचरणनेमिखाताः सप्तसिन्धव आसन्, यैरेव सिन्धुभिः पृथिव्याः सप्तद्वीपाः कृताः । ते जम्बुप्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्करसंज्ञकाः। तेषां पूर्वस्य यद्विस्तारमानम्, उत्तरतस्ततो द्विगुणेन विस्तारमानेन परिमाणम् । ते सिन्धुभ्यो बहिः समं रचिताः, यथा सिन्धुभ्यो बहिरेकैकशो द्वीपाः, एवं द्वीपानामपि बहिः सिन्धवः। अवान्तरभेदात् त्रयोदशद्वीपाः, ते च स्वर्णप्रस्थः, चन्द्रशुक्लः, आवर्तनः, रमणकः मन्दरहरिणः, पाञ्चजन्यः, सिंहलो लङ्का, रोमकपत्तनम्, सिद्धपुरम्, यमकोटिरित्येकादशजम्बूद्वीपस्योपद्वीपाः, द्वादशो जम्बूद्वीपः, प्लक्षादिषटकञ्चेति अष्टादशद्वीपाः, प्लक्षादिषट्कस्यैकत्वविवक्षया त्रयोदश ।

सुदर्शनो नाम जम्बूवृक्षविशेषस्तन्नामाङ्कितोऽयं द्वीपः सुदर्शनद्वीपः—

सुदर्शनं प्रवक्ष्यामि द्वीपं तु कुरुनन्दन ।
परिमण्डलो महाराज द्वीपोऽसौ चक्रसंस्थितः ॥

( भीष्म० ५।१३ )

सुदर्शनद्वीपस्याकारमाह—चक्रसंस्थित इति। परिदृश्यमानराष्ट्राकार इत्यर्थः। 'चक्रं राष्ट्रास्त्रयोरपि' इति विश्वः।

## भारतवर्षवर्णनम्

प्रागायाता महाराज षडेते वर्षपर्वताः।
अवगाढा ह्युभयतः समुद्रौ पूर्वपश्चिमौ॥

( भीष्म० ६।३ )

प्रागायाताः पूर्वपश्चिमसमुद्रस्पर्शिनः। अत्रेयं शास्त्रानुभवयोरविरोधेन भूकल्पना प्रतिभाति; यथा, हस्तमात्रस्य चतुरस्रस्य चतुर्विंशत्यङ्गुलानि परिणाहः, षण्णवत्यङ्गुलानि परिधिः, किञ्चिन्न्यूनानि चतुस्त्रिंशदङ्गुलानि कर्णो भवति; एवम्—अष्टादशसहस्राणि, षट्शतानि च, जम्बूपर्वसंज्ञितायां भुवः प्रमाणमुक्तम्; तदेवाऽत्र परिधित्वेन कल्पितम्, तच्चतुर्थांशत्वेन चत्वारि सहस्राणि, षट्शतानि पञ्चाशच्च योजनानि एकैको भुज इति तदेव समचतुरस्रस्य विष्कम्भप्रमाणमस्य कर्णः शुल्बशास्त्रोक्तरीत्या षट्सहस्राणि, पञ्चशतानि, षट्सप्ततिश्च योजनानि, तस्याऽस्य भूचतुरस्रस्य चतुर्भिः समुद्रैर्वेष्टितस्य कोणा दिक्षु वर्तन्ते। तेन दक्षिणस्यां दिशि रामसेतौ द्वयोः समुद्रयोः सन्धिः। एवमितरास्वपि दिक्षु समुद्रसन्धयो ज्ञेयाः। यस्त्वत्र ज्योतिर्विदां भूपरिधिः सप्ताङ्गनन्दाब्धियोजन (४९६७) सम्मितोऽभिमतः। स एवास्माकं चतुरस्रविष्कम्भः खः बाण रसवेदमितः (४६५०); यत्तु एतयोरन्तरं सप्तेन्दुरामाः (३१७), तदपि यजमानेनोर्ध्वबाहुना प्रपदोच्छ्रितेन समपादस्थितेन वा उन्मितस्य सूत्रस्य यः पञ्चमोंऽशः स हस्त इति विकल्पस्य कात्यायनादिभिरुक्तत्वाद्धस्तप्रमाणभेदकल्पनया योजनबहुत्वाल्पत्ववचनेन समाधेयम्। तथा भूमेश्चतुरस्रत्वेऽपि, तन्मध्यस्थमत्युच्छ्रितं मेरुं प्रदक्षिणी कुर्वतः सूर्यस्य मार्गो मण्डलाकारोऽस्तीति न बौद्धाभिमतं सूर्यद्वयं कल्प्यं भवति। अन्यत्सर्वं युक्त्यविरुद्धं ज्योतिर्विन्मतमेवाऽत्रानुसर्तव्यम्।

यत्तु पुराणे पञ्चाशत्कोटियोजनं भूगोलप्रमाणमित्युक्तं तदपि **'अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेद्'** इत्यनेनैव प्रत्युक्तम्। अव्यवस्थितत्वान्मतानामनिर्वचनीयवाद एव शरणीकरणीय इत्येव वरम्। यद्वा सर्वत्र यत्प्रमाणं दृष्टम्, तद्विंशांशेन तद्बोध्यम्; तेन पञ्चाशत्कोटिस्थाने सार्धकोटिद्वयविस्तारा भूमिः, लक्षस्थाने पञ्चसहस्रविस्तारो जम्बूद्वीपः; नवसहस्रस्थाने सार्धचतुःशतयोजनायामं भरतखण्डमिति। अस्मिन्पक्षे जम्बूद्वीपश्चतुर्दलाकमलाकारः, तस्य चान्तः परिधिः षट्शताधिकान्यष्टादशयोजनसहस्राणि, त्रयस्त्रिंशच्छतानि मध्यवासः; तेन फलतः पञ्चसहस्रव्यासता ज्ञेया। एवं सति यदा प्रागायातो हिमाचलः पूर्वपश्चिमसमुद्रौ स्पृष्ट्वाऽरत, तदाऽयं भरतवर्ष-

स्त्रिकोणो भवति; तेन पृथिवीत्रिकोणेति लोकप्रवादोऽनुभवश्चानुसृतो भवति। अन्यथा भरतवर्षस्य धनुराकारत्वे भूमध्यरेखाया लङ्कातः सेतुमार्गेण प्रस्थितायाः—

'पुरी रक्षसां देवकन्याऽथ काञ्ची सितः पर्वतः पर्यली'वत्सगुल्मम् ।
पुरी चोज्जयिन्याह्वया गर्गराटं कुरुक्षेत्रमेषा भुवो मध्यरेखा ॥"

इति मध्यरेखया कुरुक्षेत्रस्य रामसेतुः सन्निहितः, द्वारका च दूरे स्यात्; द्वारकासमीपे सेतुश्च दूरे इति प्रत्यक्षमुपलभ्यते। अतः भरतवर्षस्य त्रिकोणत्वमित्येषैव कल्पना साधीयसीति।

हिमवान् हेमकूटश्च निषधश्च नगोत्तमः ।
नीलश्च वैदूर्यमयः श्वेतश्च शशिसन्निभः ॥
सर्वधातुविचित्रश्च शृङ्गवान्नाम पर्वतः ।
एते वै पर्वता राजन् सिद्धचारणसेविताः ॥
एषामन्तरविष्कम्भो योजनानि सहस्रशः ।
तत्र पुण्या जनपदास्तानि वर्षाणि भारत ॥
वसन्ति तेषु सत्त्वानि नानाजातीनि सर्वशः ।
इदं तु भारतं वर्षं ततो हैमवतं परम् ॥

( भीष्म० ६।३-७ )

सर्वेषामेव राजेन्द्र प्रियं भारत भारतम् ।
तत्ते वर्षं प्रवक्ष्यामि यथायथमरिन्दम ॥
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवानपि ।
विन्ध्यश्च परियात्रश्च सप्तैते कुलपर्वताः ॥
अन्ये ततोऽपरिज्ञाता ह्रस्वाह्रस्वोपजीविनः ।
आर्या म्लेच्छाश्च कौरव्य तैर्मिश्राः पुरुषा विभो ।

( भीष्म० ९।९-१३)

अस्मिन्नेवाध्याये भारतवर्षीयनदीनामपि वर्णनं सविस्तरं द्रष्टव्यम् ।

तत्रेमे कुरुपाञ्चालाः शाल्वामाद्रेयजाङ्गलाः ।
शूरसेनाः पुलिन्दाश्च बोधा मालास्तथैव च ॥
मत्स्याः कुशल्याः सौशल्याः कुन्तयः कान्तिकोसलाः ।
चेदिमत्स्यकरूषाश्च भोजाः सिन्धुपुलिन्दकाः ॥
उत्तमाश्वदशार्णाश्च मेकलाश्चोत्कलैः सह ।
पञ्चालाः कोसलाश्चैव नैकपृष्ठा धुरन्धराः ॥

गोधा मद्रकलिङ्गाश्च काशयोऽपरकाशयः ।
जठराः कुक्कुराश्चैव सदशार्णाश्च भारत ॥
कुन्तयोऽवन्तयश्चैव तथैवाऽपरकुन्तयः ॥
गोमन्ता मण्डकाः सण्डा विदर्भारूपवाहिकाः ।
अश्मकाः पाण्डुराष्ट्राश्च गोपराष्ट्राः करीतयः ॥
अधिराज्यकुशाद्याश्च मल्लराष्ट्रं च केवलम् ।
वारवास्यायवाहाश्च चक्राश्चक्रातयः शकाः ॥
विदेहा मगधाः स्वक्षा मलजाविजयास्तथा ।
अङ्गा वङ्गाः कलिङ्गाश्च यकृल्लोमान एव च ॥
मल्लाः सुदेष्णाः प्रह्लादा माहिकाः शशिकास्तथा ।
बाल्हिका बाटधानाश्च आभीराः कालतोयकाः ॥
अपरान्ताः परान्ताश्च पञ्चालाश्चर्ममण्डलाः ।
अटवीशिखराश्चैव मेरुभूताश्च मारिष ।
उपावृत्तानुपावृत्ताः स्वराष्ट्राः केकयस्तथा ॥
कुन्दा परान्ता माहेयाः कक्षाः सामुद्रनिष्कुटाः ।
अन्ध्राश्च बहवो राजन्नन्तर्गिर्यास्तथैव च ॥
बहिर्गिर्याऽङ्गमलयजा मगधा मानवर्जकाः ।
समन्तराः प्रावृषेया भार्गवाश्च जनाधिप ॥
पुण्ड्रा भर्गाः किराताश्च सुदृष्टा यामुनस्तथा ।
शका निषादा निषधास्तथैवानर्तनैरृताः ॥
दुर्गालाः प्रतिमत्स्याश्च कुन्तलाः कोसलास्तथा ।
तीरग्रहाः शूरसेना ईजिकाः कन्यकागुणाः ॥
तिलभारा मसीराश्च मधुमन्तः सुकन्दकाः ।
काश्मीराः सिन्धुसौवीरा गान्धारा दर्शकास्तथा ॥
अभीसारा उलूताश्च शैवला बाल्हिकास्तथा ।
दार्वी च वानवा दर्वा वातजामरथोरगाः ॥
बहुवाद्याश्च कौरव्य सुदामानः सुमल्लिकाः ।
वध्राः करीषकाश्चाऽपि कुलिन्दोपत्यकास्तथा ॥
वनायवो दशापार्श्वरोमाणः कुशबिन्दवः ।
कच्छा गोपालकक्षाश्च जाङ्गलाः कुरुवर्णकाः ॥
किराता बर्बराः सिद्धा वैदेहास्ताम्रलिप्तकाः ।
ओण्ड्रा म्लेच्छाः सैसिरिध्राः पार्वतीयाश्च मारिष ॥

अथापरे जनपदा दक्षिणा भरतर्षभ ।
द्रविडाः केरलाः प्राच्या मूषिका वनवासिकाः ॥
कर्णाटका महिषका विकल्पा मूषकास्तथा ।
झिल्लिकाः कुन्तलाश्चैव सौहृदा नभकाननाः ॥
कौकुट्टकास्तथा चोलाः कोङ्कणा मालवा नराः ।
समङ्गाः करकाश्चैव कुकुराङ्गारमारिषाः ॥
ध्वजिन्युत्सवसङ्केतास्त्रिगर्ताः शाल्वसेनयः ।
व्यूकाः कोकबकाः प्रोष्ठाः समवेगवशास्तथा ॥
तथैव विन्ध्यचुलिकाः पुलिन्दा बल्कलैः सह ।
मालवा बल्लवाश्चैव तथैवापरबल्लवाः ।
कुलिन्दाः कालदाश्चैव कुण्डलाः करटास्तथा ॥
मूषकास्तनबालाश्च सनीपा घटसृञ्जयाः ।
अठिदाः पाशिवाटाश्च तनयाः सुनयास्तथा ॥
ऋषिका विदभाः काकास्तङ्गणाः परतङ्गणाः ।
उत्तराश्चापरम्लेच्छाः क्रूरा भरतसत्तम ॥
यवनाश्चीनकाम्बोजा दारुणा म्लेच्छजातयः ॥
सकृद्ग्रहाः कुलत्थाश्च हूणाः पारसिकैः सह ।
तथैव रमणाश्चीनास्तथैव दशमालिकाः ।
क्षत्रियोपनिवेशाश्च वैश्यशूद्रकुलानि च ।
शूद्राभीराश्च दरदाः काश्मीराः पशुभिः सह ॥
खाशीराश्चान्तचाराश्च पल्हवा गिरिगह्वराः ।
आत्रेयाः सभरद्वाजास्तथैव स्तनपोषिकाः ॥
प्रोषकाश्च कलिङ्गाश्च किराताना च जातयः ।
तोमरा हन्यमानाश्च तथैव करभञ्जकाः ॥
एते चान्ये जनपदाः प्राच्योदीच्यास्तथैव च ।
उद्देशमात्रेण मया देशाः सङ्कीर्तिता विभो ॥

( भीष्म० ९।३९-७० )

निसर्ग एष विख्यातः कुरूणां तु यथार्थवत् ।
भारतस्य तु वक्ष्यामि निसर्गं तन्निबोधत ॥
पुण्यतीर्थे हिमवतो दक्षिणस्यातलस्य हि ।
पूर्वपश्चायतस्याऽस्य दक्षिणेन द्विजोत्तमाः ॥
तथा जनपदानां च विस्तरं श्रोतुमर्हथ ।
अत्र वो वर्णयिष्यामि वर्षेऽस्मिन् भारते प्रजाः ॥

इदं तु मध्यमं चित्रं शुभाशुभफलोदयम् ।
उत्तरं यत्समुद्रस्य हिमवद्दक्षिणं च यत् ॥
वर्षं तद् भारतं नाम यत्रेयं भारती प्रजा ।
भरणाच्च प्रजानां वै मनुर्भरत उच्यते[१] ॥

एषु वाय्वादिपुराणाध्यायेषु भाष्योद्धृतश्लोकानन्तरं भारतवर्षीयपर्वतनदीदेशानां सुविस्तृतं वर्णनमस्ति । एवं भागवतादिष्वपि, तथा हि भागवते—तत्राऽपि भारतमेव वर्षं कर्मक्षेत्रम्; अन्यान्यष्टवर्षाणि स्वर्गिणां पुण्यशेषोपभोगस्थानानि भौमानि स्वर्गपदानि व्यपदिशन्ति ।[२] भारतेऽप्यस्मिन् वर्षे सरिच्छैलाः सन्ति बहवः—मलयो मङ्गलप्रस्थो मैनाकस्त्रिकूटऋषभः कूटकः कोल्लकः सह्यो देवगिरिर्ऋष्यमूकः श्रीशैलो वेङ्कटो महेन्द्रो वारिधारो विन्ध्यः शुक्तिमानृक्षगिरिः पारियात्रो द्रोणश्चित्रकूटो गोवर्धनो रैवतकः ककुभो नीलो गोकामुखः इन्द्रकीलः काम (राम) गिरिरिति चान्ये च शतसहस्रशः शैलास्तेषां नितम्बप्रभा नदा नद्यश्च सन्त्यसङ्ख्याताः । एतासामपो भारत्यः प्रजा नामभिरेव पुनन्तीनामात्मना चोपस्पृशन्ति । चन्द्रवशा ताम्रपर्णी अवटोदा कृतमाला वैहायसी कावेरी वेणी पयस्विनी शर्करावर्ता तुङ्गभद्रा कृष्णा वेण्या भीमरथी गोदावरी निर्विन्ध्या पयोष्णी तापी रेवा सुरसा नर्मदा चर्मण्वती सिन्धुरन्धः

१—ततः स्वर्गश्च मोक्षश्च मध्यश्चान्तश्च गम्यते ।
न खल्वन्यत्र मर्त्यानां भूमौ कर्म विधीयते ॥
भारतस्यास्य वर्षस्य नवभेदाः प्रकीर्तिताः ।
समुद्रान्तरिता ज्ञेयास्ते त्वगम्याः परस्परम् ॥
इन्द्रद्वीपः कसेरुश्च ताम्रवर्णो गभस्तिमान् ।
नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः ॥
अयं तु नवमस्तेषां द्वीपः सागरसंवृतः ।
योजनानां सहस्रं वै द्वीपोऽयं दक्षिणोत्तरात् ॥
आयतो ह्याकुमारिभ्यादागङ्गाप्रभवाच्च वै ।
तिर्यगुत्तरविस्तीर्णः सहस्राणि नवैव तु ॥
ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्राश्च भागशः ।
तेषां संव्यवहारोऽयं वर्तते तु परस्परम् ।
इज्यायुद्धवणिज्यादि वर्तयन्तो व्यवस्थितः ॥
धर्मार्थकामसंयुक्तो वर्णानां तु स्वकर्मसु ।
संकल्पपञ्चमानां तु आश्रमाणां यथाविधि ।
इह स्वर्गापवर्गार्थं प्रवृत्तिरपि मानुषे ॥
यस्त्वयं नवमो द्वीपस्तिर्यगायत उच्यते ।
कृत्स्नं जयति यो ह्येनं स सम्राडिह कीर्त्यते ॥
( मत्स्य० ११४ अ० ५-१६; वायु० ४५।७२-८७; मार्क० ५७।१९ )

२—श्रीमद्भाग० ५।१७।११।

शोणश्च नदाः, महानदी वेदस्मृतिर्ऋषिकुल्या त्रिसामा कौशिकी मन्दाकिनी यमुना सरस्वती दृषद्वती गोमती सरयू रोधस्वती सप्तवती सुषोमा शतद्रुश्चन्द्रभागा मरुद्वृधा वितस्ता असिक्नी विश्वेति महानद्यः[१]। अस्मिन्नेव वर्षे पुरुषैर्लब्धजन्मभिः शुक्ल-लोहितकृष्णवर्णेन स्वारब्धेन कर्मणा दिव्यमानुषनारकगतयो बह्व्य आत्मन आनुपूर्व्येण सर्वा ह्येव सर्वेषां विधीयन्ते; यथावर्णविधानमपवर्गश्चाऽपि भवति[२]—

दक्षिणापरतो ह्यस्य पूर्वेण च महोदधिः।
हिमवानुत्तरेणास्य कार्मुकस्य यथा गुणः॥
तदेतद् भारतं वर्षम् ।

(मार्कण्डेय० ५७।५९)

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः॥

(विष्णु० ११।३।१)

उत्तरं यत्समुद्रस्य हिमवद्दक्षिणं च यत्।
वर्षं यद् भारतं नाम यत्रेयं भारती प्रजा॥

(मत्स्य० ११४।१०)

आयतस्तु कुमारीतो गङ्गायाः प्रवहावधिः।
"प्रसिद्धश्च स्थाल्यां चरुशब्द आ हिमवत आ च कुमारीभ्यः॥

(शबर०, जै० १०।१।३५)

"ओदने हि चरुशब्दः प्रसिद्ध आ हिमवत आ च कुमारीभ्यः॥

(शबर०, जै० १०।१४२)

पैठीनसिः। आ हिमवत आ च कुमार्याः सिन्धुर्वैतरणी नदी सूर्यस्योदयनं पुरः यावद्वा कृष्णमृगो विचरति तत्र धर्मश्चतुष्पादो भवतीति—(परिभाषा० पृ० ५८)।

कर्मभूमिरियं स्वर्गमपवर्गञ्च गच्छताम्।

(विष्णु पु० २।३।२)

ततः स्वर्गश्च मोक्षश्च मध्यश्चान्तश्च गम्यते।
न खल्वन्यत्र मर्त्यानां भूमौ कर्म विधीयते॥

(वायुपु० ४५।७७; विष्णुपु० २।३।५)

---

१—विशेषतो भारतीयनदनदीनामानि महाभारते भीष्मपर्वणि नवमाध्याये द्रष्टव्यानि।

२—श्रीमद्भाग० ५।१९।१६-१९।

एतद्व्यतिरिक्तमधस्तान्निर्दिष्टेषु ग्रन्थस्थलेषु भारतवर्षवर्णनम्, तदन्तर्गतनदीपर्वतदेशादीनामुपव्याख्यानं च दृश्यम्[1]। एवमेव ब्रह्माण्डपुराणादिष्वपि भुवनकोशवर्णनप्रसङ्गेन भारतवर्षवर्णनमपि विशेषतो द्रष्टव्यम्। भुवनकोशवर्णनमपि प्रायशः सर्वेष्वेव पुराणेषु, उपपुराणेषु, महाभारते ज्योतिःशास्त्रे, योगभाष्यादिषु च दृश्यते। तेषां कतिचित्स्थलानीहाऽधस्तान्निर्दिश्यन्ते।[2]

## आर्यावर्त्तः

अथैतद् आर्यावर्त्ताभिधानं न क्वचिदपि संहितायाम्, ब्राह्मणे वा श्रुतमस्ति। अनतिप्राचीनग्रन्थेषु पातञ्जले महाभाष्ये, विशेषतस्तु भृगुप्रोक्तायां मनुसंहितायाम्, ततो महाभारतादावपि कृत एतत्स्वरूपादिनिर्णय इति तन्नामप्रसिद्धिः। तत्त्वस्तु आर्याणां वासनिबन्धनमेव तन्नामेति आर्यनामैव आर्यावर्त्तनामैव आर्यावर्त्तनामबीजमुपगम्यते।

अथैत एव "आर्या[3] अत्राऽऽवर्त्तन्ते, पुनः पुनरुद्भवन्तीत्यार्यावर्त्तः" इत्याह च मनुटीकायां कुल्लूकः ( २ । २२ )। आवर्त्तनं पुनः पुनर्जन्मग्रहणमिति तदाशयः। अस्मिन्मते तु जन्मान्तरस्वीकारेऽपि आर्या ईश्वरपुत्रा इति व्यपदिष्टा मनुष्याः, यत्र 'आ' आभिमुख्येन प्रधानरूपेण 'वर्त्तन्ते' विद्यन्ते, निवसन्तीति, स एव भूभागः आर्यावर्त्तः। तदेवमार्यवासत एव आर्यावर्त्तनामेति सिद्धान्तः।

---

१. वा० रामा० किष्कि० सर्गाः ४०-४६; महा० आदि० अ० ६७; अ० १०४।५३-५५; १३८।७२-७७ सभा० अ० २५-३२; वन० ६१।२१-२३, नलाख्याने विदर्भमार्गदेशनिर्देशः; तत्रैव तीर्थयात्रापर्व; अ० २५४ कर्णदिग्विजयदेशाः; तत्रैव ३०८।२५-२७; विराट० १।१२-१३; ५।१-४; भीष्म० अ० ९; शान्ति० अ० २।३; महा प्र० पर्व अ० १-२; अग्नि पु० अ० ११८; कूर्म० अ० ४७; ब्रह्मपु० अ० १९; मत्स्यपु० अ० ११४; मार्क० पु० अ० ५७-५८; वायुपु० अ० ४५; विष्णु पु० अ० २ अ० ३।

२. अग्नि पु० १०७-८; ११९-२०; कूर्मपु० अ० ४३-५०; गरुडपु० अ० ५४-५७; देवीभा० स्कं० ८ अ० १-१३; पद्मपु० खं. १ अ० ३-९; बृहन्ना० पु० अ० ३; ब्रह्मपु० अ० १८-२८; भागवते स्कं० ५ अ० १६-२०; मात्स्ये अ० ११३-१२८; मार्क० अ० ५४-६०; लिङ्गपु अ० ४६; वराहपु० अ० ७४-८९. वायुपु० ३४-५०; विष्णुपु० अ० २ अं० २-७; शिवपु० उमासं० अ० १७-१८; वा० रामा० कि० खं. ४६; भीष्म० अ० ४-११; भुवनज्ञानं सूर्यसंयमात् पा० ३ सू० २६ इति पातञ्जलयोगसूत्रस्य वैयासिकभाष्ये नागेशवृत्तौ च। अभिधानवाचस्पत्यशब्दकल्पद्रुमादिषु 'भुवनकोशभूगोलब्रह्माण्ड' शब्देषु. सिद्धान्तशिरोमणिगोलाध्यायादौ।

३. न वैरमुद्दीपयति प्रशान्तं न दर्पमारोहति नाऽस्तमेति.
न दुर्गतोऽपाति करोत्यकार्यं तमार्यशीलं परमाहुरार्याः।
न स्वे सुखे वै कुरुते प्रहर्षं नाऽन्यस्य दुःखे भवति प्रहृष्टः,
दत्त्वा न पश्चात् कुरुतेऽनुतापं स कथ्यते सत्पुरुषार्थशीलः॥

( एवमादि च महाभारतादौ दृश्यमार्यलक्षणम्, )

स चार्यवासः पूर्वं तावद् हिमवत्पृष्ठस्य दक्षिणभागे, सुवास्तुप्रदेशे आसीदिति गम्यते। श्रूयते हि ऋक्संहितायाम्—सुवास्त्वा अधि तुग्वनि।[1] व्याख्यातश्चैष वासभूमिः, सा खलु यस्यास्तीरे 'सुष्ठु' एव, सा नदी सुवास्तुर्नाम; तत्तीरस्थितो जनपदश्चाऽभवत्तन्नामतः सुवास्तुरेव। सुवास्त्वादिभ्योऽण् (४।२।७७) इति सूत्रदर्शनादवगम्यते—विदिश्चायं प्रदेशः पाणिनेरपीति। कनिंघममहोदयमतेऽद्य 'स्वात्' इति 'सुवात' इति वा प्रसिद्धा नद्येव सा सुवास्तुः। तथा च, तस्मादुज्जिहानप्रदेशीयसुवास्तुनदीतीरस्थसुवास्तुजनपदाद् बहूत्तरस्थाऽतिप्रभावा 'रसा' नद्येव तदुत्तरसीमा। इदानीं 'काबुल' नदीति प्रसिद्धा हीनप्रभावा 'कुभा' एव स्यात्तत्पश्चिमसीमा। तक्षशिला प्रदेशीया 'सरयू' रेवाऽऽसीत्तत्पूर्वसीमा। अथ कुभाया नीचैः 'क्रमुसिन्धुसङ्गम' एव तद्दक्षिणसीमेति च सम्पद्यते सुतराम्। यदा हि सुवास्तुतः पश्चिमस्यां दिश्यवस्थितो निषेधपर्वतोऽप्यभूदार्यावासः, तदाऽप्ययं सुवास्तुप्रदेशः एवासीत्तदीयपूर्वसीमेति गम्यते। ततः क्रमात्सुवास्तुतः प्राग्दक्षिणस्यामपि बहुदूरस्थां श्रीकण्ठशैलसमुद्भूतां जह्नुमुन्याश्रमतलवाहिनीं 'जह्नावीं' यावदार्यावासः सम्पन्नः। अत एवैषा ऋगाम्नाता (३।५८।६) पुराणमोकः सख्यं शिवं वां युवोर्नरा द्रविणं जह्नाव्याम् इति।

'जह्नावी' 'जाह्नवी' इत्यनर्थान्तरमित्यस्माकम्। प्रसिद्धैषा नदी भागीरथ्याः शाखाविशेषेत्युत्तराखण्डेऽद्यापि। 'जाह्नवप्रदेशस्य' पुराणैकस्त्वाम्नानमिदं नूनं व्यक्तिगतम्। न तु सार्वजनीनम्। जह्नावीतीरस्थो जाह्नवप्रदेशः खल्वद्यतनपाश्चकोरायाः प्राक्, सिन्धुतः प्रत्यक्, वुनार (वर्नु) प्रदेशश्चोदक्, स्थित इति विश्वकोशसम्पादको वसुदासः। एवं च सुवास्तुसन्निहितैवेयं 'जह्नावी' इति स्वीकृतेऽपि न क्षतिः।

तत एष आर्यवासः सारस्वतप्रदेशेषु विस्तीर्णः। तदाह यास्कः—विश्वामित्र ऋषिः सुदासः पैजवनस्य पुरोहितो बभूव। स वित्तं गृहीत्वा विपाट् छुतुद्र्योः सम्भेदमाययावनुययुरितरे (२।७।२)। इहैव वहव ऋङ्मन्त्राः, सामगानमन्त्राः, अथर्वणमन्त्राश्च समाम्नाताः; यागविधयश्चाऽत्रैव समुद्भूताः, परिपुष्टा वा; आर्यसाम्राज्यं चेहैव प्रथमं विश्रुतम्। अत एव सर्ववैदिकग्रन्थेषु सरस्वतीनामाख्यानादिकं बहुत्रैव श्रूयते।

तदेतस्य सारस्वतप्रदेशस्य भागभूमित्वेन प्रशंसनमप्यनेकत्र श्रूयते; तद्यथा—

नि त्वा दधे वर आ पृथिव्या इलास्पदे सुदिनत्वे अह्नाम्।
दृषद्वत्यां मानुष आपयायां सरस्वत्यां रेवदग्ने दिदीहि[2]॥

(ऋ० ३।२३।४)

---

१. ऋ० ८।२०।३७।

२. अस्यार्थः—इडयास्पदे शस्यबहुले, अत एव 'पृथिव्या वरे' उत्कृष्टप्रदेशे, हे अग्ने! 'रेवत्' रेवान्—धनवान्, अहं 'त्वा' त्वाम्, आ आभिमुख्येन, निदधे स्थापयामि। कश्च सः शस्यबहुलः पृथिव्या वरप्रदेश इत्याह—दृषद्वत्याम् 'आपयायाम्', 'सरस्वत्याम्' इति।

ततो यदा एष आर्यावर्त्तो बहुविस्तृतस्तदैव त्रिसप्तनदीभिः परिव्याप्तमिति वर्णितमस्यामृक्संहितायाम्। तथा चाऽस्तिशाकलसंहितायां दशममण्डले नवर्चमेकं सूक्तम्; तद्धि नदीस्तुतिपरमिति नदीस्तुत् इति भाष्यते, ततस्तदानीन्तनार्यावर्त्तप्रधान-नदीवर्णनं च लभ्यते। तस्येयं पञ्चमी ऋक् ( १० । ७५ )—

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणोह्या सुषोमया।

अत्रश्रुता गङ्गा ( १ ) नदी त्वस्मद्देशेऽतीव प्रसिद्धा। ततः पश्चिमस्था यमुना ( २ )। ततः पश्चिमस्था सरस्वती ( ३ )। ततः पश्चिमस्था शुतुद्री ( ४ ) याऽद्य शतद्रुरित्युच्यते। ततः पश्चिमस्था परुष्णी, सैव 'इरावती' इत्युक्ता यास्ककाले ( निरु० ९ । ३ । ५ ); एतर्हि तु 'ऐरावती' इति। ततः पश्चिमस्था असिक्नी नैव चन्द्रभागा इत्युच्यते। ततः पश्चिमस्था वितस्ता। ऐरावती चन्द्रभागा वितस्तेति तिसृणामासां नीचैः साम्यानतो याऽभूदतिप्रसारा मालवदेशीयकश्यपपुरतः पश्चिमस्थां दक्षिणाभिमुखी महानदी सैवेह मरुद्वृधा इति पञ्चमी ( ५ )। तत एव तस्यपुरतः प्राक्-प्रवाहिता या शुतुद्री तस्या एव शतद्रोरुपरिष्टात्पश्चिमपार्श्वतः सङ्गता च प्राचीनतमा 'आर्जीकीया' ( ६ ); उरुञ्जिरा इत्यप्यस्याः प्राचीनतरं नाम। इयमेव विपाडित्युक्ता यास्ककाले ( नि० ९।३।५ )। विपाशानामिका चेयमिदानीम्। ततोऽपि पश्चिमस्था सुसोमा (७)। येयं तक्षशिलानामप्रदेशान्निम्नगामिनी सिन्धुसङ्गता।

एता एव सप्तनद्यो यावद्भूभागेषु प्रवहन्ति, तावानेव प्रदेशः सप्तनद इति सप्त-सिन्धुरिति वा ख्यायते। सिन्धुश्चेह नदीपर्यायः। तासु गङ्गायमुने विहाय याः पञ्चनद्यो [१]यावत्सु भूभागेषु प्रवहमानाः सन्ति स एव पञ्चनद इति सारस्वतप्रदेशः। ऋक्संहितायां मन्त्रमेकं प्रदर्श्य यदिह वर्णितो ब्रह्मावर्त्तप्रदेशस्ततः परस्तादेष एव प्रदेशः पुण्यभूरिति परिपठ्यते। तथाहि मनुसंहितायाम्—

कुरुक्षेत्रञ्च मत्स्याश्च पञ्चालाः शूरसेनकाः।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः॥

वर्णित एष सप्तनदप्रदेशः सिन्धोः पूर्वपारस्थः। एवं सिन्धोः पश्चिमपारस्थोऽपि विद्यतेऽपरः सप्तनदप्रदेशः। स हीदानीमार्यावर्त्ताद् बहिर्भूतोऽपि आसीत्पुरा आर्यावर्त्ता-न्तर्गतः। अत एव संहितायामित उत्तरं षष्ठ्यामृचि तत्स्थानमपि सप्तानां नदीनां वर्णनं श्रूयते; तथा हि—

---

दृषद्वतीतीरत आरभ्य, सरस्वतीतीरं यावत् नदीतीरप्रदेशः सर्वं एव ब्रह्मावर्त्तः। मानुषे जनपदे तादृशे, त्वं 'दिदीहि' दीप्यस्व। अतएव मनुनोक्तम्—

सरस्वतीदृषद्वत्येयोर्देवनद्योर्यदन्तरम्।
तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते॥

तृष्टा मया प्रथमं यातवे सजूः सुसर्त्वा रसया श्वेत्या त्या,
त्वं सिन्धो कुभया गोमतीं क्रुमु मेहत्न्वा सरथं याभिरीयसे ॥

एतयोः पूर्वापरसप्तनदप्रदेशयोर्मध्ये मध्यहिमवत्समुद्भवोऽवाक्प्रवणः समुद्रान्तः-प्राचीनार्यावर्त्तद्विधाकृदतिप्रबलः सीमदण्ड इवैष सिन्धुर्नामैको नदोऽद्याऽपि राजते। तस्याऽस्य सिन्धोरत्युत्तरस्यामतिदूरपश्चिमस्याञ्च अन्यासां सप्तानां नदीनां विद्यमानताऽपि श्रूयते। तदस्यैव नदीस्तुत्सूक्तस्य सप्तम्यष्टम्योर्ऋचोः समालोचनं स प्रणिधानम्। एतदुक्तत्रिसप्तनद्यपेक्षया सिन्धोर्नदस्य प्राधान्यञ्च वर्णितं तत्रैव सूक्ते प्रथमम्; तद्यथा तत्सूचीयप्रथमर्चः परार्धं एवं:—**प्र सप्त सप्त त्रेधा हि चक्रमुः प्र सृत्वरीणामति-सिन्धुरोजसा**[१]।

तत्त्वतस्तु एतत्त्रिसप्तनदीपरिवृतः सिन्धुमध्य एवासीत् पूर्वकालिक आर्यावर्त्तः। अत एव ऐतरेयके श्रुतम्—**यस्तेजो ब्रह्मवर्चसमिच्छेत्,** प्राङ् स इयात्; योऽन्नाद्य-मिच्छेत्....दक्षिणा स इयात् यः सोपतीथमिच्छेत्....उदङ् स इयात्, (१।२।२। तदत्रार्यावर्त्तीयसिन्धुमेव मध्यावधि मन्यावहे।

अथर्वसंहितायाः पञ्चमकाण्डीयचतुर्दशर्च्ये द्वाविंशतितमसूक्तस्य तृतीयमन्त्रे 'परुष' नाम जनपदस्य, चतुर्थे महावृषप्रदेशस्य, पञ्चमसप्तमयोः 'मूजवत्' प्रदेशस्य, बह्लिकदेशस्यापि, अष्टमे पुनः, 'महावृषमूजवतोः' नवमे पुनरेव बह्लीकस्य, चतुर्दशे त्वन्तिमे 'अङ्गमगधमूजवद्गान्धारीणाम्' च श्रवणमस्ति। परम्, उक्ता इमे सर्वे एव जनपदास्तदानीमासन् अवैदिकवासा च गम्यतेऽत एव।

सोमस्यानार्यवासित्वमधिकृतत्वं वा तु -ऐतरेयब्राह्मणेऽपि सुव्यक्तम्। एवं 'महावृषस्याऽपि' सिद्धान्तः कृत एव श्वेतपर्वतादपि प्रतीच्यस्य बह्लिकस्य तु यदार्या-वासत्वं प्रतीयते—'बह्लीकः प्रातिपीयः शुश्राव' इत्यादि (शत० ब्रा० १२।३।३)। श्रुतितः, तस्याऽपि कालभेदव्यवस्थैव स्वीकार्या। 'अङ्गराज्यस्य' चासीत्तदानीमनार्यम्। कुरुराज-दुर्योधनकालत एव तस्याऽभवदार्यावर्त्तान्तर्गतत्वम्। मगधस्य त्वनार्यवासत्वेन निन्दा श्रूयते। तथा हि (ऋ० ३।५३।१४) **"किं कृण्वन्ति कीकटेषु गावो, नाशिरं दुहे, न तपन्ति धर्मम्"** इति। निरुक्तकारेण चैतद् व्याख्यायामुक्तम्—**कीकटो नामदेशोऽ-नार्यनिवासः** (६।३।४) इति। कीकट एव मगधः। तत्त्वतो हिमवत्पृष्ठमध्यस्थो 'मूज-वान्नाम' नगराजस्तु स्यादार्यवासोऽनार्यवासो वा, परमासीत्पुरा आर्यावर्त्तोत्तरसीमेति तु

---

१. **अस्यार्थः—आपः नद्यः 'सप्त सप्त' भूत्वा, त्रेधा त्रिधा, त्रिश्रेण्यः सत्यः, 'प्रचक्रमुः' प्रावहन्, प्रवहन्ति अस्मिन् आर्यावर्त्ते। सिन्धोः पूर्वस्यां सप्त, पश्चिमस्यां सप्त, उत्तरस्यां च सप्तेति। तासां 'सृत्वरीणाम्' एकविंशतिसंख्याकानां नदीनाम्, ओजसस्बलेन, अति अतिज्ञापितः एको नदः सिन्धुः।......अन्यत्र चाऽत्र संहितायां त्रिसप्तनदीनां श्रवणमस्ति। तद्यथा— "त्रिः सप्तसस्रा नद्यः" (ऋ० १०।६४।८)।**

मन्तव्यमेव । तदेवम्—'अद्यतनपारस्पराज्यपश्चिमोत्तरस्थैशियामाइनरतः प्राक्, प्रत्यगनुगङ्गप्रदेशात्, उदक्सिन्धुसागरसङ्गमात्, अवाक् च मूजवतश्चाऽयमार्यावर्त्तः संहिताकालीन इति निष्पद्यते ।

तदेवमैतरेयकाले हिमवद्दक्षिणपार्श्वनिम्नस्थं किरातजातिनिकेतनं किरातनगरमेवासीदार्यावर्त्तस्याऽस्य पूर्वप्रत्यन्तः, दक्षिणस्यां भरतवंशीयाऽधिकृतं सत्त्वद्राज्यमप्यासीदार्यावर्त्तान्तिर्गतम्, पश्चिमस्यां गिरिनदीग्रामसीमानां प्राचुर्यवर्णनाद् गान्धारदेशादिन्यः परस्तादप्यासीदार्यवास इति गम्यते। उत्तरस्यां तु उत्तरकुरूणामजेयत्वेन वर्णनात् ततोऽर्वागेवासीदार्यावर्त्तोत्तरसीमेति च प्रतीयत एवेति । एकत्र चात्र श्रुतम्—**त एतेऽन्ध्राः,**[१] **पुण्ड्राः, शबराः, पुलिन्दा, मूतिबा, इत्युदन्त्या बहवो भवन्तीति** ( ७।३।६ )। तत्र 'एते' इति इदं शब्दव्यवहारादैतरेयकालेऽपि आसन्निमा जातय इति, 'उदन्त्या' इत्युक्तै प्रत्यन्तवासिनोऽनार्या इति च गम्यते। तथा चैषां देशानामनार्यभूत्वाऽभिधानादेषामन्तःस्थिताःप्रदेशा एवासन् तदानीमार्यभूमय इति सुवचम् ।

अथ श्रूयते ह्येतद् विदेघमाथवाख्यानं शतपथे ( १।३।३।१०-१९ ) **विदेघो माथवोऽग्निं वैश्वानरं मुखे बभार—स इमाः सर्वा नदीरति ददाह, सदानीरेत्युत्तराद् गिरेर्निर्द्धावति, तां हैव नाति ददाह, तां ह स्मैतां पुरा ब्राह्मणास्तद्धा क्षेत्रतरमिवास स्रावतरमिवास्वादितमग्निना वैश्वानरेणेति । तदु हैतर्हि क्षेत्रतरमिव—सैषाऽप्येतर्हि 'कोशल विदेहानां' मर्यादा ते हि माधवाः स मे मुखान्निरपादीति** इति । एतस्मादाख्यानात् व्यक्तमभिगम्यते, विदेहनाममैथिलजनपदस्याऽनतिप्राचीनाऽऽर्यभूत्वम् । परं न तदापि दक्षिणमगधात् प्रत्यगेवार्यावर्त्तत्व प्रतीतेः । अपीह शतपथे (१२।६।३।३ ) **'बह्लिकः प्रातिपीयः शुश्राव'** इति श्रवणात् पश्चिमस्यां तावदप्यासीद् बाह्लीकस्यार्यावर्त्तत्वमिति च स्वीकार्यम् ।

पाणिन्यागमेऽपि आयुधजीविवाचिपर्श्वादिगणे पठितो **'बह्लीकः** ( पा० सू० ५।३।११७ ) **कम्बोजाल्लुक्** ( पा० ४।१।१७५ ) इति 'कम्बोज' ग्रहणं च दृश्यते । तत्र सिन्ध्वादिगणेऽपि पठितः **कम्बोजः** ( पा० ४।३।९३ ) । गणपाठोऽपि पाणिनिनैव कृत इति सिद्धान्तितं पतञ्जलिना ( १।१।३४ ) । महाभारतेऽपि वर्णितौ **काम्बोजबाह्लीकौ** ( द्रो० प० १५५।११७ ) । अथ यास्केनापि—**कम्बोजाः कम्बलभोजाः कमनीयभोजा वा ? कम्बलः कमनीयो भवति** ( २।१।४ ) इति कम्बोजशब्दो निरुक्तः । **प्रकृतय एवैकेषु भाष्यन्ते, विकृतय एवैकेषु** इत्याद्युक्त्वा तदुदाहरणाय प्रोक्तं चैतत्—**शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते विकारमस्यार्येषु भाषन्ते 'शव'** इति **दाति लवणार्थे प्राच्येषु दात्रमुदीच्येषु** ( २।१।३-४ ) इति ।

पातञ्जले महाभाष्ये आर्यावर्त्तस्यास्य चतुःसीमानिरूपणमेवं कृतम्—**कः पुनरार्यावर्त्तः ? प्रागादर्शात्, प्रत्यक्कालकवनात्,** दक्षिणेन **हिमवन्तम्**

**उत्तरेण पारियात्रम्** ( २।४।१० ) । अत्राह तट्टीकाकारः कैयटः --"**आदर्शादयः पर्वतविशेषाः**" इत्येव । **जनपदतदवबोध्यश्च** ( पा०४।२।१२५ ) इतिसूत्रस्योदाहरणभूतं यदिदमादर्शक इति पदं लभ्यते, इतो ज्ञायते—अस्ति आदर्शनामा कश्चित्सीमपर्वत इति । एवञ्च पतञ्जलिकालेऽपि श्वेतगिरिरेवासीदार्यावर्त्तस्य पश्चिमः सीमेत्यनुमानमपि न स्यादसङ्गतम् । अथात्र मनुस्त्वाह—

आ समुद्रात्तु वै पूर्वाद् आ समुद्राच्च पश्चिमात् ।
तयोरेवान्तरं गिर्योः आर्यावर्त्तं विदुर्बुधाः ॥

'तयोः गिर्योः' पूर्वोपात्तयोः हिमवद्विन्ध्ययोः । तदित्थं पूर्वापरसमुद्रव्याप्येष देशो मनोः सम्मतः । तत्र पूर्वः स्याद् गङ्गासागरसङ्गमः । स एष आर्यावर्त्तः '**ब्रह्मावर्त्तदेशो ब्रह्मर्षिदेशो यज्ञियदेशश्चेति** चतुर्विधत्वेन वर्णितः, तेन तत्प्रान्तभूमीनां म्लेच्छभूत्वमुररीकृतं च । अत्र हि ब्रह्मावर्त्तब्रह्मर्षिमध्यदेशास्तु 'यज्ञियाः' यज्ञकार्यार्हभूमय एव, तत्र काऽस्ति विचारणा, निर्दिष्टेभ्य एभ्यो बहिरपि आर्यावर्त्तान्तर्गताः सिन्धुसौवीरकाश्यादयो देशा अपि यज्ञानुष्ठानार्हभूमय इति 'यज्ञियो देवाः' उच्यन्ते । एतस्माच्चार्यावर्त्ताद् बहिः स्थिताः—

पूर्वे किराता यस्यान्ते पश्चिमे यवनाः स्मृताः ।
आन्ध्रा दक्षिणतो वीर तुरस्कास्त्वपि चोत्तरे ॥

( वायु० १३।४० )

एवमादिकाः—खोराशानतुरस्कपूर्ववङ्गोत्तरवङ्गाऽऽन्ध्रप्राच्यमगधादयोऽपि कृष्णसारमृगहीनत्वेन अयज्ञियत्वान्म्लेच्छदेशा एव । तत्त्वतस्तु '**तयोरेवान्तरं गिर्योः**' इति मनूक्तेः पूर्वस्यां यावत्येव विन्ध्यगिरेः प्रसृतिस्तावानेव यज्ञिय आर्यावर्त्तः स्वीकार्यः । ततो वहिरार्यावर्त्तत्वेऽपि, न त्वस्ति यज्ञियत्वमिति म्लेच्छभूत्वमेव । अत एव 'अङ्गवङ्ग' गमननिषेधः संगच्छते । सूचितन्त्वेतद् तत्र मनुनैव –"**एतान् द्विजातयो देशान् संश्रयेरन् प्रयत्नतः**" इति । 'एतान्' ब्रह्मावर्त्तादीनित्यर्थः । अस्ति पाणिनेरेकं सूत्रं **परोक्षे लिट्** ( ३।२।११४ ) । अत्र चाऽस्ति कात्यायनवार्तिकमिदम्—**अत्यन्ताऽपह्नवे च** इति, 'लिट् वक्तव्य' इति शेषः । उदाहरणं चाऽस्य दर्शितं पतञ्जलिना –'**नो कलिङ्गान् जगाम**' । एष च कलिङ्गप्रदेशोऽद्यापि आर्यावर्त्ताद् बहिरेव संस्थितः । पुरा आसीदयम् 'उत्कलिङ्ग-मध्यकलिङ्ग-कलिङ्गेति' त्रिधा विभक्त इति 'त्रिकलिङ्ग' नामा । 'त्रैलिङ्ग' नाम तु तत एव समुद्भूतम् । अपि 'उत्कलिङ्ग' नामत एव 'उत्कल' नामप्रसिद्धिः ।

अथामरसिंहोऽपि 'प्राच्योदीच्यम्लेच्छेति' चतुर्विभक्तमार्यावर्त्तदेशसंस्थानमश्लोकयत् । तद्यथा—आर्यावर्त्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः ( २।१।८ ) इति तत्र—

शरावत्यास्तु योऽवधेः देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः,
प्रत्यन्तो म्लेच्छदेशः स्यात् मध्यदेशस्तु मध्यमः ( २।१।६-७ )

प्राक् सहितो दक्षिणो देशः 'प्राग्दक्षिणः' एवं पश्चिमसहितः उत्तरप्रदेशः 'पश्चिमोत्तरः' अन्तं प्रति गतः 'प्रत्यन्तः' सीमान्तप्रदेश इति तदर्थः। तदित्थममरसिंह-काले 'वारावती' नाम नद्येवासीत् प्राच्योदीच्ययोः सीमेति गम्यते। अत एवोक्तं काशिकावृत्तौ ( पा० सू० १।१।७५ )—

प्रागुदञ्चौ विभजते हंसः क्षीरोदके यथा।
विदुषां शब्दसिद्धयर्थं सा नः पातु शरावती॥

अथैवम्—'अनुप्रत्नस्यौकसोहुवे' ( १।३०।९ ) इत्यादिश्रुतिगम्यमार्याणां 'प्रत्नौकस्त्वम्' कतमस्य प्रदेशस्य स्यान्मन्तव्यम् इति चेत्? अत्रोत्तरन्तु—**"स चार्यवासः पूर्वं तावद् हिमवत्पृष्ठस्य दक्षिणभागे सुवास्तुप्रदेशे एवासीद्"** इत्यादिनोक्तमिहैव द्रष्टव्यम्। अपि 'अनुप्रत्नौकस्ये हुवे' इत्यृक् श्रवणमात्रेण, किं सर्वेषामेवार्याणामादिवासोऽन्यत्र क्वचिदासीदित्यनुमानं स्यात् संगतम्, किंतु स्यात्तान्मत्रद्रष्टुरेवेति च विवेच्यम्। यथोक्तम्—जाह्नवप्रदेशस्य पुराणौकस्त्वाम्नानमिदं व्यक्तिगतम्, न तु सार्वजनीनम् इति वेदितव्यम्। तथा चाऽस्य मन्त्रस्य द्रष्टुः शुनः शेपस्यैव पूर्वावास आसीत् जाह्नव्या मूले जह्नूनाश्वाधिपत्ये ( ऐ० ब्रा० ७।३।६ ) जह्नुमुन्याश्रमकान्तारे। तत एव हरिश्चन्द्रपुत्रो रोहितस्तं क्रीत्वा सारस्वतप्रदेशमानीतवान्। तच्चाख्यानमैत-रेयके ( ७।३।१-१६ ) श्रुतम्। जह्नोस्तदाश्रमारण्यं त्वद्याऽपि 'जाह्नवप्रदेश इति गङ्गाप्रभवे हिमवत्पृष्ठे प्रसिद्धम्। तत एव जाह्नवप्रदेशात् गङ्गायाः प्रकाशादर्शनाद् गङ्गायाश्चापरं नाम 'जाह्नवी' इति। तदित्थम्—'अनुप्रत्नस्यौकसो हुवे' इति श्रुतिः सिद्धान्तपक्षेऽपि सुसंगच्छत एव। अपि वा हिमवत्पृष्ठस्थौकोनामनदीतीरभूमय एव 'प्रत्नौकसः'। तत्र चासीत् केषाञ्चिदार्याणां पुरा वास इत्यपि सुवचनम्।

ऋग्वेदकालिकार्यावर्त्तविषये पाश्चात्यानां केषाञ्चिद् विदुषां प्रत्नतत्त्वविमर्श-कानाम्, तदनुयायिनां भारतीयानां च कतिपयपुरातत्त्वाऽनुसन्धित्सूनां मन्तव्यमित्थ-मुपलभ्यते—

तथाहि—ऋग्वेदकृतां वासभूमिस्तत्तन्नदीपर्वतादिनिर्देशविशेषैरभिव्यज्यते। तत्र तावदयं निर्णयः—आर्याः प्रथमं हिन्दुकुशपर्वतस्य पाश्चात्त्येन कान्तारवर्त्मना समभूभागान् प्रविश्य, भारतवर्षस्य पश्चिमोत्तारभागाऽवस्थितं पारसीकभाषायां पञ्चाल इत्यभिधीयमानं जनपदमध्यवात्सुरिति। ऋग्वेदे हि प्रायेण पञ्चविंशतिर्नद्यो निर्दिश्यन्ते तत्र द्वित्राः केवलमवहाय, अन्याः सर्वा अपि सशाखायाः सिन्धुनद्याः संस्थानविशेषैरनुगताः। तासामेव पञ्च, 'पञ्चापदेशे' शाखापञ्चकत्वेन प्रवहन्त्यः पश्चादेकीभूय 'सिन्धुनदी' समगच्छन्ति ; या खलु वितस्ता, असिक्नी इयं

पश्चाच्चन्द्रभागेत्याख्याता, परुष्णी, विपाट्, शुतुद्री च। अथाऽपि वैदिकवर्गीया जनाः केचित्, सिन्धोः पार एव 'कुभायाः' प्रधानशाखामन्ववसिता, उत्तरतः 'सुवास्तु' पर्यन्तं दक्षिणतः 'क्रुमु गोमती' पर्यन्तं च स्थिताः।

कश्चिदेव नद्यः सूक्तेषु द्वित्राऽधिकवारं निर्दिश्यन्ते, बह्वयस्तु सकृदेव। 'सिन्धुः, सरस्वती' च बहुत्र निर्दिश्येते। समग्रमेकं सूक्तम् ( १०।७५ ) सिन्धोः प्रशंसार्थं प्रवृत्तम्। सूक्तेऽस्मिन् अन्या अप्यष्टादश नद्यः प्रस्तूयन्ते। ताश्च भूयसा तदीयाः शाखा एव।

सिन्धुशब्दः, संस्कृतभाषायामार्याधिवासभूमेः पश्चिमसीमरेखात्मकस्य नदीमात्रस्य वाचकत्वेन प्रथमं प्रयुक्तः। ततः पश्चात्प्राक्तनागन्तुकैरिह सिन्धोरेवाऽऽग्रतो दर्शनात् स एव शब्दः उपलक्षणमर्यादया 'भारतवर्षस्याऽपि' नामत्वेन परिकल्पितः। एवं ग्रीकैः, इण्डोस् इत्येवं रूपेण गृहीतोऽयं शब्दस्तन्नदीलक्षितस्य देशस्य इण्डिय इति नामकरणे द्वारी बभूव। अपि चाऽयं शब्दः पुरा पारसीकैः हिन्दुरूपेणोपात्तोऽवरतायां केवलदेशनामत्वेन प्रयुक्तः। यत्पुनरर्वाचीनैः पारसीकैः सिन्धुनदीपरिसरप्रदेशात्मक विन्ध्यहिमाचलान्तःपाती, भागः हिन्दुस्थानमिति व्यपदिश्यते, तद्युक्तरूपमाभाति।

ऋग्वेदे यत्र तत्र सप्तसिन्धवो निर्दिश्यन्ते। एकस्मिन्मन्त्रेऽयं शब्दः 'आर्याधिवास' भूमेराभिधायकत्वेन प्रयुक्तो दृश्यते। इदमत्रावधेयं यद् 'अवास्तायाम्' अयं शब्दः पौरस्त्यकाबुलस्थानमात्रस्याभिधायकः 'हप्तहिन्दु' रूपेणोपलभ्यते। यद्यत्र 'सप्त' पदं नियतसंख्यापरत्वेन विवक्षितं स्यात्, तर्हि सप्तसिन्धवः इत्यनेन 'कुभासिन्धू' पञ्चापगताः पञ्च नद्यश्च ग्राह्याः। तत्र 'कुभाया' एव पश्चात् काले 'सरस्वती' इति नामधेयं परिकल्पितं तर्क्यते। यतो ह्येषा 'सरस्वती' ऋग्वेदेऽत्यन्तं पावनत्वेनाऽभिमता पौनःपुन्येन निर्दिश्यते, निरतिशयं देवतीकृत्य स्तूयते च। किन्तु ऋषेः स्तुतिः निर्विशेषमतिविशालां कामपि नदीं विषयीकरोति। अतश्च सुगृहीतनामानो रॉथप्रभृतयो विद्वान्सः 'सरस्वती' इत्येतत्, सिन्धोरेव, तद्गतपवित्रत्वद्योतकं नामधेयमित्यातिष्ठन्ते। परन्तु केचिन्मन्त्रेषु 'यमुनाशुतुद्र्योरन्तरालवर्त्तिनी काऽपि क्षुद्रा नदी सरस्वती इत्यनेन विवक्षितेति ज्ञायते।

अपरञ्च, पश्चात् काले 'सरस्वती' दृषद्वत्या'सह अम्बालदेशात् दक्षिणतः स्थितस्य सिम्लदेशादुपत्रिंशत्क्रोशदूरे लब्धाऽवधिकस्य ब्रह्मावर्त्तदेशस्य सीमारेखात्वेन निर्दिष्टा दृश्यते। सैषा क्षुद्रा नदी यद्यप्यद्यत्वे सिकतान्तर्हिता, न प्रकाशते। तथाऽपि तदीयः प्राक्तनो रयपथः सम्प्रत्युपलभ्यमानः, पुरा तस्याः 'शुतुद्री' शाखात्वेन अवस्थानमनुमापयति। तेनेदमनुमीयते यत्—सा पुरा वेदकाले समुद्रं सञ्जगाम। इतो विशालतरा च बभूवेति। अपि च सा तस्मिन् काले परमपावनत्वेनाऽभिमताऽभूत्। अत एव सिन्ध्वादिमहानद्यनुरूपान्महागुणांस्तद्गतत्वेन वर्णयतामृषीणामुक्तिषु नाऽत्युक्तिदोषः प्रसृज्यते।

इदमप्यनुसन्धेयं यत्—'सरस्वतीदृषद्वत्योः' कूलेऽग्निरात्मानमुद्दीपयतीति वर्णयता मन्त्रेण 'दृषद्वत्यपि' सकृत् 'सरस्वत्या' सह निर्दिष्टोपलभ्यते। एतेन 'ऋग्वेद-काले सिन्धुनद्याः' पौरस्त्यप्रान्तोऽपि साङ्गोपाङ्गानां यज्ञकर्मणाम्, मन्त्रनिर्माणस्य च निर्विघ्नप्रवृत्तेः स्थानभूतः पुण्यक्षेत्रतामवाप्नोति अवगम्यते। अपि च, तादृग्वेदकालस्या ऽन्तिमे भागे 'आर्यवर्गीयाः' केचित्तं देशमतिक्रम्य 'गङ्गायाः' पाश्चात्त्यतीरं प्रापन्, इत्यपि शक्यमभ्यूहितुम्। तथा तद्युत्तरतः स्थिता 'गङ्गायाः' प्रतीच्यतमा शाखा 'यमुना'ऽभिधाना नदी, ऋग्वेदे मन्त्रत्रयनिर्दिष्टोपलभ्यते। तत्र मन्त्रद्वये, तत्कूलपर्यन्तमार्यैरभिव्याप्तमिति व्यक्तीभवति। एवं गङ्गा'ऽपि तेषां परिचिता ज्ञायते। यतो हि तन्नामधेयमृग्वेदे साक्षादेकस्मिन्, असाक्षादन्यस्मिंश्च मन्त्रे निर्दिष्टमुपलभ्यते। इदमप्यवधेयं यद्—'गङ्गाया नामाऽपि नोपलभ्यते वेदान्तरेष्विति। दक्षिणाशां लक्ष्यीकृत्य प्रयाता आर्यवर्गीयास्तु पश्चापदेशात् प्रवहन्त्यः पञ्चनद्यो यत्र सिन्धुनद्या सह संभिद्यन्ते, तावत् पर्यन्तमभिव्यापुः, न तां रेखामतिक्रम्य, जग्मुर्ऋग्वेदमन्त्रनिर्माणकाले।

एवं पर्वता अपि ऋग्वेदे बहुत्र निर्दिश्यन्ते। नद्यश्च पर्वतप्रभवत्वेन स्तूयन्ते। तत्र हिमवन्तः इत्यनेन 'हिमाद्रय' एव विवक्षिताः। ते च विधात्रा पाल्यमानाः श्रूयन्ते। तदीयाः शृङ्गविशेषास्तु नैव ऋग्वेदे शृङ्गग्राहिकया निर्दिष्टाः। 'मूजवत्' समाख्यमेकं शृङ्गमन्त्रोक्त्या सोमप्ररोहभूमित्वेन वर्ण्यते। शृङ्गमिदं 'काबुल' देशप्रत्यासन्ने 'काश्मीरेभ्यो' दक्षिणपश्चिमावस्थितेषु पर्वतशृङ्गेष्वन्यतमं च भवितुमर्हतीत्यर्वाचीनवैदिकग्रन्थाऽ-वलोडनान्निश्चीयते। अथर्ववेदस्त्वन्यदपि हिमालयसम्बन्धि गिरिद्वयं प्रस्तौति। तत्रैकः 'त्रिकुत्' इत्युच्यते। अयमर्वाचीनेषु वैदिकग्रन्थेषु 'त्रिकूट' इति देश्यभ्रंशन् 'त्रिकोट' इति च व्यपदिश्यते। तस्यैवोपत्यकायाम् 'असिक्नी' प्रवहति। अन्यश्च 'नावप्रभ्रंशन् समाख्यः। अयमेव पुराणोक्तो 'नौबन्धनाख्यः', शतपथब्राह्मणोक्तः 'मनोरवसर्पणा' ख्यश्चगिरिः। यत्र हि तोयविप्लवाऽवसाने मनोर्नौका निश्चलाऽभूदिति शतपथब्राह्मणे (१।६।३।१-६) श्रूयते। आर्यावर्त्तदक्षिणापथयोर्मध्यवर्त्तिनो 'विन्ध्याद्रे'-नाऽमापि नोपलभ्यते ऋग्वेदे। तथा विन्ध्याद्रिं दक्षिणेन प्रवहन्ती 'नर्मदा' अपि न प्रस्तूयते एवंविधैर्लिङ्गविशेषैरेतदध्यवसीयते यत्—आर्याः, ऋङ्मन्त्रनिर्माणकाले, पश्चिमतः सिन्धुनद्या, पूर्वतः शुतुद्र्या उत्तरतो हिमवता, च परिगतं तालवृन्ताकृतिं पश्चिमोत्तरभागं पूर्व-पश्चिमभागयोरुक्तं सीमाद्वयमतिक्रम्य, बहिःप्रसृतौ पार्श्वभागौ चाऽध्यासिषतेति।

इत्यमेकत्र स्थलविशेषनिर्देशैः, अपरत्र शीतोष्णस्थितिवर्णनैः, अन्यत्र तद्देशमात्र-सुलभानां वृक्षलतादीनां निर्देशैश्च ऋग्वेदद्रष्टारः परमर्षयः कुभानदीमारभ्य, यमुनानदी-पर्यन्तमायतं भारतवर्षस्य पश्चिमोत्तरं भागमभिव्यापन्नित्यवधार्यते। इत्थं नानादिग्दे-शान् प्राप्य, नानावर्गत्वेन भिन्ना अपि आर्या जातिमताचारैः सर्वेऽपि समानरूपा एवावर्ति-षत। समुदायसामान्यवाचिना 'आर्य'शब्देन व्यपदिष्टास्ते स्वप्रतिपक्ष्यानादिनिवासिनो

जनान् प्रथमं 'दस्युदास' शब्दाभ्यामाहूय, पश्चात् स्वनामविरुद्धया 'अनार्य'संज्ञया व्यपादिसन्। वर्गयोरनयोः स्वभावसिद्धः स्वरूपभेदस्तु केवलं वर्णकृतः।

## धर्मनिमित्तभूतदेशाः

कृष्णसारस्तु चरति मृगो यत्र स्वभावतः।

स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परम्॥ ( मनु० २।२३ )

कृष्णः श्वेतः कृष्णपीतो वा कृष्णसाराख्यो मृगो यत्र चरति निवसन्ति; सम्भवः उत्पत्तिर्यत्र देशे तस्य स्वभावतः न पुनर्देशान्तरात्प्राशस्त्योपायनादिना निमित्तेनानीतस्य कियन्तमपि कालं निवासः स देशो यज्ञियो यागार्हो बोद्धव्यः। अतः कृष्णमृगचरणात्परोऽन्यो म्लेच्छदेशः। म्लेच्छाः चातुर्वर्ण्यजात्यपेताः, प्रतिलोमजातीयाऽनधिकृताः—मेदान्ध्रशबरपुलिन्दादयः।

एतेषु देशेषु यागाङ्गानि दर्भपलाशखदिरादीनि प्रायेण च भवन्ति; अधिकारिणश्च त्रैवर्णिका त्रैविद्याश्च तेष्वेव देशेषु दृश्यन्ते; अत एतदवलम्बनो यागार्हताऽनुवादः। यथोक्तं 'म्लेच्छदेशस्त्वतः परः' इत्येषोऽपि प्रायिकोऽनुवाद एव। प्रायेण ह्येषु देशेषु म्लेच्छा भवन्ति। न त्वनेन देशसम्बन्धेन म्लेच्छा लक्ष्यन्ते स्वतस्तेषां प्रसिद्धेः, ब्राह्मणादिजातिवत्। अथार्थद्वारेणाऽयं शब्दप्रवृत्तो म्लेच्छानां देश इति। तत्र यदि कथञ्चिद् ब्रह्मावर्त्तादिदेशमपि आक्रमेयुः, तत्रैवावस्थानं कुर्युः, भवेदेवाऽसौ 'म्लेच्छदेशः'; तथा यदि कश्चित् क्षत्रियादिजातीयो राजा साध्वाचरणो म्लेच्छात्पराजयेत्, चातुर्वर्ण्यं वासयेत्, म्लेच्छांश्चार्यावर्त्त इव चाण्डालान् व्यवस्थापयेत्, सोऽपि स्याद् यज्ञियः। यतो न भूमिः स्वतो दुष्टा, संसर्गाद्धि सा दुष्यति अमेध्योपहतेव। अत उक्तदेशव्यतिरेकेणाऽपि सति सामग्रये त्रैवर्णिकेन अकृष्णमृगचरणेऽपि देशे यष्टव्यमेव। तस्मादनुवादोऽयं 'स यज्ञियो देशो म्लेच्छदेशस्त्वतः परः।'

यदर्थं देशसंज्ञाभेदकथनं तमिदानीं विधिमाह। एतान् ब्रह्मावर्त्तादीनां देशान् द्विजातयो देशान्तरेऽपि जाताः, संश्रयेरन्; जन्मदेशं त्यक्त्वा ब्रह्मावर्त्तादिदेशसंश्रयणं प्रयत्नेन कर्त्तव्यम्। अत्र केचिदाहुः, अदृष्टार्थ एवऽयमेतद्देशसंश्रयणविधिः। सत्यपि देशान्तरेऽधिकारसंभवे एतेषु निवासः कर्त्तव्यः। तत्र कल्प्याधिकारत्वे यदि वा गङ्गादितीर्थस्नानवद् एतद्देशनिवासविधिः पावनत्वेन कल्प्यते। यथैव काश्चिदापः पवित्रतरा, एवं भूमिभागा अपि केचिदेव पवित्रं यथोक्तं पुराणे। यदि वा संश्रयणादेव स्वतन्त्रात्स्वर्गो विश्वजिद्वत्। तत्रैतौ द्वावपि पक्षावप्राप्तौ। यद्यप्राप्तः संश्रयो विधीयते, कल्प्येताऽप्यधिकारः। तत्र चिन्त्यते कतरः पक्षो युक्त इति। स तु नित्यकाम्यानामुक्तरीत्या एतद्देश एवानुष्ठानसम्भवादधिकृतानां प्राप्त एव; न ह्येतद्देशव्यतिरेकेण कृत्स्नधर्मानुष्ठानसम्भवः।

तथाहि, हिमवति तावत्काश्मीरादौ शीतेनार्दिता न बहिः सन्ध्योपासनेऽधिक्रियन्ते; न च यथाविधि स्वाध्यायसम्भवः प्राग्वोदग्वा ग्रामादुपनिष्क्रम्येति; न हि हेमन्तशिशिरयोरहरहर्नदीस्नानादिसम्भवः।

इदमेव द्विजातय इति वचनलिङ्गम्। न कश्चिदेव देशोऽसति म्लेच्छसम्बन्धे स्वत एव म्लेच्छदेशः; अन्यथा तद्देशसम्बन्धान्म्लेच्छत्वे कथं द्विजातित्वम् ? अथोच्यते— न गमनमात्रान्म्लेच्छता, अपि तु निवासात्; स चानेन प्रतिषिध्यते—तच्च न; संश्रयोऽत्र श्रूयते; स च देशान्तरे भवतस्तत्त्यागेनान्यदेशसम्बन्धः, न संश्रितस्यैव संश्रयणम्। अन्यथा एवमेवाऽवक्ष्यद्—एतान् देशांस्त्यक्त्वा नाऽन्यत्र निवसेत्। अथ सिद्धे श्रयणे, तद्वचनमन्यनिवृत्त्यर्थमिति परिसंख्या यथा स्यात्, तस्याश्च त्रयो दोषाः। अथ हानिर्लक्ष्यते, एतान् देशान्न जह्यादिति ? न श्रुतार्थसम्भवे लक्षणा युक्ता; अत एव न भूतपूर्वगतिः। तस्माल्लिङ्गमिदम्—**न देशसम्बन्धेन पुरुषा म्लेच्छाः, किं तर्हि ? पुरुषसम्बन्धेन म्लेच्छदेशता**। शूद्रस्य द्विजातिशुश्रूषाया विहितत्वात्, तद्देशनिवासे सर्वदा प्राप्ते, तत्राऽजीवतो देशान्तरनिवासोऽभ्यनुज्ञायते। यदा बहुकुटुम्बतया शुश्रूषाऽशक्त्या वा, अयं द्विजातिमाश्रितः, स न एनं बिभृयात्; तदा देशान्तरे सम्भवति धनार्जने निवसेत्; तत्राऽपि न म्लेच्छभूयिष्ठे; किं तर्हि ? यज्ञिये; म्लेच्छावृते यानासनाशनादिक्रियानिमित्तस्य संसर्गस्याऽपरिहार्यत्वात्तद्भावापत्तिप्रसङ्गात्। 'वृत्तिकर्शितो' वृत्त्यभावपीडितः, वृत्तिः आत्मकुटुम्बस्थितिसमर्थं धनम्, तदभावे यत् कर्शनं तत्सम्बन्धितयोच्यते; यथा 'वर्षाकृते सुभिक्षदुर्भिक्षे'; दुर्भिक्षं वर्षाभावकृतम्, दुर्भिक्षं वर्षाकृतत्वेन व्यपदिश्यते। 'यस्मिंस्तस्मिन्' इत्यनियममाह।

अथ धर्महेतुनिरूपणम्; स द्विविधः, आरादुपकारकसन्निपत्योपकारकभेदात्। आद्यो यथा प्रयाजादिः; द्वितीयो द्रव्यदेवतादेशकालकर्त्रादिः, तत्संस्कारश्च। द्रव्यं 'व्रीहिभिर्यजेत्' इत्यादिवाक्ये विहितम्; देवता '**यदाग्नेयोऽष्टाकपाल**' इत्यादावग्न्यादिः, कालादि आहतुः शङ्खलिखितौ—**तत्र धर्मलक्षणानि देशः, कालः, उपायः, द्रव्यम्, श्रद्धा, पात्रम्, त्याग इति। समस्तेषु धर्मोदयः साधारणः, अन्यथा विपरीतः श्रद्धापात्रसम्पन्नो धर्मः कालाऽपेक्षः, श्रद्धाद्रव्योत्पत्तिरिति कालस्तन्मूलो देश इति**। याज्ञवल्क्योऽपि।

देशे काल उपायेन द्रव्यं श्रद्धासमन्वितम्।
पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम्॥

श्रद्धापात्रद्रव्यसम्पत्तिरप्रतिषिद्धौ देशकालौ धर्मसम्पत्तिरिति। तत्रदेशो मार्कण्डेयपुराणे—

भगवत्कथितस्त्वेष जम्बूद्वीपः समासतः।
यदेतद्भवता प्रोक्तं कर्म नाऽन्यत्र पुण्यदम्॥

पापदं वा महाभाग, वर्जयित्वा तु भारतम् ।
इतः स्वर्गश्च मोक्षश्च मध्यश्चाऽन्तश्च गम्यते ॥
न खल्वन्यत्र मर्त्यानां भूमौ कर्मविधीयते ।
योजनानां सहस्रं वै द्वीपोऽयं दक्षिणोत्तरात् ॥
पूर्वे किराता यस्याऽन्ते पश्चिमा यवनाःस्मृताः ।
दक्षिणो मलयो यस्य हिमवानुत्तरे तथा ॥
तदेतद् भारतं वर्षं सर्वबीजं द्विजोत्तम ।
ब्रह्मत्वममरेशत्वं देवत्वमपि दुर्लभम् ॥
मृगपश्वोषधिवरा योनीस्तद्वदतोऽश्नुते ।
स्थावराणां च सर्वेषामतो ब्रह्मन् शुभाशुभे ॥
प्रयान्ति कर्मभूर्ब्रह्मन्नाऽन्यलोकेषु विद्यते ।
स्वर्गापवर्गप्राप्तिश्च पुण्यं पापं च वै तथा ॥
देवानामपि विप्रर्षे सदैवैष मनोरथः ।
अपि मानुष्यमाप्स्यामो देवत्वात्प्रच्युताः क्षितौ ॥
मनुष्यः कुरुते तत्तु यन्न शक्यं सुरासुरैः ॥

( मार्क० अध्याय ५७ )

विष्णुपुराणे—

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः ॥
अत्र जन्मसहस्राणां सहस्रैरपि सत्तम ।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ॥
कर्मभूमिरियं स्वर्गमपवर्गञ्च गच्छताम् ।
गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे,
स्वर्गापवर्गास्पदमार्गभूते भवन्ति भूयः पुरुषाः सुरत्वात् ।
कर्माण्यसङ्कल्पिततत्फलानि सन्न्यस्य विष्णोः परमात्मरूपे
अवाप्य तां कर्ममहीमनन्ते तस्मिल्लयं ये त्वमलाः प्रयान्ति ॥

( वि० पु० २ अ० ३ अ० )

भविष्यपुराणे—

ब्रह्मावर्त्तः परोदेशः ऋषिदेशस्त्वनन्तरः ।
मध्यदेशस्ततो न्यूनः आर्यावर्त्तस्त्वनन्तरः ॥

वसिष्ठः ( अ० १ सू० ८-१५ )—

धर्म आर्यावर्त्ते; आर्यावर्त्तः प्रागादर्शात्, ( प्रागदर्शनात् ) प्रत्यक्कालकवनाद्, उदक्पारियात्राद्, दक्षिणेन हिमवतः, उत्तरेण च विन्ध्यस्य । तस्मिन् देशे ये धर्मा ये चाचाराः, ते सर्वत्र ( सर्वे ) प्रत्येतव्याः; न ( ह्य ) त्व--न्ये प्रतिलोमक ( क्ष ) धर्मा ( णः ) णाम् ।

गङ्गायमुनयोरन्तरेऽप्येके, यावद्वा कृष्णमृगो विचरति, तावद्ब्रह्मवर्चसमित्यन्ये । अथाऽपि भाल्लविनो निदाने गाथामुदाहरन्ति—

पश्चात्सिन्धुर्विधारिणी ( वितरणी ) सूर्यस्योदयनम् ( नी ) पुरः ( पुनः ), यावत्कृष्णोऽभिधावति ( कृष्णमृगो विचरति ) तावद्वै ब्रह्मवर्चसमिति ।

इमानि सूत्राणि बौधायनधर्मसूत्रेऽपि ( प्र० १ खं० २ सू० १०–१४ ) प्रायः समाक्षराण्येव सन्ति । आदि पुराणे—

कृष्णसारैर्यवैर्दर्भैश्चातुर्वर्ण्याश्रमैस्तथा ।
समृद्धौ धर्मदेशस्तमाश्रयेरन्विपश्चितः ॥

शङ्खलिखितौ—देश आर्यो गुणवान् प्रागरताद्, अर्वागुदयाद्, यावदुच्चा गिरयो यावत्पुण्याः सरितः, प्राक्सिद्धत्वाद्देशः सनातनः पुण्यः । कृष्णमृगो वा यावद् विचरति, तावदाचारः स्यात्, प्राक्सिन्धुसौवीरात्, दक्षिणेन हिमवतः पश्चात्काम्पिल्याः, उदक् पारियात्रादनवद्यं ब्रह्मवर्चसं सर्वेषाम्, अतोऽन्यदेशजातिकुलधर्माणामन्वया इति ।

पैठीनसिः— आ हिमवतः, आ च कुमार्याः, सिन्धुर्वैतरणी नदी, सूर्यस्योदयनं पुरः, यावद्वा कृष्णमृगो विचरति, तत्र धर्मश्चतुष्पादो भवतीति ।

विष्णुः—

चातुर्वर्ण्यव्यवस्थानं यत्र देशे न विद्यते ।
तं म्लेच्छदेशं जानीयाद् आर्यावर्त्तमतः परम् ॥

( वीरमि० परिभाषा० )

## निषिद्धदेशाः

अवन्तयोऽङ्गमागधाः, सुराष्ट्रा, दक्षिणापथा, उपावृत्तिसन्धुसौवीरा, एते संकीर्णयोनयः । आरट्टान् कारस्करान् पुण्ड्रान् सौवीरान् बङ्गान् कलिङ्गान प्रानूनानिति च गत्वा पुनस्तोमेन यजेत, सर्वपृष्ठया वा । अथाप्युदाहरन्ति—

पद्भ्यां स कुरुते पापं यः कलिङ्गान् प्रपद्यते ।
ऋषयो निष्कृतिं तस्य प्राहुर्वैश्वानरं हविः ॥

( बौधा० ध० सू० १ । २ । १४-१६ )

अत्रत्यं बौधायनवाक्यं वीरमित्रोदये किञ्चित्पाठान्तरेणेत्थमुदाहृतम्—

आनर्त्तकाङ्गमगधाः सुराष्ट्रा दक्षिणापथः

अर्वाक्कारस्करान्पाण्ड्यान् पुण्ड्रान् सौवीरान् बङ्गकलिङ्गप्रासूनानिति·······।

आनर्त्तका द्वारका यस्मिन्देशे; अङ्गः चम्पाप्रदेशः। अयञ्च निषेधस्तीर्थयात्रां विना; तदुक्तम्—

अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च।
तीर्थयात्रां विना गच्छन् पुनः संस्कारमर्हति॥

आदिपुराणे—

आर्यावर्त्तसमुत्पन्नो द्विजो वा यदि वाऽद्विजः।
कर्मदां सिन्धुपारं च करतोयां न लङ्घयेत्॥
आर्यावर्त्तमनतिक्रम्य विना तीर्थक्रियां द्विजः।
आज्ञां चैव तथा पित्रोरैन्दवेन विशुद्ध्यति॥

मगधे विशेषमाह—

कीकटेषु गया पुण्या नदी पुण्या पुनः पुनः।
च्यवनस्याश्रमः पुण्यः पुण्यं राजगृहं वनम्॥

कीकटो मगधदेशः। वायुपुराणे—

त्रिशङ्कोर्वर्जयेद्देशं सर्वं द्वादशयोजनम्।
उत्तरेण महानद्या दक्षिणेन च कीकटान्॥
देशस्त्रैशङ्कवो नाम श्राद्धकर्मणि गर्हितः।

आदिपुराणे—

काञ्चिकोशलसौराष्ट्रदेशाः कर्णाटकच्छजाः।
कावेरीकोल्वणोद्भूतास्ते देशा निन्दिता भृशम्॥

कोल्वणः त्र्यम्बकगिरिमध्यदेशः।

पञ्चनद्यो वहन्त्येता यत्र निःसृत्य पर्वतात्।
आरट्टा नाम ते देशा न तेष्वार्योऽन्वहं वसेत्॥
पञ्चनद्यस्तु शतद्रुविपाशैरावतीचन्द्रभागा वितस्ताख्याः।
नर्मदा सिन्धुकौशीनां पारं पद्मस्य पश्चिमम्।
गत्वा नरकमाप्नोति तीर्थकालाधिकं वसन्॥
पारं मध्यभागात्परभागः। पद्मस्य पुष्करस्य।
अङ्गवङ्गकलिङ्गान्ध्रमद्रमालविकारतथा।
नर्मदादक्षिणे यच्च सिन्धोत्तर एव च॥
पौण्ड्रश्चैव सुराष्ट्रश्च वैन्ध्यमागधकाः खशाः।
न विवाहं तथा श्राद्धं यज्ञं तेषु समाचरेत्॥

पापदेशाश्च ये केचिद् व्याधैरध्युषिता जनैः ।
गत्वा देशानपुण्यांस्तु कृच्छ्रं पापं समश्नुते ॥

कृष्णसारादिरहितदेशाऽभिप्रायमिदमिति स्मृतिचन्द्रिकाकारः ।

व्यासः—

देशाञ् शूद्रजनाक्रान्तानधार्मिकजनावृतान् ।
म्लेच्छावृतान्प्रयत्नेन वर्जयेद्धार्मिको द्विजः ॥

श्रुतिरपि—तस्मान्न जनमियान्नन्तमियाद् ( बृ० आ० १।३।१० ) ।
जनम् अन्त्यजम् । क्वचित्प्रतिप्रसवः, स्कान्दे—

अङ्गवङ्गकलिङ्गाश्च पर्वतांश्च खशांस्तथा ।
सिन्धुसौवीरसौराष्ट्रान् पारदानान्ध्रमालवान् ॥
विवाहने द्विजो नित्यमनापदि विवर्जयेत् ।
एतान्यप्यापदि गृही संश्रयेद् वृत्तिकर्शितः ॥

पितामहः—

शूद्रराज्येऽपि निवशेद् यत्र मध्ये तु जाह्नवी ।
सोऽपि पुण्यतमो देशोऽनार्यैरपि समाश्रितः ॥



## अध्यायः २

# कालः

ऋग्वेदे एकस्मिन्नेव स्थले कालशब्दस्य प्रयोगो दृश्यते—कृतं यच्छ्वघ्नी **विचिनोति काले** ( ऋ० १०।४२।९ )। [1]अथर्ववेदे स्थलद्वये कालशब्दः प्रयुक्तोऽस्ति—

कालो अश्वो वहति सप्तरश्मिः सहस्राक्षो अजरो भूरिरेताः।
तमा रोहन्ति कवयो विपश्चितस्य तस्य चक्रा भुवनानि विश्वा॥
स एव सं भुवनान्याभरत् स एव सं भुवनानि पर्यैत्।
पिता सन्नभवत् पुत्र एषां तस्माद्वै नान्यत्परमस्ति तेजः॥
काले मनः काले प्राणः काले नाम समाहितम्।
कालेन सर्वानन्दन्ति आगतेन प्रजा इमाः॥
कालः प्रजा असृजत कालो अग्रे प्रजापतिम्।
स्वयम्भूः कश्यपः कालात्तपः कालादजायत॥

( अथर्व० १९।५३।१; ४।७।१० )

कालो ह भूतं भव्यं च पुत्रो अजनयत्पुरा।
कालादृचः समभवन्यजुः कालादजायत॥
इमं च लोकं परमं च लोकं पुण्यांश्च लोकान् विधृतीश्च पुण्याः।
सर्वांल्लोकानभिजित्य ब्रह्मणा कालः स ईयते परमो नु देवः॥

( अथर्व० १९।५४।५ )

अत्र कालशब्दस्य व्यापकं स्वरूपं प्राप्यते; यश्चोत्तरवर्त्तिविश्लेषणस्य दार्शनिकाधारो विद्यते। अत्र कालशब्दः समयवाचकत्वेनाधिकं भूतस्य भव्यस्य च स्रोतोरूपेणोपस्थितः। शतपथब्राह्मणे कालशब्दः समयवाचकत्वेनोपस्थितः—

स आयततरोत्तरत उपोत्पेदे य एष स्विष्टकृतः कालः।

( शत० ब्रा० १।७।३३ )

यदैव यूयं कदा च लभाध्वै यदि काले यद्यनाकालेऽथैवाश्नाथेति।

( शत० ब्रा० ११।४।२।४ )

---

१. तुलनीयः—कृतं न श्वघ्नी विचिनोति देवने—( ऋ० १०।४३।५ )
कृतमिव श्वघ्नी विचिनोति काले—( अथर्व० २०।८९।९ )
श्वघ्नीव यो जिगीवाँल्लक्षमादत्—( ऋ० ११।१२।४ )
यथा कृताय विजितायाधरेयाः संयन्ति ( छा० उ० ४।१।४ )

छान्दोग्योपनिषदि कालशब्दस्यार्थो निधनं मन्यते —

कालं गच्छति तन्निधनं पारं गच्छति तन्निधनमेतद्वामदेव्यं मिथुने प्रोतम् ।

( छा० उ० ११।१३।१ )

परञ्च बृहदारण्यकोपनिषदि अन्यदुपनिषदि च कालशब्दस्य व्यापकं स्वरूपं स्वीकृतम्—

सोऽकामयत द्वितीयो म आत्मा जायेतेति····न पुरा ततः संवत्सर आस तमेतावन्तं कालमबिभः । यावान्संवत्सरः । तमेतावतः कालस्य परस्तावदसृजत ॥

( बृह० उप० १।२।४ )

नैनं पुरा कालात्प्राणो जहाति ।····नैनं पुरा कालान्मृत्युरागच्छति ॥

( बृह० उप० ११।१।२०,२१ )

नो एव स्वयं नास्य प्रजा पुरा कालात्संमोहमेति ।
नो एव स्वयं नास्य प्रजा पुरा कालात्प्रमीयते ॥

( कौषी० उप० ४।१२,१३ )

किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च संप्रतिष्ठा ।
कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् ॥

( श्वेता० उप० १।१।२ )

स्वभावमेके कवयो वदन्ति कालं तथान्ये परिमुह्यमानाः ।

( श्वे० उप० ६।१ )

वराहमिहिरस्य बृहत्संहितायामप्येष भावः परिलक्ष्यते—कालं कारणमेके स्वभावमपरे परे जगुः कर्म ( १।७ )। कालस्य सर्वव्यापकत्वं सृष्टिजनकत्वं संहरणत्वञ्च क्रमशः उपनिषदि व्याख्यातम् । यथा—येनावृतं नित्यमिदं हि सर्वज्ञः कालकारो गुणी सर्वविद्यः ( श्वे० उप० ६।२ ); आदिः स संयोगनिमित्तहेतुः परस्त्रिकालादकालोऽपि दृष्टः ( श्वे० उप० ६।५ ) । मैत्र्युपनिषद्येषा व्याख्या विस्तरेण प्रस्तुताऽस्ति—

अथाऽन्यत्राप्युक्तम्—अन्नं वा अस्य सर्वस्य योनिः कालश्चान्नस्य सूर्यो योनिः कालस्य । एवं ह्याह । कालात्स्रवन्ति भूतानि कालाद् वृद्धिं प्रयान्ति च । काले चास्तं नियच्छन्ति कालो मूर्त्तिरमूर्त्तिमान् । द्वे वाव ब्रह्मणो रूपे कालश्चाकालश्चाथ यः प्रागादित्यात्सोऽकालोऽकलोऽथ य आदित्याद्यः स कालः सकलः सकलस्य वा एतद्रूपं यत्संवत्सरः संवत्सरात्खल्विमाः प्रजाः प्रजायन्ते संवत्सरेणेह वै जाता विवर्धन्ते संवत्सरे प्रत्यस्तं यन्ति तस्मात् संवत्सरो वै प्रजापतिः कालोऽन्नं ब्रह्मनीडमात्मा चेत्येवं

ह्याह। कालः पचति भूतानि सर्वाण्येव महात्मनि। यस्मिंस्तु पच्यते कालो यस्तं वेद स वेदवित् ( मैत्री० ६।१४-१५ )।[१]

महानारायणोपनिषदि कालस्य नारायणेन तादात्म्यं स्थापितमस्ति—अहमेव कालो नाहं कालस्य ( ११।१४ )। एष एव भावो महाभारते विस्तरेण प्रस्तुतः--

कालः सृजति भूतानि कालः संहरते प्रजाः।
संहरन्तं प्रजाः कालं कालः शमयते पुनः॥
कालो हि कुरुते भावान् सर्वलोके शुभाशुभान्।
कालः संक्षिपते सर्वाः प्रजा विसृजते पुनः॥
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः।

( आदि० १।२४८-५० )

कालः पचति भूतानि कालः संहरते प्रजाः।
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः॥

( स्त्री० २।२४ )

मनसो महती बुद्धिर्बुद्धेः कालो महान् स्मृतः।
कालात्स भगवान् विष्णुर्यस्य सर्वमिदं जगत्॥

( शां० २०६।१३ )

ऊर्ध्वं चैकोनविंशत्या कालो नामापरो गुणः।
इतीयं विद्धि विंशत्या भूतानां प्रभवाप्ययम्॥

( शां० ३२०।१०८-९ )

स त्वं नारायणो भूत्वा हरिरासीः परन्तप।
ब्रह्मा सोमश्च सूर्यश्च धर्मो धाता यमोऽनलः॥
वायुर्वैश्रवणो रुद्रः कालः खं पृथिवी दिशः।

( वन० १२।२१-२२ )

कलनात्मकस्य कालस्यापि कलनाय ये युगमन्वन्तरकल्पाः कालपरिच्छेदकाः स्मृतावुक्तास्तेऽपि महाभारते समुलभ्यन्ते। तत्र कल्पस्य न काचन विस्तृतीव्याख्या परं नाम्ना निर्देशः। यथा—

ब्रह्मकल्पे पुरा ब्रह्मन् ब्रह्मर्षीणां समागमे।
लोकसम्भवसन्देहः समुत्पन्नो महात्मनाम्॥

( शान्ति० २३० )

---

१. तुलनीयः—यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व तद् ब्रह्मेति ( तै० उप० ३।१ )।

सम्प्रति तु १४ मनवः प्रत्येकस्मिन् कल्पे मन्यन्ते। तेषु 'महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ( गीता १०।६ ) इति चतुर्णामेव मनूनां कृष्णेन विहितः। यत्र च सिद्धान्तशिरोमणिमतेन सप्तपरिमिता व्यतीताः। महाभारते युगस्य कल्पना इत्थं प्रस्तुता—

त्रेता युगे विधिस्त्वेष यज्ञानां न कृते युगे।
द्वापरे विप्लवं यान्ति यज्ञाः कलियुगे तथा ॥

( शान्ति० २३२ )

तेषां कालं मानञ्च विनिबद्धम्—

चत्वार्याहुः सहस्राणि वर्षाणां तत् कृतं युगम्।
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः ॥

( वनपर्व १८८ )

अत्र सन्ध्यासन्ध्यांशमानसंयुक्तं मनुस्मृतिसादृश्यमेव, ब्रह्मणो दिनावसाने प्रलयस्तत्रापि—

एषा द्वादशसाहस्री युगाख्या परिकीर्तिता।
एतत्सहस्रपर्यन्तमहो ब्राह्ममुदाहृतम् ॥
लोकानां मनुजव्याघ्रप्रलयं तं विदुर्बुधाः।

( वन० अ० १२८ )

एतत्सहस्रपर्यन्तमहर्यद् ब्रह्मणो विदुः।
रात्रिं युगसहस्राणां तेऽहोरात्रविदो जनाः ॥

( गीता १० )

पञ्चसंवत्सरात्मकयुगस्यापि तत्रोल्लेखः।[१] वर्षमानं तु तत्र सौरं सावनं चान्द्रञ्च परिगृहीतमासीत्। पाण्डवैश्चान्द्रमानेन वनवासकालपूरितः। परं दुर्योधनस्तु सौरसावन-मानेन परिगणयति स्म। ययोः विसंवादेऽधिमासगणनया भीष्मेन संगतिप्रदर्शनपुरःसरं निर्णयोऽकारि।[२] ३६० दिनात्मकं वर्षं भवति स्म।[३] भीष्मपतननिधनाभ्यां दक्षिणो-त्तरायनोर्भेदः सुस्पष्टः। "पञ्चमे पञ्चमे वर्षे द्वौ मासावधि जायतः" ( विराट० अ० ५२ ) इति भीष्मवाक्येन प्रत्येकस्मिन् पञ्चमे वर्षेऽधिमासद्वयं जायते। तत्तु न संगच्छते साम्प्रतिकगणितपद्धत्या ( सिद्धान्तशिरोमणिः, गोलाध्यायः ) भीष्मेण काल-चन्द्रस्येत्थं कल्पना कृता—

१. सभापर्व ११।२७, आदि० १२४।२२।
२. विराटपर्व अ० ५२।
३. शां० २३१ अ०

कलाकाष्ठाश्च युज्यन्ते मुहूर्त्ताश्च दिनानि च।
अर्धमासाश्च मासाश्च नक्षत्राणि ग्रहास्तथा ॥
ऋतवश्चापि युज्यन्त तथा संवत्सरा अपि।
एवं कालविभागेन कालचक्रं प्रवर्त्तते ॥
( विराटपर्व ५२ अ० )

क्षणो लवो मुहूर्त्तश्च दिवारात्रिश्च भारत।
अर्धमासाश्च मासाश्च ऋतवः षट् च भारत ॥
संवत्सराः पञ्च युगं समा रात्रिश्चतुर्विधा।
कालचक्रं च यद्दिव्यं नित्यमक्षयमव्ययम् ॥
( सभा० )

सभापर्वणि अष्टानामेव ग्रहाणामुल्लेखस्तदानीं केतुर्न ग्रहे परिगणितः।[१] महाभारते ग्रहाणां विष्कम्भादयः ( भीष्म० १२।३९.३ ), ग्रहयुतिः ( आदि० अ० १ ), ग्रहणम् ( भीष्म० ४५।५७; ९७।३२; ३ अ०; उद्योग० १४३ अ०; आदि० २ अ०; गदा० ५६।१ ) उत्पाताश्च ( सभा० ४१ अ०; ७१ अ०; ७२ अ०; भी० प० ३।१-४८; २०।३६-४२; ९९।२१-२८; ११९।६०, ९१, ६३-९७; वि० प० ४८।९८-१०५; ८४।४-१२; १३८।२०-२४; १४३।६-४६; द्रोण० ७।३४-४०; ७७।२-६; १९२।-२०; १९६।१-३; कर्ण० ३७।३;४६।४३-५०; ९४।४९-५३; शल्य० ११।१४-४३; २३।२१-२५ ) सम्मिलन्ति। एवं काल सम्बन्धिनी विस्तृता व्याख्या महाभारते मतमतान्तरपुरःसरं प्राप्यते।

कलनं कालः, कल्पते वा परिच्छिद्यते वस्त्वनेनेति कालः, कलानां वा समयादिरूपाणां समूहः कालः। स वर्तनादिरूपः कालो द्रव्यस्यैव पर्यायः। ततः पर्यायरूपतया तत्त्वत एकरूपस्यापि तस्य किञ्चिन्मात्रविशेषविवक्षया द्रव्यकालः, अद्धाकालो यथाऽऽयुष्ककाल इत्यादिव्यपदेशः प्रवर्तते। न्यायमतेन परापरव्यतिकरयौगपद्यचिरक्षिप्रप्रत्ययलिङ्गे द्रव्यभेदे। स च द्रव्यान्तरम्; तथाहि—परःपिताऽपरः पुत्रो युगपदयुगपद्वा, तथा चिरं क्षिप्रं वा कृतं करिष्यते यत्परापरादिज्ञानं तदादिक्रिया द्रव्यव्यतिरिक्ता पदार्थनिबन्धनं तत्, प्रत्ययविलक्षणत्वात्, घटादिप्रत्ययवत्। योऽस्य हेतुः स तस्य पारिशेष्यात् कालः, यतो न तावत्पराऽपरादिप्रत्ययो दिग्देशकृतोऽयम्। स्थविरे अपरदिङ्नागावस्थितेऽपि परोऽयमिति प्रत्ययोत्पत्तेः। तथा यूनि परदिग्भागावस्थितेऽपि अपरोऽयमिति ज्ञानप्रादुर्भावात्। न च बलीपलितादिकृतोऽयं प्रत्ययः, तत्कृतप्रत्ययवैलक्षण्येनोत्पत्तेः। नापि क्रियानिर्वर्तितस्तत्प्रतिभाति। तज्ज्ञानवैलक्षण्येन संवेदनात्।

सामान्येन साधने सिद्धसाध्यता, विशेषसाधने हेतोरन्वयाद्यसिद्धिरनुमानवाधितत्वं च प्रतिज्ञाया इति समानाः। तथाहि—पूर्वापरोत्पन्नपदार्थविषयपूर्वापर-

---

१. सभा० ५।२९।

शब्दसंकेतवशादुभूतसंस्कारनिबन्धनत्वात् कृतप्रत्ययस्य कारणमात्रे साध्ये कथं न सिद्धसाध्यता ? विशेषे च कथं नान्वयासिद्धिः ? अनुमति बाधा च प्रतिज्ञायाः पूर्ववद् भावनीया। अत एव नेतरेतराश्रयदोषोऽपि पूर्वपक्षोद्यतोऽपि विशिष्टपदार्थसंकेतप्रभवत्वे अस्य प्रत्ययस्य। किञ्च निरंशैकदिक्कालाख्यपदार्थनिमित्तत्वं परादिप्रत्ययस्य प्रसादयितुमभ्युपगतम्। तच्चायुक्तम्। स्वकोट्यादिप्रत्ययजनकस्य तद्विषयत्वात्। निरंशस्य पौर्वापर्यादिविभागाभावतस्तथा प्रत्ययोत्पादकत्वासंभवात्। तथाभूतप्रत्ययाद्विपरीतार्थसिद्धेरिष्टविपर्ययसाधनाविरुद्धश्चैवं हेतुः स्यात्। अथ वाह्याध्यात्मिकभावपौर्वापर्यनिबन्धनस्य दिक्कालयोः पौर्वापर्यव्यपदेशस्य भावान्न हेतोर्विरुद्धता।

अपरस्मिन्नपरं युगपत् चिरं क्षिप्रमिति काललिङ्गानि। इति शब्दो ज्ञानप्रकारपरः प्रत्येकमभिसम्बध्यते तथा चापरमिति प्रत्ययो युगपदितिप्रत्ययः चिरमितिप्रत्ययः क्षिप्रमितिप्रत्ययः काललिङ्गानीत्यर्थः। अपरस्मिन्नपरमित्यनेन परस्मिन् परमित्यपि द्रष्टव्यं तेनाऽयमर्थः—बह्वतरतपनपरिस्पन्दान्तरितजन्मनि स्थविरे युवानमवधिं कृत्वाऽपरत्वमुत्पद्यते। तच्चापरत्वमसमवायिकारणापेक्षम्। न च रूपाद्यसमवायिकारणं व्यभिचारात् त्रयाणां गन्धादीनां वायौ परत्वाद्यनुपादकत्वात् स्पर्शस्याप्युष्णादिभेदेन भिन्नस्य प्रत्येकं व्यभिचारान्न चावच्छिन्नपरिमाणं तथा तस्य विजातीयानारम्भकत्वात् तपनपरिस्पन्दानाञ्च व्यधिकरणत्वात् तदवच्छिन्नद्रव्यसंयोग एवासमवायिकरणं परिशिष्यते। तच्च द्रव्यं पिण्डमार्त्तण्डोभयसंयुक्तं विभु स्यात्। आकाशस्य तत्स्वाभाव्यकल्पने क्वचिदपि भेर्य्यभिधानात् सर्व्वं भेरीषु शब्दोत्पत्तिप्रसङ्गः। तथा च कालस्यैव मार्त्तण्डसंयुक्तस्य पिण्डेन संयोगोऽपरत्वासमवायिकारणं काल एव मार्त्तण्डक्रियोपनायक आत्मनश्च द्रव्यान्तरधर्म्मेषु द्रव्यान्तरावच्छेदाय स्वप्रत्यासक्त्यतिरिक्तसन्निकर्षापेक्षत्वात्। अन्यथा वाराणसीस्थेन महारजनारुणिम्ना पाटलिपुत्रेऽपि स्फटिकमणेरारुण्यप्रसङ्गात्। कालस्य तु तत्स्वभावतयैव कल्पनोदयमदोषः। कालेनाऽपि रागसङ्क्रमः कथं न इति चेत् नियतक्रियोपनायकत्वेनैव तत्सिद्धेः। एवं स्थविरमवधिं कृत्वा यूनि परतोत्पत्तिर्निरूपणीया। युगपदिति युगपज्जायन्ते युगपत्तिष्ठन्तियुगपत् कुर्व्वन्ति इत्यादि प्रत्ययानाञ्च एकस्मिन् काले एकस्यां सूर्य्यगतौ एकस्मिन् सूर्य्यगत्यवच्छिन्नकाले इत्यर्थः। न चाप्राप्ता एव सूर्य्यगतयो विशेषणतामनुभवन्ति। न च स्वरूपप्रत्ययासन्ना एव ताः, तस्मादेतादृशविशिष्टप्रत्ययान्यथानुपपत्त्या विशेषणप्रापकं यदु द्रव्यं स कालः।

**"ननु सिध्यतु कालः, स तु नित्यो द्रव्यं वेति न प्रमाणत आह"; "द्रव्यत्वनित्यत्वे वायुना व्याख्याते" "यथा वायुपरमाणोर्गुणवत्त्वाद् द्रव्यत्वम् अद्रव्यद्रव्यत्वाच्च नित्यत्वं तथा कालस्यापीत्यर्थः"। "तथापि सन्ति बहवः काला इत्यत आह।" "तत्त्वभावेन"।**

व्याख्यातमिति विपरिणतेनान्वयः। चिरादिप्रत्ययानां काललिङ्गानां सर्व्वत्राविशेषादनेकत्वेऽप्यात्मनामिव विशेषलिङ्गाभावात् सत्तावेदेकत्वं कालस्येत्यर्थः। नन्वेवं

क्षणलवमुहूर्त्तयामदिवसाह्नोरात्रपक्षमासर्त्वयनसंवत्सरादिभेदेन भूयांसः कालास्तत् कथमेक इति चेन्न, भेदमानस्य उपाधिनिबन्धनत्वात् । यथैक एव स्फटिकमणिर्ज्जवातापिञ्जाद्युपाध्यपरागेण भिन्न इव भासत इत्युपगमात् । तथा च कालोपाध्यव्यापकः कालोपाधिः स्वावेयकादाचित्काभावप्रतियोग्यताधारः कालो वा क्षणः प्रतिक्षणं कस्यचिदुत्पत्तेः कस्यचिद्विनाशादेतदध्यवसेयम् । क्षणद्वयञ्च लव इत्याद्यगमप्रसिद्धम् । ननु तथाप्यतीतानागतवर्त्तमानभेदेन कालस्त्रयस्तु श्रूयते हि 'त्रैकाल्ययुवावर्त्तते'' ''त्रैकाल्यासिद्धिः'' इत्यादीनि चेन्न त्रैकाल्यव्यवहारात् येन हि वस्तुना यः कालोऽवच्छिद्यते स तस्य वर्त्तमानः, यत्प्रागभावेन यः कालोऽवच्छिद्यते स तस्य भविष्यत्कालः, यत्प्रध्वंसनेन यः कालोऽवच्छिद्यते स तस्यातीतकालः । तथा चावच्छेदकत्रित्वाधीनः कालत्रित्वव्यवहारः ।

**''इदानीं सर्व्वोत्पत्तिमतां कालः कारणमित्याह''। ''नित्येष्वभावादनित्येषु भावात् कारणे कालाख्येति ।''**

इति शब्दो हेतौ इति हेतोः कारणे—सर्वोत्पत्तिमत्कारणे कालः इत्याख्या । हेतुमाह नित्येष्वभावात् अनित्येषु भावात् इति नित्येष्वाकाशादिषु युगपज्जातः चिरञ्जातः क्षिप्रं जात इदानीं जातो दिवा जात रात्रौ जातः इत्यादिप्रत्ययस्वभावात् अनित्येषु घटपटादिषु यौगपद्यादिप्रत्ययानां भावात् अन्वयव्यतिरेकाभ्यां कारणं कालः । न केवलं यौगपद्यादिप्रत्ययबलात् कालस्य सर्व्वोत्पत्तिनिमित्तकारणत्वम्, अपितु पुष्पफलादीनां हैमन्तिकवासन्तिकप्रावृषेण्यादिसंज्ञाबलादेव तदहध्यवसेयम् । भाषामुक्तावल्योश्च संक्षेपेण तन्निर्णयो यथा—

''जन्यानां जनकः कालो जगतामाश्रयो यथा ।''
''परापरत्वधो हेतुः क्षणादिः स्यादुपाधितः ।''

(भाषा)

''कालं निरूपयति जन्यानामिति तत्र प्रमाणं दर्शयितुमाह— जगतामिति तथाहि इदानीं घट् इत्यादिप्रतीतिः सूर्यपरिस्पन्दादिकं यदि विषयीकरोति तदा सूर्य्यपरिस्पन्दादिना घटादेः सम्बन्धो वाच्यः । स च संयोगादिर्न सम्भवतीति काल एव तत्सम्बन्धघटकः कल्प्यते । इत्थञ्च तस्याश्रयत्वमपि सम्यक् । प्रमाणान्तरं दर्शयति परापरत्वेति परत्वापरत्वबुद्धेरसाधारणं निमित्तं काल एव परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयो लाघवादतिरिक्तः कल्प्यत इति भावः । नन्वेकस्य कालस्य सिद्धौ क्षणदिनमासवर्षादिसमयभेदो न स्यादत आह क्षणादिरिति कालस्त्वेकोऽपि उपाधिभेदात् क्षणादिव्यवहारविषयः उपाधिस्तु स्वजन्यविभागप्रागभावावच्छिन्नं कर्म, पूर्वसंयोगावच्छिन्नविभागो वा पूर्वसंयोगावच्छिन्न उत्तरसंयोगप्रागभावो वा उत्तरसंयोगावच्छिन्नं कर्म वा । नचोत्तरसंयोगानन्तरं क्षणव्यवहारो न स्यादिति वाच्यम् कर्मान्तरसत्त्वादिति । महाप्रलये क्षणादिव्यहारो यद्यपि तदाऽनायत्त्या ध्वंसेनोपपादनाय । दिनादिव्यवहारस्तु तत्तत्क्षणकूटैरेवेति'' मुक्तावली ।

मीमांसानुसारेण कालस्त्रिविधः प्रधानसन्निकर्षलक्षणः, प्रयोग प्राशुभावलक्षणः, पूर्वाह्णादिलक्षणश्च। कालः, देशः, फलम्, निमित्तम्, संस्कार्यम् इति अनुपादेयपञ्चकम्। कालः न गुणः, निमित्तं ह्येतत्। कालः नञ्समभिव्याहाराभावे कालिकसम्बन्धेन भावनायामन्वेति। नञ्समभिव्याहारे तु तत्कालीनाभावप्रतियोगित्वसम्बन्धेन साक्षादेव वा तस्यामेव। ननु नाडिकामुहूर्त्तप्रहरादिप्रत्ययानां परत्वापरत्वयौगपद्यचिरत्वक्षिप्रत्वविशिष्टपदार्थप्रत्ययानां च कालकृतत्वेनाङ्गीकृतानां विभक्तत्वात् आकाशवदविभक्तेन कालद्रव्येण करणाशक्तेः, सूर्यादिगतिक्रियाऽवच्छेदात् विभक्तस्य कालस्य विभक्तप्रत्ययहेतुत्वाभ्युपगमे तु सूर्यादिगतिक्रियाणामेव नभःषष्टितमभागातिलङ्घनफलः सूर्यादिगतिक्षणप्रचयः नाडिका, नभस्त्रिंशत्तमभागातिलङ्घनफलः मुहूर्त्तः, नभोऽष्टमभागातिलङ्घनफलः प्रहरः, इत्येवं नाडिकादिप्रत्ययहेतुत्वोपपत्तेः, प्रतियोगिपदार्थापेक्षया बह्वल्पतमसूर्यादिगतिलक्षणावच्छेदयोः परत्वापरत्वविशिष्टपदार्थप्रत्ययहेतुत्वोपपत्तेः, एकभिन्नक्षणावच्छेदयोः यौगपद्यायौगपद्यविशिष्टपदार्थप्रत्ययहेतुत्वोपपत्तेः, उत्पत्त्यादिभावविकारान्तर्गतबह्वल्पसूर्यादिगतिलक्षणावच्छेदयोः चिरत्वक्षिप्रत्वविशिष्टपदार्थप्रत्ययहेतुत्वोपपत्तेः, क्रियाव्यतिरिक्तकालाभावात् जीवनक्रियाया एव कालत्वावगतिरिति क्रियामात्रातिरिक्तकालाभाववादिनः। तन्न। सूर्यादिस्थायाः गतिक्रियायाः युवस्थविरादिपदार्थसम्बन्धाभावेन तदवच्छेदकत्वायोगात्। कालस्य तु सर्वगतत्वात् स्वसंयुक्तसूर्यादिसमवेतक्रियावच्छेदलब्धविभागस्य युवस्थविरादिपदार्थावच्छेदकत्वोपपत्तेः युवस्थविरादिषु परावरादिप्रत्ययैः क्रियाऽतिरिक्तकालानुमानात्।

पदार्थासम्बद्धायाः क्रियायाः तेषु परादिप्रत्ययहेतुत्वायोगात् कालस्यानुमेयत्वेऽपि-क्रियाव्यतिरेकसिद्धिः इत्यपि वदन्ति। परमार्थस्तु प्रत्यक्षत्वानभ्युपगमे कालस्यासिद्धिरेव स्यात्। परापरादिप्रत्ययानां हि सार्वत्रिकत्वात् सर्वगतहेत्वपेक्षत्वेऽपि आकाशदिरेव अन्यतः सिद्धात् कालवत् स्वरूपेण अभिन्नादपि सहकारिभेदापादितविलक्षणसामर्थ्यात् उपपत्तेः न कालकल्पकत्वं भवति। प्रत्यक्षत्वे तु 'सूर्योदयो वर्तते' इति क्रियाविशेषयोदयप्रत्ययविलक्षण। "वर्तते" इत्यक्षजप्रत्ययवेद्यत्वात् व्यतिरिक्तकालसिद्धिः। 'भूतः सूर्योदयो भविष्यति वा' इति भूतभविष्यत्कालावच्छिन्नोदयसत्ताग्राहिणि प्रत्यये वर्तमानत्वाप्रतीतेश्च न 'वर्तते' इति बुद्धेः सत्ताऽऽलम्बनत्वं शङ्कनीयम्, 'ह्यो भूतः' 'अद्य नश्यति' 'श्वो भविष्यति' 'अद्य नोत्पद्यते' इति प्रध्वंसप्रागभावग्राहिनाशानुपपत्तिबुद्धिवैलक्षण्याच्च भूतभविष्यद्बुद्धयोः प्रध्वंसप्रागभावालम्बनानुपपत्तेः भूतभविष्यत्कालावच्छिन्नसत्ताऽऽलम्बनत्वं धातुपदार्थालोचनया भासमानं नापह्नोतुं शक्यम्। कालानवच्छेदे च सूर्योदयादिसदसत्त्वयोः आकाशशशविषाणवत् सर्वदा सदसत्त्वापत्तेः कादाचित्कत्वप्रतीतिविरोधः। स्वतश्च कालस्य एकरूपत्वेऽपि उपाधिभेदात् भूतभविष्यद् वर्तमानत्वोपपत्तिः। एकफलावच्छिन्नाः हि क्रियाक्षणाः यावन्तं कालं व्याप्नुवन्ति, तावान् कालो वर्तमानत्वेन व्यपदिश्यते। क्रियाक्षणानां च अयौगपद्येऽपि एकफलोद्देशेन अनुष्ठीय-

मानानाम् आद्यक्षणाद्यारभ्य फलोत्पत्तिक्षणपर्यन्तं क्रियैक्य व्यपदेशात् विद्यमानक्रियाऽवच्छेदौपाधिकं कालस्य वर्तमानत्वम्, विनष्टक्रियाऽवच्छेदौपाधिकं भूतत्वम्, भाविक्रियाऽवच्छेदौपाधिकं भविष्यत्वमुपपन्नम्। सूर्यादिक्रियाऽवच्छेदकस्य च कालस्य अक्षिपक्ष्मादिक्रियया अवच्छेदाभ्युपगमात् नान्योन्याश्रयापत्तिः। अतश्च सूर्यादिक्रियाणामपि भूतभविष्यात् वर्तमानकालावच्छेदात् क्रियाव्यतिरिक्तस्य आकाशादिव्यतिरिक्तस्य च कालस्य प्रत्यक्षकालवादिमते विलक्षणप्रतीतिबलादेव सिद्धेः तेषां तावत् पराजयः अनाशङ्क्य एव।

सूर्यसिद्धान्ते रङ्गनाथेन कालविभागश्चेत्थं प्रदर्शितः—

"लोकानामन्तकृत्कालः कालोऽन्यः कलनात्मकः।
स द्विधा स्थूलसूक्ष्मत्वान्मूर्त्तत्वामूर्त्त उच्यते॥"

कालो द्विधा तत्रैकः कालोऽखण्डदण्डायमानः शास्त्रान्तरप्रमाणसिद्धिः। लोकानां जीवानामुपलक्षणादचेतनानामपि। अन्तकृद्विनाशकः। यद्यपि कालस्तेषामुत्पत्तिस्थितिकारकस्तथापि विनाशस्यानन्तत्वात् कालत्वप्रतिपादनाय चान्तकृदित्युक्तम्। अन्तकृदित्यनेनैवोत्पत्तिस्थितिकृदित्युक्तमन्यथा नाशकत्वासम्भवात्। अत एव "कालः सृजति भूतानि कालः संहरति प्रजाः" इत्याद्युक्तम्। अन्यो द्वितीयः कालः खण्डकालः। कलनात्मको ज्ञानविषयस्वरूपः। ज्ञातुं शक्यमित्यर्थः। स द्वितीयः कलनात्मकः कालोऽपि द्विधा भेदद्वयात्मकः। तदाह स्थूलसूक्ष्मत्वादिति महत्त्वाणुत्वाभ्याम्। मूर्त्तः—इयत्तावच्छिन्नपरिणामः। अमूर्त्तस्तद्भिन्नः। चकारो हेतुक्रमेण मूर्त्तामूर्त्तक्रमार्थकः। तेन महान् मूर्त्तकालोऽणुरमूर्त्तः काल इत्यर्थः। अथोक्तं भेदद्वयं स्वरूपेण प्रदर्शयन् प्रथमभेदं प्रतिपादयिषुस्तदवान्तरभेदेषु भेदद्वयम्।

सिद्धान्तशिरोमण्यै तु निमेषतत्परत्रुटिरूपाः सूक्ष्माः कालावयवा दर्शिताः। स च कालस्त्रिविधः—वर्त्तमानभूतभविष्यद्भेदात्। तत्र भूतभविष्यत्कालावपि प्रत्येकं द्विधा अद्यतनानद्यतनभेदात् तद्भेदेनैव लकारविशेषं पाणिनिरनुशशास।

सोऽयं कालः षडिन्द्रियवेद्यः इति मीमांसकाः मन्यन्ते।

"न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते" इति तेषामुक्तेः। वेदान्तिनस्तु साक्षिप्रत्ययमासित्वमङ्गीचक्रुः। सोऽयं कालः देशवृत्तिरव्याप्यवृत्तिता नियामकः। तथा हि यः पदार्थः स्वाधिकरणवृत्त्यभावप्रतियोगी सोऽव्याप्यवृत्तिरिति भण्यते तत्तानिर्वाहकश्च कालो देशश्च। कश्चिद्देशे स्थितस्य तादृशपदार्थस्य कालभेदेन तत्रैवाधिकरणेऽभावस्तिष्ठति यथा ज्ञानाश्रये आत्मनि सुषुप्तिकाले इच्छादिविशेषणान्तरकाले च ज्ञानाभावः। यथा वा गुणवति द्रव्यजन्ये उत्पत्तिकाले गुणाभावः श्यामलेऽपक्वे घटे रक्तत्वाभावः रक्तत्वस्य पाकोत्तरं जायमानत्वात्। कालसत्त्वे च देशोऽपि तथा। यथाऽऽत्मनि ज्ञानकाले शरीरावच्छेदेन ज्ञानम्। घटाद्यवच्छेदेन तदभावः। तथा वृक्षं कपिसंयोगकालेऽपि मूले

तदभावः। कालेन कृतसम्बन्धश्च कालिकसम्बन्धस्तेन सम्बन्धेन सर्व्वेषु जन्यभावेषु जन्यभावानां वृत्तिमत्ता नित्येषु गुणकालिकसम्बन्धेन न कस्यापि सत्त्वम्। नित्यानुयोगिक-कालिकान्वन्यानुपगमात् इति नैयायिकाः।

तस्य च "पौरुषं दैवसम्पत्या काले भवति पार्थिव ॥ त्रयमेतन्मनुष्यस्य पिण्डितं स्यात् फलावहम्" इत्युक्तेः कार्यमात्रे निमित्तकारणता। यद्यपि "कृषेर्वृष्टिसमायोगे दृश्यते फलसिद्धयः। तासु काले प्रदृश्यन्ते नैवाकाले कथञ्चनेति शास्त्रान्तरेण तत्तत्कालानामेव यत्तत्कार्योत्पत्तौ हेतुताऽधिगता तथापि यद्विशेषयोः कार्य्यकारणभावास्तत्सामान्ययोरपीति न्यायात् सामान्यतः कार्य्यमात्रं प्रतिकालसामान्यस्य हेतुत्वम्। "कालः क्रीडति गच्छत्यायुस्तदपि न मुञ्चत्याशावायुः" इत्युक्तिः। काले भवः ठञ्। कालिककालभवे त्रि० समासप्रत्ययविधौ प्रतिषेधो वक्तव्यः" वा उक्तेः तदन्तविधिपरिभाषायाः अप्रवृत्तेः, कालान्तशब्दान्नास्य प्रवृत्तिस्तेन तदन्तशब्दात् स एव साधुः समानकालीनः प्राक्कालीन इत्यादि भूरिप्रयोगात्।

सिद्धान्तकौस्तुभे समानकालीन प्राक्कालीनशब्दयोरप्रामाणिकतोक्तिः प्रौढोक्तिरेव उदाहृतवार्त्तिकस्य जागरूकत्वादिति गौडा आहुः। प्रतीच्यास्तु कौमुदीकार श्रद्धावशात् ठञ्विधायकसूत्रे कालसामान्यतद्विशेषपर्य्यायाणां ग्रहणात् समानकालप्राक्कालयोरपि कालविशेषत्वेन ततः ढञ एव प्रवृत्तिर्न खस्येति आर्षत्वात् समाधेय इति मन्यन्ते।

"कालमाधवे" च माधवेन शङ्कापूर्वकं कालश्चेत्थं न्यरूपि—

ननु, नायमुद्यमः सफलः कालस्य गगनकुसुमायमानत्वात्। तदेतत्परमरहस्यमभिजानानः कपिलमहामुनिस्तत्त्वानि विवेक्तुकामः कालनुपेक्ष्यान्यान्येव पञ्चविंशतितत्त्वानि विविवेच—

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः॥"

न चैतेषु एव तत्त्वेषु कालस्यान्तर्भावो मुनिना विवक्षितः, इति शङ्कनीयम्। त्वदभिमतस्य कालस्य यथोक्तपञ्चविंशतितत्त्वानाञ्च परस्परमत्यन्तविलक्षणत्वात्। तथा हि, चिरक्षिप्रादिव्यवहारस्यासाधारणहेतुः कालः, इति त्वभिमतं काललक्षणम्। तत्त्वानां त्वन्यदृशानि लक्षणानि—सत्त्वरजस्तमोगुणानां साम्यावस्था मूलप्रकृतिः, महदहङ्कारपञ्चतन्मात्राख्यानां सप्तानां प्रकृतिविकृतीनां मध्येऽध्यवसायहेतुर्महत्तत्त्वम्, अभिमानहेतुरहङ्कारः शब्दस्पर्शरूपरसगन्धात्मकानि पञ्चतन्मात्राणि पृथिव्यादिपञ्चमहाभूतानामेकादशेन्द्रियाणाञ्च षोडशविकाराणां लक्षणानि प्रसिद्धानि, अप्रकृतिरविकृतिः पुरुषश्चिदात्मकः। न ह्येवं लक्षणकेषु तत्त्वेषु कालस्यान्तर्भावः सम्भाव्यते। नाऽपि षड्विंशं तत्त्वान्तरं मुनिरनुमन्यते। कथं तर्हि मुनिप्रणीतानि तत्त्वानि आर्याभिः संगृह्णान ईश्वरकृष्णो बहिःकरणान्तःकरणे विविचन् कालं व्यावहार—"साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरकरणम्" इति।

"परप्रसिद्ध्या परो बोधनीयः" इति न्यायेनायं व्यवहारो न तु स्वसिद्धान्ताभिप्रायेण इति वदामः। अत एवैतद् वचनं व्याचक्षाणा वाचस्पतिमिश्रास्तत्त्वकौमुद्यामेवाहुः। कालस्तु वैशेषिकाभिमत एको नातीतानागतादिव्यवहारभेदं प्रवर्त्तयितुमर्हति। तस्मादयं यैरुपाधिभेदैरतीतानागतादिभेदभावं प्रतिपद्यते, सन्तु त एवोपाधयो व्यवहारहेतवः कृतमन्तर्गडुना कालेनेति साङ्ख्याचार्य्याः। तस्मान्न कालरूपतत्त्वान्तराभ्युपगम इति। अथोच्यते—भूतकालो वर्तमानकालो भविष्यत्कालः—इति एवं त्रिष्वपि भूतादिष्वनुगतः कालप्रत्यय एकमनुगतं कालतत्त्वमन्तरेणानुपपन्नः—इति। तन्न। पदार्थप्रत्ययवदुपपत्तेः यथा भवन्मते द्रव्यपदार्थो गुणपदार्थः इति षट्सु भावेषु अपि अनुगतः पदार्थप्रत्यय एकमनुगतं पदार्थशब्दवाच्यं तत्त्वान्तरम् अन्तरेणाप्युपपन्नः तथा कालः प्रत्ययः कुतो नोपपद्यते। तस्मात् निस्तत्त्वं कालं निर्णेतुं महानयमुद्यमः प्रेक्षावच्छिरोमणेर्माधवाचार्यस्य न कथञ्चिदप्युपपन्नः।

आयुष्मतश्चैतस्यैवं निरूढकालतत्त्वे यः प्रद्वेषः, स कस्य हेतोरिति वक्तव्यम्। किं कपिलमहामुनिना निराकृतत्वात्, उत लक्षणाभावात्, आहोस्वित् प्रमाणाभावात्, अथवा प्रयोजनाभावात्, अथवा तत्त्वगतपञ्चविंशतिः संख्याभ्यासपाटवेनावसिताच्छ्रद्धाजाड्यात्? न प्रथमः, कालनिराकरणसूत्रस्य मुनिना प्रणीतस्यानुपलम्भात्। न द्वितीयः, अतिप्रसङ्गात्। ऋग्वेदादिप्रोक्तानां ज्योतिष्टोमादीनामायुर्वेदधनुर्वेदगान्धर्ववेदप्रोक्तानामौषधशास्त्रस्वरादीनाञ्चासंगृहीतत्वेन तेष्वपि भवतः प्रद्वेष केन वार्य्यते।

अथ तेषां विशिष्यासंग्रहेऽपि सुखदुःखमोहात्मकत्वेन गुणत्रयान्तर्भावाद् अस्त्येवार्थात् संग्रहः, इत्युच्यते। तर्हि कालस्याप्यसौ न दण्डवारितः, इति बुद्धिं समाधत्स्व। कालस्य गुणत्रयपरिमाणत्वे सावयत्वमनित्यत्वञ्च पटादिरिव प्रसज्येत, इति चेत्। नित्यनिरवयवकालतत्त्वाभिनिवेशवतो वैशेषिकादेः पतत्वयं वज्रप्रहारः शिरसि। वेदवादिनां तु न काऽपि क्षतिः कालस्योत्पत्तिसावयवत्वयोः प्रत्यक्षश्रुतावुपलभ्यमानत्वात्। तैत्तिरीयशाखायां नारायणीये कालोत्पत्तिराम्नायते—

सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि।
कलामुहूर्त्ताः काष्ठाश्चाहोरात्राश्च सर्व्वशः॥
अर्द्धमासा ऋतवः संवत्सरश्च कल्पन्ताम्।

तस्यामेव शाखायाम्, अरुणकेतुचयनब्राह्मणे सावयवत्वं श्रूयते-उक्तो वेषो वासांसि कालावयवानामितः प्रतीच्येषु, इति। इतोऽस्मादनुवाकात् प्रतीच्येष्वधस्तनेषु अनुवाकेषु कालावयवानामृतूनां ध्यातव्यो वेष उक्तो वस्त्राणि चोक्तानीत्यर्थः। नित्यत्वनिरवयवत्वाभिधायिनो वैशेषिकादिशास्त्रस्य 'अमृता देवा'—इतिवदापेक्षिकनित्यतायामन्तर्द्धानशक्त्युपेतयक्षराक्षसादिवत् संस्पर्शयोग्यावयवशून्यतायां च तात्पर्यं वर्णनीयम्। एवञ्च सति

विरोधाधिकरणन्यायः ( मीमा० १।३।२ ) अत्रानुगृहीतो भवति । तस्य च न्यायस्य सङ्ग्राहकावेतौ श्लोकौ--

औदोम्बरी वेष्टितव्या सर्वेत्येषा स्मृतिर्मितिः ।
अमितिर्वेति सन्देहे मितिः स्यादष्टकापिवत् ॥
औदुम्बरीं स्पृशन् गायेदिति प्रत्यक्षवेदतः ।
विरोधान् मूलवेदस्याननुमानादमानता ॥

शिवो हि, सर्वेष्वागमेषु षट्त्रिंशत्तत्त्वानि निरूपयन् कालतत्त्वस्योत्पत्तिमङ्गीचकार । निखिलशैवागमसारमार्याभिः सङ्गृह्णानो भोजराजः पञ्चतत्त्वानि शिवशक्तिसदाशिवेश्वराविद्याऽऽख्यातिनिर्दिश्येतराणि निर्दिश्यन्यायाकार्योक्तिपूर्वकमेव कालं निरदिक्षत्—

"पुंसो जगतः कृतये मायातस्तत्त्वपञ्चकं भवति ।
कालो नियतिश्च तथा कला च विद्या च रागश्च ॥"

तानि मायस्तत्त्वसहितान्येकादशतत्त्वानि सांख्यप्रसिद्धपञ्चविंशतितत्त्वानि चोद्दिश्य क्रमेण विवृण्वन्निदमाह—

"नानाविधशक्तिमयी सा जनयति कालतत्त्वमादौ ।
भाविभवद्भूतमयं कलयति जगदेष कालोऽतः ॥"

( शुद्धानि शिवादीनि पञ्च, कालादीनि च पञ्च, माया चेत्येकादश, साङ्ख्यप्रसिद्धानि च पञ्चविंशतितत्त्वानि इति मिलित्वा षट्त्रिंशत्तत्त्वानि भवन्ति )। तत्र, टीकाकार इत्थं व्याचख्यौ—"नन्वेष कालो नैयायिकादिभिर्नित्योऽभ्युपगत अत आह; भाविभवद्भूतमयम्—इति। भूतादिरूपेण त्रिविधत्वादचेतनत्वे सत्येनेकत्वेनास्यानित्यत्वं सिद्धमिति भावः। केन कार्य्येणास्य सिद्धिः, अत आह; कलयति जगदेष कालोऽतः—इति। चिरक्षिप्रादिप्रत्ययोपाधिद्वारेण कलयत्याक्षिपतीत्यर्थः" इति। इत्थं प्रत्यक्षश्रुतिसहकृतैरागमैः कणादशास्त्रस्य बाधे सत्युत्तरमीमांसागतद्वितीयाध्याय प्रथमाधिकरणन्यायोऽनुगृह्यते। तस्य च न्यायस्य संग्राहकौ श्लोकौ—

"सांख्यस्मृत्याऽस्ति सङ्कोचो न वा वेदसमन्वये ।
धर्मे वेदः सावकाशः सङ्कोच्योऽनवकाशया ॥
प्रत्यक्षश्रुतिमूलाभिर्मन्वादिस्मृतिभिः स्मृतिः ।
अमूला कापिली बाध्या न संकोचोऽनया ततः ॥"

अयमर्थः ऋग्वेदादिभिरग्निहोत्रादिधर्मो ब्रह्मणो जगत्कर्तृत्वञ्च प्रतीयते, सांख्यस्मृत्यादिस्तु प्रधानस्य जगत्कारणत्वं प्रतिपादयति। तत्र, तया स्मृत्या वेदस्य सङ्कोचोऽस्ति न वा—इति संशयः। स्मृतेर्जगत्कारणत्वमन्तरेण निरवकाशत्वात् प्राबल्यम्,

वेदस्य तु धर्मेऽपि चरितार्थत्वाद्दौर्बल्यम्। ततः स्मृत्यनुसारेण वेदः सङ्कुचितः—इति पूर्वपक्षः। प्रत्यक्षश्रुतिभिर्बह्वीभिरनुगृहीता बह्वृचो मन्वादिस्मृतयो ब्रह्मणः कारणतामाचक्षते। साङ्ख्यस्मृतिस्त्वेका मूलहीना चेति दुर्बलत्वात् सैव बाध्या। अतो नास्ति वेदस्य सङ्कोचः— इति राद्धान्त इति।

अथ, तार्किकत्वाभिमानग्रहगृहीतः सन् परवश एवं ब्रूषे;—भूतादीनामौपाधिकानां कालविशेषाणामेवोत्पत्तिर्न तु निरुपाधिकस्य मुख्यकालस्य—इति। तर्हि, "कपर्दकान्वेषणाय प्रवृत्तश्चिन्तामणिमलभत" इत्यस्य वासिष्ठरामायणप्रोक्तस्याभाणकस्य त्वमेव विषयोऽभूः। यतः, साधर्म्यवैधर्म्यज्ञानाय द्रव्याण्यन्विष्यन् परब्रह्मतत्त्वमवागमः। व्यवहारहेतूनां भूतादिकालविशेषाणामाधारः स्वयं व्यवहारातीतो नित्यो निरवयो मुख्यः कालो यः, स परमात्मैव। तथा च श्वेताश्वतरा आमनन्ति, "कालकालो गुणी सर्वविद्यः" इति। आस्तां नित्यत्वानित्यत्वसावयवत्वनिरवयवत्वचिन्ता। सर्वथा ऽप्यस्ति साङ्ख्यतत्त्वेष्वार्थिकः कालसङ्ग्रहः। साक्षात् संग्रहाभावस्तु ज्योतिष्टोमादिवत् प्रकृतिपुरुषविवेकानुपयोगादित्यवगन्तव्यम्। तृतीयचतुर्थपक्षौ तु भवतो वैशेषिकपरिचयगन्धोऽपि नास्तीतिप्रकयतः, वैशेषिकग्रन्थेषु सर्वेष्वपि कालप्रकरणे तल्लक्षणस्य तत्साधकानुमानस्य च प्रपञ्चितत्वात्। प्रमाणान्तराणि तु कालसाधनानि श्रुत्यैवोपन्यस्तानि। तथा च तैत्तिरीया आरुणकेतुके मन्त्रमामनन्ति—

"स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम्।
एतैरादित्यमण्डलं सर्वैरेव विधास्यते॥"

तत्र, स्मृतिरनुमेयश्रुतिमूलं मन्वादिशास्त्रम्। प्रत्यक्षं श्रोत्रग्राह्योऽकृत्रिमो वेदाख्योऽक्षरराशिर्योगिप्रत्यक्षमौपनिषदाभिमतं साक्षिप्रत्यक्षं वा ऐतिह्यमितिहासपुराणादिकम्। ज्योतिःशास्त्रस्याप्यत्रान्तर्भावो द्रष्टव्यः। अनुमीयते स्वमूलभूतस्मृतिवाक्यमनेनेत्यनुमानः शिष्टाचारः। तस्य च स्मृत्यनुमापकत्वमाचार्य्यैर्विस्पष्टमभिहितम्—"आचाराच्च स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पम्" इति तदेवं स्मृत्यादीनां चतुष्टयं सम्पन्नम्। एतैश्चतुर्भिः सर्वैरप्यादित्यमण्डलं प्रमीयते, इति मन्त्रार्थः।

ननु स्मृत्यादीनि मण्डले साधकत्वेनात्रोपन्यस्तानि न तु कालसाधकत्वेनेति चेत्। मैवम्। मण्डलस्य सार्वजनीनप्रत्यक्षसिद्धत्वेन तत्र स्मृत्याद्यनुपयोगात्। कालविवक्षयैवात्र कालनिर्वाहके मण्डले तान्युपन्यस्तानि। तथा च मण्डलद्वारा कालस्तैः प्रमीयते। कालविवक्षाचोत्तरमन्त्रेष्वति स्फुटा। तत्रानन्तरो मन्त्र एवमाम्नाते—

"सूर्यो मरीचिमादत्ते सर्वस्माद् भुवनादधि।
तस्याः पाकविशेषेण स्मृतं कालविशेषणम्॥"

तस्यायमर्थः। भुवनगतं सर्वभूतजालमधिकृत्य रसवीर्य्यविपाकादिभिस्तदनुग्रह-

समर्थं मरीचिं सूर्य्यः स्वीकरोति। तत्कृतेन च भूतयामविभेदेन निमेषादिपरार्द्धपर्य्यन्तः कालविभेदोऽस्माभिरवगतो भवति—इति।

कालप्रतिपादकानि च स्मृत्यादिन्युदाहरामः। तत्र मनुः—"कालं कालविभक्तिं च" इति सृष्टिप्रकरणे कालं व्याजहार। याज्ञवल्क्योऽपि "श्राद्धकालाः प्रकीर्तिताः" इति। एवमन्यास्वपि स्मृतिषूदाहार्यम्। श्रुतिष्वपि—"कृतं यत्स्वग्ने विचिनोति काले" इति वह्वृचाः। "अहमेव कालं नाऽहं कालस्य" इति तैत्तिरीयकाः। "का च सन्ध्या कश्च सन्ध्यायाः कालः" इति सामगाः। योगशास्त्रेऽपि संयमविशेषाद्धारणाध्यानसमाधित्रय-रूपाद्योगिनोऽतीतादिकालं प्रत्यक्षतः पश्यन्तीत्यभिहितम्। तथा च पातञ्जलसूत्रम्। "परिणामत्रयसंयमादतीतानागतज्ञानम्"—इति। परिणामत्रयश्च धर्म्मलक्षणावस्था-परिणामस्वरूपम्। तत्र धर्म्मिणो मृदादेर्घटादिरूपेण परिणामो धर्म्मपरिणामः घटादेरती-तानागतत्वादिर्लक्षणपरिणामः, नवपुराणत्वादिरवस्थापरिणामः। व्यक्तमिदं पातञ्जले विभूतिपादे त्रयोदशसूत्रभाष्यादौ। अन्यद्योगसूत्रम्—"क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् ( योगसूत्रम् ३।५२ )। अत्रस्थभाष्यम्—

"यथा अपकर्षपर्यन्तं द्रव्यं परमाणुरेवं परमापकर्षपर्यन्तः कालः क्षणो यावता वा समयेन चलितः परमाणुः पूर्वदेशं जह्यादुत्तरदेशमुपसम्पद्येत स कालः क्षणः तत्प्रवाहा-विच्छेदस्तु क्रमः क्षणतत्क्रमयोर्निर्नास्ति वस्तुसमाहार इति। बुद्धिसमाहारो मुहूर्त्ता-होरात्रादयः। स खल्वयं कालो वस्तुशून्योऽपि बुद्धिनिर्माणः शब्दज्ञानानुपाती लौकि-कानां व्युत्थितदर्शनानां वस्तुस्वरूप इवाभासते। क्षणस्तु वस्तुपतितः क्रमावलम्बी। ····क्रमश्च न द्वयोः सहभुवोरसम्भवात्। पूर्वस्मादुत्तरस्य भाविनो यदानन्तर्यं क्षणस्य स क्रमः। तस्माद् वर्तमान एवैकः क्षणः न पूर्वोत्तरक्षणाः सन्तीति तस्मान्नास्ति तत्समा-हारः। ये तु भूतभाविनः क्षणास्ते परिणामान्विता व्याख्येयास्तेनैकेन क्षणेन कृत्स्नो लोकः परिणाममनुभवति तत्क्षणोपारूढाः खल्वमी सर्वे धर्मास्तयोः क्षणतत्क्रमयोः संयमात् तयोः साक्षात्करणं ततश्च विवेकजं ज्ञानं प्रादुर्भवति" इति। अत्र विवेकस्तु प्रकृतिपुरुष-योर्विवेकः।

साक्षिप्रत्यक्षमपि; अहमस्मिन् काले निवसामीत्यनुभवस्तावत् सर्वजनीनः। न चासौ वाह्येन्द्रियकृतः कालस्य रूपादिहीनत्वात्। नापि मानसः, तार्किकैस्तदनङ्गी-कारात्—"चक्षुराद्युक्तविषयं परतन्त्रं बहिर्मनः" इति तदभ्युपगमात्। सप्तपदार्थेषु द्रव्य एकः पदार्थः। **अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति कालाङ्गानि। द्रव्यत्वनित्यत्वे वायुना व्याख्याते तत्त्वंभावेन। नित्येष्वभावादनित्येषु भावात्कारणे कालाख्येति** ( वैशे० सू० २।२।६-९ )। अत्रस्थ प्रशस्तपादभाष्यम्—"कालः परापरव्यतिकरयौग-पद्यायौगपद्यचिरक्षिप्रप्रत्ययलिङ्गम्।" "कालकृतयोः ( परत्वापरत्वयोः ) कथम्। वर्तमानकालयोरनियतदिग्देशसंयुक्तयोर्युवस्थविरयो रूढश्मश्रुकार्कश्यवलिपलितादिसान्निध्ये

सत्येकस्य द्रष्टुर्युवानमवधिं कृत्वा स्थविरे विप्रकृष्टा बुद्धिरुत्पद्यते । ततस्तामपेक्ष्य परेण कालप्रदेशेन संयोगात् परत्वस्योत्पत्तिः ।" न्यायसूत्रोपरि ( २।१।३६ ) न्यायवार्त्तिकश्च—"यथैकस्मिन् पुरुषे अनेकसम्बन्धभेदानुविधायिन्यभिन्ने पितापुत्रो भ्रातेति प्रत्यया भवन्ति तद्विवेकः कालः कार्यकारणविशेषापेक्षः परापरादिप्रत्ययहेतुरिति । एवमुपपादितः कालः" ।

"अत्र चोदयन्ति । काले सति त्रैकाल्यं चिन्त्यम् । स एव तु दुरुपपादः, तदभावे कस्य वर्तमानादिविभागो निरूप्यते । न तावद् गृह्यते कालः प्रत्यक्षेण घटादिवत् । चिरक्षिप्रादिबोधोऽपि कार्यमात्रावलम्बनः ।""यदि त्वेको विभुर्नित्यः कालो द्रव्यात्मनो मतः । अतीतवर्तमानभेदव्यवहृतिः कुतः । एवमाक्षिप्ते सति, प्रत्यक्षगम्यतामेव केचित्कालस्य मन्वते । विशेषणतया कार्यप्रत्यये प्रतिभासनात् । क्रमेण युगपत्-क्षिप्रचिरात्कृतमितीदृशः । प्रत्यया नावकल्पन्ते कार्यमात्रावलम्बनाः । अनुमेय एव कालः । अप्रत्यक्षत्वमात्रेण न च कालस्य नास्तिता । युक्ता पृथिव्यधोभागचन्द्रमःपरभागवत् । तस्मादस्ति युगपदादिव्यवहारहेतुः कालः । तस्मादेकोऽप्ययं कालः क्रियाभेदात् भिद्यते" ( न्यायमञ्जरी पृ० १२३-१२७ ) ।

कालो नाप्यनुमानादिजन्यः, अपरोक्षप्रत्ययत्वात् । अतः सामग्र्यभावेऽपि अपरोक्षदर्शनात् साक्षिप्रत्यक्षमेतदित्यौपनिषदा मन्यन्ते । इतिहासेऽपि महाभारते पद्यते—

"प्रहरौ घटिकान्यूनौ प्रहरौ घटिकाधिकौ ।
स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम्" ॥

पुराणेऽपि—

"अनादिरेष भगवान् कालोऽनन्तोऽजरः परः" ।

शिष्टाश्च पौर्णमासाख्ये काले अह्निनैबुकसंज्ञकान् स्व-स्व कुलोचितान् देवताविशेषेभ्यः क्षीरदध्यादिसमपर्णादिकान् धर्मविशेषान् भानुवारादिकालविशेषे समाचरन्ति । तदेवमनेकप्रमाणप्रमिते काले प्रमाणाभावरूपश्चतुर्थपक्षः कथमाशङ्क्यते । नापि प्रयोजनाभावादिति पञ्चमः पक्षो युज्यते । तार्किकैस्तावत् सर्वोत्पत्तिनिमित्तकारणत्वमुद्घोषितम् कालस्य । लोभे च कृष्याद्युपयोगः कालविशेषस्य कृषीवलादिभिर्व्यवह्रियते । ग्रहप्रवेशप्रयाणाद्युपयोगेऽपि ज्योतिःशास्त्रप्रसिद्धः । श्रौतकर्मोपयोगस्तु प्रदर्शयिष्यते ।

तस्मात्, श्रद्धाजाड्यकृतस्तव प्रद्वेषः—इत्ययं षष्ठः पक्षः परिशिष्यते । येन प्राणिदेहादयोऽतीतवर्तमानादिरूपेण कलयितव्याः स केवलः कालः । स च तत्त्वप्रकाशवचनेन पूर्वमुदाहृतः—"कलयति जगदेष कालोऽतः" इति । तादृशोऽपि काल उत्पत्ति-

स्थितिविनाशकारिणा येन कलयितव्यः, स काल-कालः—इति । स च वसिष्ठरामायणे दर्शितः—"कालोऽपि कल्पते येन" इति । श्रुतिश्च भवति—

"स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद्यः ।
प्रधानं क्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः" ॥

पुराणेऽपि—

अनादिरेष भगवान् कालोऽनन्तोऽजरोऽमरः ।
सर्वगतत्वात् स्वतन्त्रत्वात् सर्वात्मत्वान्महेश्वरः ॥
ब्रह्मणो बहवो रुद्रा ह्यन्ये नारायणादयः ।
एको हि भगवानीशः कालः कविरिति स्मृतः ॥
कालेनैव च सृज्यन्ते स एव ग्रसते पुनः ।
ब्रह्मनारायणेशानां त्रयाणां प्राकृतो लयः ॥
प्रोच्यते कालयोगेन पुनरेव च सम्भवः ।
परं ब्रह्म च भूतानि वासुदेवोऽपि शङ्करः ॥
तस्मात् कालात्मकं विश्वं स एव परमेश्वरः ।

( कूर्म० १।५ )

अनादिनिधनः कालो रुद्रः सङ्कर्षणः स्मृतः ।
कलनात् सर्वभूतानां स कालः परिकीर्तितः ।
अनादिनिधनत्वेन स महान् परमेश्वरः ॥
निमेषादपि सूक्ष्मत्वाद् सूक्ष्मात् सूक्ष्मतरो ह्यति ।
तस्य सूक्ष्मातिसूक्ष्मस्य कालस्य परमेष्ठिनः ॥
दुर्विभाव्या महाभाग योगिनामपि सूक्ष्मता ।
पद्मपत्रसहस्रं तु सूच्या वै भिद्यते यदा ॥
समकालं तु तद्भिन्नमबुधो मन्यते जनः ।
कालक्रमेण तद् भिन्नं सा तस्य द्विज सूक्ष्मता ॥
तस्य सूक्ष्मातिसूक्ष्मस्य तथापि महतो द्विजाः ।
मानसंख्या बुधैर्ज्ञेया ग्रहगत्यनुसारतः ॥

( विष्णुधर्मोत्तर० १।७२।१-७ )

कालः सृजति भूतानि कालः संहरते प्रजाः ।
सर्वे कालस्य वशगा न कालः कस्यचिद् वशे ॥

( कूर्म० २।३।१६; वायु० ३२।२९-३० )

तद् ब्रह्म परमं नित्यमजमक्षयमव्ययम् ।
" तदेव सर्वमेवैतद् व्यक्ताव्यक्तस्वरूपव ॥

तथा पुरुषरूपेण कालरूपेण च स्थितम् ।
परस्य ब्रह्मणो रूपं पुरुषः प्रथमं द्विज ॥
व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथापरम् ।
" अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते ॥

( विष्णुपु० १।२।१३-१५।२६ )

एवं कालोऽप्यनुमितः सूक्ष्मे स्थौल्ये च सत्तम ।
संस्थानभुक्त्या भगवानव्यक्तो व्यक्तभुग्विभुः ॥
स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम् ।
ततोऽविशेषभुग्यस्तु स कालः परमो महान् ॥
अणुर्द्वौ परमाणू स्यात्त्रसरेणुस्त्रयः स्मृतः ।
जालार्करश्म्यवगतः खमेवानुपतन्नगात् ॥
त्रसरेणुत्रिकं भुङ्क्ते यः कालः स त्रुटिः स्मृतः ।
शतभागस्तु वेधः स्यात्तैस्त्रिभिस्तु लवः स्मृतः ॥
निमेषस्त्रिलवो ज्ञेयः आम्नातस्ते त्रयः क्षणः ।

( भागवत० ३।११।३-७ )

आयुर्वेदे—

"खादीन्यात्मा मनः कालो दिशश्च द्रव्यसङ्ग्रहः ।"

( चरके सूत्रस्थानम् १।४८० )

"कालो हि नाम स्वयम्भुरनादिमध्यनिधनः । अत्र रसव्यापत्सम्पत्ती जीवितमरणे च मनुष्याणामायत्ते स सूक्ष्मामपि कलां न लीयत इति कालः सङ्कलयति कालयति वा भूतानि इति कालः । तस्य संवत्सरात्मनो भगवानादित्यो गतिविशेषेणाक्षिनिमेष-काष्ठाकलामुहूर्त्ताहोरात्रपक्षमासर्त्वयनसंवत्सरयुगप्रविभागं करोति । तत्र लघ्वक्षरोच्चारण-मात्रोऽक्षिनिमेषः । पञ्चदशाक्षिनिमेषाः काष्ठात् त्रिंशत्काष्ठाः कला विंशतिकलो मुहूर्त्तः कलादशभागश्च त्रिंशन्मुहूर्त्तमहोरात्रं पञ्चदशाहोरात्राणि पक्षः ( सुश्रुतः २।३-५ ) ।

वाक्यपदीये—

व्यापारव्यतिरेकेण कालमेकं प्रचक्षते ।
नित्यमेकं विभु द्रव्यं परिमाणं क्रियावताम् ॥
उत्पत्तौ च स्थितौ चैव विनाशे चापि तद्वताम् ।
निमित्तं कालमेवाहुर्विभक्तेनात्मना स्थितम् ॥
क्रियाभेदाद्यथैकस्मिंस्तक्षाद्याख्या प्रवर्त्तते ।
क्रियाभेदात्तथैयस्मिन्नृत्वाद्याख्योपजायते ॥

( प्रकीर्णकाण्डम्, कालसमुद्देशः १।३।३२ )

कालभेदविषये ज्योतिःशास्त्रे[1]ऽन्यत्रापि—

सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि।

( वाज० सं० ३२।२ )

एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः।....एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्त्ता अहोरात्रार्धमासामासाऋतवः संवत्सरा इति विधृतास्तिष्ठन्ति ( बृह० उप० ३।८।९ )।

( स कालः ) क्षणलवनिमेषकाष्ठाकलामुहूर्त्तयामाहोरात्रार्धमासमासर्त्वयनसंवत्सरयुगकल्पमन्वन्तरप्रलयमहाप्रलयव्यवहारहेतुः ( प्रशस्तपादभाष्यम् । वैशेषिकसूत्रे २।२।६ )

तत्र ग्रहगणिते पौलिशरोमकवासिष्ठसौरपैतामहेषु पञ्चस्वेतेषु।

---

१. द्वे विद्ये वेदितव्ये इति...परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षाकल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा यथा तदक्षरमधिगम्यते ( मुण्डकोपनिषद् १।१।४-५ ); षडङ्गो वेदः छन्दकल्पो व्याकरणं ज्योतिषं निरुक्तं शिक्षाछन्दो विचितिरिति ( आप० ध० सू० २।४।८।११ )।

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते॥

( शिक्षा० ४१-४२ )

वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्व्या विहिताश्च यज्ञाः।
तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञम्॥
यथा शिखामयूराणां नागानां मणयो यथा।
तद्वद्वेदाङ्गशास्त्राणां गणितं मूर्धनि स्थितम्॥

( वेदाङ्गज्यो० ३-४ )।

ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितं तत्कात्स्न्योपनयस्य नाम मुनिभिः संकीर्त्यते संहिता। स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधानस्त्वसौ होरान्याऽङ्गविनिश्चयश्च कथितः स्कन्धस्तृतीयोऽपरः ( बृह० सं० १।९ ); गणितं जातकं शाखां यो वेत्ति द्विजपुङ्गवः। त्रिस्कन्धज्ञो विनिर्दिष्टः संहितापारगश्च सः ( बृह० सं० १।९ ); वेदस्य चक्षुः किलशास्त्रमेतत्-प्रधानताङ्गेषु ततोऽधिजाता। अङ्गैर्यतोऽन्यैः परिपूर्णमूर्त्तिश्चक्षुर्विहीनः पुरुषो न किञ्चित् ( वृद्धवासिष्ठसंहिता १।८ )।

विवाहकालः करणं ग्रहाणां प्रोक्तं पृथक् तद्विपुला च शाखा।
स्कन्धैस्त्रिभिर्ज्योतिषसङ्ग्रहोऽयं मया कृतो दैवविदां हिताय॥

( बृहज्जातका० २८।६ )

सिद्धान्तेषु युगवर्षायनर्तुमासपक्षाहोरात्रयाममुहूर्त्तनाडीप्राणत्रुटित्रुट्याद्यवयवादिकस्य कालस्य क्षेत्रस्य च वेत्ता ( बृह० सं० २ पृ० २२ )।

निमेषकालतुल्यं हि विद्याल्लघ्वक्षरं च यत्।

( वायु० ५७।६ )

लघ्वक्षरसमा मात्रा निमेषः परिकीर्त्तितः।
अतः सूक्ष्मतरः कालो नोपलभ्यो भृगूत्तम ॥

( विष्णुधर्मो० १।७३।१ )

काष्ठा निमेषा दशपञ्च चैव त्रिंशच्च काष्ठागणयेत् कलास्तताः।
त्रिंशत्कलाश्चैव भवेन्मुहूर्त्तस्तत्त्रिंशता रात्र्यहनी समेते ॥

(वायु० ५०।१६६; ५७।७; मत्स्य० १४२।४; विष्णु० २।८।५६; ब्रह्माण्ड० २।२९।६; शान्ति० २३२।१२ )।

द्वौ निमेषौ त्रुटिर्ज्ञेया प्राणो दशत्रुटिः स्मृतः।
विनाडिका तु षट् प्राणास्ताः षष्टिर्नाडिका मता ॥

( विष्णुधर्मो० १।७३।२-३ )

तथा च पौलिशे। षट् प्राणास्तु विनाडी तत्षष्ट्या नाडिका दिनं षष्ट्या। एतासां तत्त्रिंशन्मासस्तैर्द्वादशभिरब्दः ( उत्पलः बृह० सं० ३।२।५ )।

अर्थशास्त्रे कालविषयिणी मीमांसा इत्थं प्रस्तुता—

"अष्टौ परमाणवो रथचक्रविप्रुट् । ता अष्टौ लिक्षा। ता अष्टौ यूकामध्यः। ते अष्टौ यवमध्यः। अष्टौ यवमध्या अङ्गुलम्। मध्यमस्य पुरुषस्य मध्यमाया अङ्गुल्या मध्यप्रकर्षो वाङ्गुलम् । चतुरङ्गुलो धनुर्ग्रहः । अष्टाङ्गुला धनुर्मुष्टिः । द्वादशाङ्गुला वितस्तिः। छायापौरुषं च। चतुर्दशाङ्गुलम् शमः शलः परिरयः पदश्च। द्विवितस्तिररत्निः प्राजापत्यो हस्तः। स धनुर्ग्रहः पौतवविवीतमानम्। स धनुर्मुष्टिः किष्कुः कंसो वा। द्विचत्वारिंशदङ्गुलास्तक्षणः क्राकचिककिष्कुः स्कन्धावारदुर्गराजपरिग्रहमानम् । चतुःपञ्चाशदङ्गुलः कुप्यवनहस्तः । चतुरशीत्यङ्गुलो व्यामो रज्जुमानं खातपौरुषश्च। चतुररत्निर्दण्डो धनुर्नालिकापौरुषं च। गार्हपत्यमष्टाशताङ्गुलं धनुःपथिप्राकारमानं पौरुषं चाग्निचित्यानाम् । षट्कंसो दण्डो ब्रह्मदेवातिथ्यमानम्। दशदण्डो रज्जुः। द्विरज्जुकः परिदेशः। त्रिरज्जुकं निवर्तनम् । एकतो द्विदण्डाधिको बाहुः। द्विधनुःसहस्रं गोरुतम्। चतुर्गोरुतं योजनम्—इति देशमानम्।

"कालमानमत ऊर्ध्वम्। तुटो लवो निमेषःकाष्ठाकला नालिका मुहूर्त्तः पूर्वापरभागौ दिवसो रात्रिः पक्षो मास ऋतुरयनं संवत्सरो युगमिति कालाः। निमेषचतुर्भागस्तुटः, द्वौ तुटौ लवः। द्वौ लवौ निमेषः। पञ्चनिमेषाः काष्ठा त्रिंशत्काष्ठाः कला। चत्वारिंशत्कलाः

नालिका। सुवर्णमासकाश्चत्वारश्चतुरङ्गुलायामाः कुम्भच्छिद्रमादकमम्भसो वा नालिका। द्विनालिको मुहूर्त्तः। पञ्चदशमुहूर्तो दिवसो रात्रिश्च चैत्रे मास्याश्वयुगे च मासि भवतः। ततः परं त्रिभिर्मुहूर्त्तैरन्यतरः षण्मासं वर्धते ह्रसते चेति। छायायामष्टपौरुष्यामष्टादशभागाश्छेदः। षट्पौरुष्यां चतुर्दशभागः। चतुष्पौरुष्यामष्टभागः। द्विपौरुष्यां षड्भागः। पौरुष्यां चतुर्भागः। अष्टाङ्गुलायां त्रयोदशभागाः। चतुरङ्गुलायां त्रयोऽष्टभागाः। अच्छायो मध्याह्न इति। परावृत्ते दिवसे शेषमेवं विद्यात्। आषाढे मासि नष्टच्छायो मध्याह्नो भवति। अतः परं श्रवणादीनां षण्मासानां द्व्यङ्गुलोत्तरा माघादीनां द्व्यङ्गुलावरा छाया इति। पञ्चदशाहोरात्राः पक्षः। सोमाप्यायनः शुक्लः। सोमावच्छेदनो बहुलः। द्विपक्षो मासः। त्रिंशदहोरात्रः प्रकर्ममासः। सार्धः सौरः। अर्धन्यूनश्चान्द्रमासः। सप्तविंशतिर्नक्षत्रमासः। द्वात्रिंशन्मलमासः। पञ्चत्रिंशदश्ववाहायाः। चत्वारिंशद्धस्तिवाहायाः। द्वौ मासावृतुः। श्रावणः प्रोष्ठपदश्च वर्षाः। आश्वयुजः कार्त्तिकश्च शरत्। मार्गशीर्षः पौषश्च हेमन्तः। माघः फाल्गुनश्च शिशिरः। चैत्रो वैशाखश्च वसन्तः। ज्येष्ठामूलीय आषाढश्च ग्रीष्मः। शिशिराद्युत्तरायणम्। वर्षादिदक्षिणायनम्। द्व्ययनः संवत्सरः। पञ्चसंवत्सरो युगमिति।

दिवसस्य हरत्येकं षष्ठिभागमृतौ ततः।
करोत्येकमहश्छेदं तथैवैकं च चन्द्रमाः॥
एवमर्धतृतीयानामब्दानामधिमासकम्।
ग्रीष्मे जनयतः पूर्वं पञ्चाब्दान्ते च पश्चिमम्॥

( अर्थ० २।२०।१-७४ )

मासादिरूपभेदस्य तु स्वरूपेण निर्णीतत्वेऽपि श्रौतस्मार्त्तकर्मविशेषेण सह कालस्याङ्गाङ्गिभावो निर्णेतव्यः। यद्यप्यसौ हेमाद्रिप्रभृतिषु ग्रन्थेषु निर्णीतस्तथाप्यनेकत्र विप्रकीर्णस्यैकत्र सङ्ग्रहाय यत्नः क्रियते। तदेवं चिकीर्षतस्य ग्रन्थस्य कालरूपो विषयः संग्रहरूपं प्रयोजनञ्चास्तीत्ययं ग्रन्थ आरभ्यते।

"नित्यो जन्यश्च कालौ द्वौ तयोराद्यः परेश्वरः।
सोऽवाङ्मनसगम्योऽपि देही भक्तानुकम्पया॥"

इति नित्यकालस्य परमेश्वरत्वेऽपि प्रमाणं पूर्वमेवोपन्यस्तम्। परमेश्वरस्य च, अवाङ्मनसगोचरत्वे सर्वे वेदान्तास्तदनुसारिस्मृतिपुराणानि तत्त्वविदनुभवश्च प्रमाणम्। भक्तानुग्राहिमूर्त्तिस्वीकारश्च तवलकाराख्ये सामवेदशाखाविशेषे कस्याश्चिदाख्यायिकायामाम्नायते। तस्यां ह्याख्यायिकायामेवमुक्तम्—'अग्निवाय्विन्द्रादयो देवा ईश्वरानुगृहीताः सर्वत्र विजयमानाः स्वकीयमेवैतत् सामर्थ्यमित्यभिमन्यन्ते, तान् बोधयितुम्—वाङ्मनसगम्यं परमेव ब्रह्म पूज्यां चक्षुर्गम्यां काञ्चिन्मूर्त्तिं धारयित्वा प्रादुर्बभूव, तया सह वादं कृत्वाऽपि राजसचित्तावग्निवायू ब्रह्मतत्त्वं नैव बुबुधाते, इन्द्रस्तु सात्त्विकचित्तो बुबुधे;—इति। वासिष्ठरामायणेऽपि, शुक्रोपाख्याने शुक्रं मृतमवलोक्य तत्पिता भृगुः

क्रुद्धो मारयितारं कालं शप्तुमुद्यतः, तदानीं कालमनुग्रहीतुमीदृशेन रूपेणाविर्बभूवेति पद्यते—

"अथाकलितरूपोऽसौ कालः कवलितप्रजः ।
आधिभौतिकमास्थाय वपुर्मुनिमुपाययौ ॥
खड्गपाशधरः श्रीमान् कुण्डली कवचान्वितः ।
ऋतुषट्कमयोदारवक्त्रषट्कसमन्वितः ॥
मासद्वादशकोद्दामभुजद्वादशकोद्भटः ।
स्वाकारसमया बह्व्यावृतः किङ्करसेनया ॥
स उपेत्य प्रणम्यादौ कुपितं तं महामुनिम् ।
कल्पक्षुब्धाब्धिगम्भीरं सान्त्वपूर्वमुवाच ह ॥
त्वमत्यन्ततपा विप्र, वयं नियतिपालकाः ।
तेन सम्पूज्यसे पूज्य, साधो, नेतरयेच्छया ॥
मा तपः क्षपयानल्पं कल्पकालमहानलैः ।
यो न दग्धोऽस्मि मे तस्य किन्त्वं शापेन धक्ष्यसि ॥
संसारावलयो ग्रस्ता निगीर्णा रुद्रकोटयः ।
भुक्तानि विष्णुवृन्दानि केन शक्ता वयं मुने ॥
भोक्तारो हि वयं ब्रह्मन्, भोजनं युष्मदादयः ।
स्वयं नियतिरेषा हि नावयोरेतदीहितम् ॥"

न च भक्तानुजिघृक्षया स्वीकृता मूर्त्तिरीदृश्येवेति कश्चिन्नियमोऽस्ति, सर्वात्मकस्य परमेश्वरस्य भक्तचित्तप्रियायाः सर्वस्या अपि मूर्त्तेः स्वकीयत्वात् विष्णुरुद्रादिचेतनमूर्त्तिवदचेतनमूर्त्तयोऽपि तत्तत्फलविशेषार्थिभिरीश्वरत्वेनोपास्याः तदेतदृग्वेदे समाम्नायते—"एतं ह्येव बह्वृचामहत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एनं महाव्रते छन्दोगा एतमस्यामेतं दिव्येतं वायावेतमाकाश एतमप्स्वेतमौषधीष्वेतं वनस्पतिष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेषु" इति । वाजसनेयिनोऽपि मण्डलब्राह्मणे—"तमेतमग्निमित्यध्वर्यव उपासते" इत्यारभ्य पठन्ति;—'विषमिति सर्पाः, सर्प इति सर्पविदः, ऊर्गिति देवाः रयिरिति मनुष्याः, मायेत्यसुराः, स्वधेति पितरो देवयजन इति देवयजनविदो रूपमिति गन्धर्वा गन्ध इत्यप्सरसस्तं यथा यथोपासते तदेव भवति"—इति । तैत्तिरीयाश्च पठन्ति,—क्षेम इति वाचि योगक्षेम इति प्राणापानयोः" इत्यादि । परब्रह्मण्यारोपितं यद्यावज्जगद्रूपमस्ति, तेन सर्वेणाप्युपासनाय परमेश्वरो रूपवान् भवति, इति हिरण्मयाधिकरणमनोमयाधिकरणयोः प्रपञ्चितम् । एवञ्च सति यो यदा यत्कर्मारभते, स तदा तत्कर्मोपयुक्तां कालात्मकस्येश्वरस्य मूर्त्तिमिष्टदेवतारूपेणानुस्मरेत् । अत

एव मन्त्रशास्त्रेषु नानाविधानि ध्यानान्युपदिष्टानि, लोकेऽप्याविद्वदागोपालं सर्वेऽपि जना एकैकां देवतां स्वेच्छया पूजयन्ति, तस्मादारभ्यमाणकर्मफलप्रदो निजेष्टदेवतारूपो नित्यः कालः कर्मारम्भेष्वनुसर्त्तव्यः—इति सिद्धम् ।

ननु कालस्य जन्यत्वे सति कथं प्रलये कालव्यवहारः, प्रलयकालः, प्रलयोऽतीतः, प्रलयोभावी—इति' "कालनित्यत्ववादिनस्तवाऽपि समो दोषः; नित्यस्य कालस्य तपन-परिस्पन्दाद्युपाधिभिः परिच्छेदे सत्येतावान् कालः, इति कालेयत्ता वर्णयितव्या, न च प्रलये तदुपाधयः सन्ति, अतस्तव कथं प्रलयकाले इयत्तानिर्णयः" ।

'अथ, सत्कार्यवादाभ्युपगमेनोपाधयोऽपि वासनारूपेण सन्ति', 'तर्हि कालेऽपि तत्समानम् । न चैतावता नित्यत्वप्राप्तिः, उपाधिषु तदनङ्गीकारात्' । 'अथ मन्यसे; इयत्तारहितेऽपि प्रलयकाले सृष्टिकाले यत्ता वासनावशादियत्ता व्यवह्रियते । तत्रो-पाध्यायत्वादिर्दृष्टान्तः । यथा कश्चिन्माणवकस्त्रिंशद्वर्षवयस्कादध्येतुपक्रम्य संवत्सर-मधीत्यास्माद् ध्याय एकत्रिंशद्वर्षवयस्कः,—इत्यध्ययनरहितेऽप्यतीते वयस्युपाध्यायत्वं व्यवहरति, तद्वदियत्ता व्यवहारः' । 'एवं तर्ह्यनेन न्यायेन कालरहिते प्रलये कालव्यवहारः किं न स्यात्' । कालरहितश्च प्रलयादिकं वस्त्वतीति माण्डूक्यादि-श्रुतयोऽभ्युपगच्छन्ति । तथा च श्रूयते,—"यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव" । प्राभाकराश्च, अपूर्वस्य कालत्रयासंसृष्टां काञ्चिदवस्थामाहुः । तस्मात् कालः सुखेन जन्यताम् ।

स च सामान्यविशेषाभ्यां द्विविधः । तस्य चोभयस्येश्वराख्यानित्यात् कालादुत्पत्तिं मनुराह—

"कालं कालविभक्तिश्च नक्षत्राणि ग्रहांस्तथा ।
सृष्टिं ससर्ज चैवेमां स्रष्टुमिच्छन्निमाः प्रजाः" ॥

तत्र, यः सामान्यकालः, स विशेषानुगतत्वात् तदपेक्षया नित्यो ग्रहगत्यादि-भिरनुमेयो भूतोत्पत्तिनिमित्तकारणम्,—इति तार्किकज्योतिषिकादयः प्रतिपेदिरे । तत्र, ज्यौतिषा आहुः,—

"प्रभवविरतिमध्यज्ञानवन्ध्या नितान्तम्
विदितपरमतत्त्वा यत्र ते योगिनोऽपि ।
तमहमिह निमित्तं विश्वजन्मात्ययानाम-
नुमितमभिवन्दे भ-ग्रहैः कालमीशम् ॥
युगवर्षमासदिवसाः समं प्रवृत्तास्तु चैत्रशुक्लादेः ।
कालोऽयमनाद्यन्तो ग्रहभैरमनुमीयते क्षेत्रे" ॥

कालविशेषेषु च संवत्सरः प्रधानभूतः, अन्ये तु सर्वे गुणभूताः। तथा चारुण-केतुके समाम्नायते—

नदीव प्रभवा काचिदक्षय्या स्यन्दते यथा।
तां नद्योऽपि समायान्ति सोरः सती न निवर्तते॥
एवं नाना समुत्थानाः कालाः संवत्सरं श्रिताः।
अणुशश्च महतशश्च सर्वे समवयन्ति तम्"॥

अयमर्थः—भागीरथीगोदावर्यादिका नदीवायं कालः कुतश्चित् अविनाशात् उत्पत्ति-स्थानादुत्पद्यते। तच्चोत्पत्तिस्थानं सांख्योक्तप्रकृतिर्वा, शैवागमोक्तमाया वा, श्रुति-स्मृत्युदितनित्यकालात्मक ईश्वरो वा, भविष्यति। यथा, तां गङ्गादिकां नदीमन्या अल्पनद्यो अभितः प्रविशन्ति; सा च, प्रविष्टैर्नद्यन्तरैः सह विस्तीर्णा प्रवहति, अप्रवाहा सती न कदाचिच्छुष्यति। एवं नानाविधरूपैः समुत्पन्नाः कालभेदाः संवत्सराख्यं प्रधानं कालमाश्रिताः। तत्र, निमेषाद्या अयनपर्यन्ताः कालभेदाः सवत्सरादणवः युगाद्याः परार्धपर्यन्ताः संवत्सरान्महान्तः। ते सर्वे संवत्सरं सम्यक् प्रविशन्ति। अणूनाम-वयवत्वेन प्रवेशः, महतां तु सवत्सरावृत्तिनिष्पाद्यानामध्यक्षः संवत्सरः,—इति तत्र प्रवेशोऽभिधीयते। तथा च वेदाङ्गे ज्योतिषग्रन्थे पठ्यते—

"पञ्च संवत्सरमयं युगाध्यक्षं प्रजापतिम्।
दिनर्त्वयनमासाङ्गं प्रणम्य शिरसा शुचिः"॥

स च, संवत्सरस्तैरणुभिर्महद्भिश्च सर्वैः समाविष्टोऽतिदीर्घः सन्नारमन् जगति नोच्छिद्यते,—इति।

नन्वल्पत्वं निमेषे पर्यवसितं महत्त्वन्तु परार्द्धे, तथा च तयोरन्यतरस्य प्राधान्य-मुचितम्, तत्र कथं संवत्सरस्य प्राधान्यमिति चेत्। ईश्वरेण प्रथमं सृष्टत्वादिति ब्रूमः। तथा च बाजसनेयिनः समामनन्ति,—"सोऽकामयत द्वितीयो मे आत्मा जायेतेति, स मनसा वाचा मिथुनं समभवत्, तद्यद्रेत आसीत्, स संवत्सरोऽभवत्" इति। तस्मात्संवत्सरः प्रधानम्। अत एव वयं संवत्सरमारभ्यकालविशेषं निर्णयामः।

तत्र संवत्सरः अयनमृतुर्मासः पक्षस्तिथिर्नक्षत्रमित्येवंविधाः कर्मकालाः। यद्यपि, पुराणेषु मृत्युमार्कण्डेयादीनां युगकल्पादिपरिमितं तपः स्मर्यते, तथापि शतसंवत्सरायुषो मनुष्यानधिकृत्य धर्मशास्त्रप्रवृत्तेर्न युगादिनिर्णयोऽत्रोपयुक्तः। मनुष्याधिकारत्वं चास्माभिः पराशरस्मृतिव्याख्याने, 'मनुष्याणां हितं धर्मम्' इत्यस्मिन् वचने प्रपञ्चितम्। ये तु, 'कलौ पञ्च विवर्जयेत्' इत्यादयो मनुष्यधर्मास्तेष्वपि न युगादिकं निर्णेतव्यम्, सन्देहाभावात्। न च शतायुषामधिकारे कथं सहस्रसंवत्सरसत्रश्रुतिरिति शङ्कनीयम्। तत्र, संवत्सरशब्दो दिवसपरः (६।७) इति निर्मितत्वात् ये च संवत्सरावृत्तिसाध्या

अनन्तव्रतादयस्तेष्वपि न संवत्सराधिकः कश्चित् कालोनिर्णेतव्योऽस्ति । अतः, संवत्सरमारभ्यार्वा च एव निर्णेतव्याः कर्माङ्गकालाः । न च कालस्य कर्माङ्गत्वे विवदितव्यम्, "सायं जुहोति प्रातर्जुहोति" इति वाक्यादङ्गत्वप्रतीतेः । तत्र, कर्म्मणस्तावदपूर्वविषयत्वात् प्राधान्यमभ्युपगन्तव्यम्, तथा च कालस्य गुणत्वेनान्वयः परिशिष्यते । अतएव गर्गः,—

"तिथिनक्षत्रवारादिसाधनं पुण्यपापयोः ।
प्रधानगुणभावेन स्वातन्त्र्येण न ते क्षमाः" ॥

तस्मादङ्गभूतेषु निर्णयेषु कालेष्वयवित्वेन संवत्सरस्याभ्यहितत्त्वम् । मनुस्मृतौ कालपरिमाणमित्थं समाहितम्—

निमेषा दश चाऽष्टौ च काष्ठा, त्रिंशत्तु ताः कलाः ।
त्रिंशत्कला मुहूर्त्तः स्यादहोरात्रं तु तावतः ॥
अहोरात्रे विभजते सूर्यो मानुषदैविके ।
रात्रिः स्वप्नाय भूतानां चेष्टायै कर्मणामहः ॥
पित्र्ये रात्र्यहनी मासः प्रविभागस्तु पक्षयोः ।
कर्मचेष्टास्वहः कृष्णः शुक्लः स्वप्नाय शर्वरी ॥
दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः ।
अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम् ॥
ब्राह्मस्य तु क्षपाहस्य यत्प्रमाणं समासतः ।
एकैकशो युगानां तु क्रमशस्तन्निबोधत ॥
चत्वारि आहुः सहस्राणि वर्षाणां यत्कृतं युगम् ।
तस्य तावच्छतीसन्ध्या सन्ध्यांशश्च तथाविधः ॥
इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु ।
एकापायेन वर्तन्ते सहस्राणि शतानि च ॥
यदेतत्परिसङ्ख्यातमादावेव चतुर्युगम् ।
एतद्द्वादशसाहस्रं देवानां युगमुच्यते ॥
दैविकानां युगानां तु सहस्रं परिसङ्ख्यया ।
ब्राह्ममेकमहर्ज्ञेयं तावतीं रात्रिमेव च ॥
तद्वै युगसहस्रान्तं ब्राह्मं पुण्यमहर्विदुः ।
रात्रिञ्च तावतीमेव तेऽहोरात्रविदो जनाः ॥

( मनु० १।६४-७२ )

"कालाः, परिमाणिना" (पा० २।२।५) इति सूत्रस्य पातञ्जलमहाभाष्ये वैशेषिक प्रशस्तपादभाष्ये द्रव्यग्रन्थे कालनिरूपणप्रकरणे; महाभारते शान्तिपर्वणि २३१ तमेऽध्याये

( श्लो० ११-१२ ) च कर्णे हत्य दृश्यम् । निर्दिष्टमहाभारतस्थले तु अत्रत्यमनुश्लोका एव किञ्चित्पाठभेदेन सङ्गृहीता दृश्यन्ते[१] ।

## युगधर्मनिरूपणम्

यत्पूर्वं द्वादशवर्षसहस्रपरिमाणं संध्यासंध्यांशसहितं मनुष्याणां चतुर्युगं देवानामेकं युगमुक्तं तदेकसप्ततिगुणितं मन्वन्तराख्यः काल इह शास्त्रेऽभिधीयते । तत्रैकस्य मनोः सर्गाद्याधिकारः । यद्यपि चतुर्दशमन्वन्तराणि पुराणेषु परिगण्यन्ते तथापि सर्गप्रलयानामानन्त्यादसंख्यानि । आवृत्त्या सर्गः संहारश्चाख्यः । एतत्सर्वं क्रीडन्निव प्रजापतिः पुनः पुनः कुरुते । युगधर्मव्याख्यानं शास्त्रेषु इत्थं कृतम्—

चतुष्पाद् सकलो धर्मः सत्यं चैव कृते युगे ।
नाधर्मेणागमः कश्चिन्मनुष्यान् प्रति वर्तते ॥
इतरेष्वागमाद्धर्मः पादशस्त्ववरोपितः ।
चौरिकानृतमायाभिर्धर्मश्चापैति पादशः ॥
अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः ।
कृते त्रेतादिषु ह्येषामायुर्ह्रसति पादशः ॥
वेदोक्तमायुर्मर्त्यानामाशिषश्चैव कर्मणाम् ।
फलन्त्यनुयुगं लोके प्रभावश्च शरीरिणाम् ॥
अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे ।
अन्ये कलियुगे नृणां युगह्रासानुरूपतः ॥
तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे ॥

( मनु० १।८१-८८ )

श्रीमद्भागवते युगधर्मनिरूपणं तत्र च कलियुगवर्णनं संक्षेपेणेत्थं विद्यते—

कृते प्रवर्त्तते धर्मश्चतुष्पात्तज्जनैर्धृतः ।
सत्यं दया तपो दानमिति पादा विभोर्नृप ॥
सन्तुष्टाः करुणा मैत्राः शान्ता दान्तास्तितिक्षवः ।
आत्मारामाः समदृशः प्रायशः श्रमणा जनाः ॥

---

१. अन्यच्च कालविषये—कालमहिमा—भा० स्क० ३।१७-२०; ३।२९।३६-४५; ३।३० १-?; ४।??।१८-२२; ४।१२।३; ८।६।१९; ८।??।७-८; ८।२?।१९-२४; ?।४।५३; कालस्वरूपम्—भा० स्क० ३।१०।?० – १४; कालपरिमाणम्—भा० स्क० ३।??।?-?४; १०।३।२६; महा० आदि० १।२४७-५१; मा० वि० भ० ५२।?—२; सुश्रुत ?० अ० ६; न्यायकन्दली पृ० ६४-६६; अमरकोशे कालवर्गे श्लो० १—?०; अष्टाङ्गसङ्ग्रहे सूत्र० अ० ४ इत्यादौ द्रष्टव्यम् ।

त्रेतायां धर्मपादानां तुर्यांशो हीयते शनैः ।
अधर्मपादैरनृतहिंसासन्तोष - विग्रहैः ॥
तदा क्रिया तपोनिष्ठा नातिहिंस्रा न लम्पटाः ।
त्रैवर्गिकास्त्रयीवृद्धा वर्णा ब्रह्मोत्तरा नृप ॥
तपः सत्यदयादानेष्वर्धं ह्रसति द्वापरे ।
हिंसातुष्टयनृतद्वेषैर्धर्मस्याधर्म - लक्षणैः ॥
यशस्विनो महाशालाः स्वाध्यायाध्ययने रताः ।
आढ्याः कुटुम्बिनो हृष्टा वर्णाः क्षत्रद्विजेत्तराः ॥
कलौ तु धर्महेतूनां तुर्यांशोऽधर्महेतुभिः ।
एधमानैः क्षीयमाणो ह्यन्ते सोऽपि विनङ्क्ष्यति ॥
तस्मिंल्लुब्धा दुराचारा निर्दयाः शुष्कवैरिणः ।
दुर्भगा भूरितर्षाश्च शूद्रदाशोत्तराः प्रजाः ॥
सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः ।
कालसञ्चोदितास्ते वै परिवर्तन्त आत्मनि ॥
प्रभवन्ति यदा सत्त्वे मनोबुद्धीन्द्रियाणि च ।
तदा कृतयुगं विद्याज्ज्ञाने तपसि यद् रुचिः ॥
यदा धर्मार्थकामेषु भक्तिर्भवति देहिनाम् ।
तदा त्रेता रजोवृत्तिरिति जानीति बुद्धिमन् ॥
यदा लोभस्त्वसन्तोषो मानो दम्भोऽत्र मत्सरः ।
कर्मणां चापि काम्यानां द्वापरं तद् रजस्तमः ॥
यदा मायानृतं तन्द्रा हिंसा विषादनम् ।
शोको मोहो भयं दैन्यं स कलिस्तामसः स्मृतः ॥
यस्मात् क्षुद्रदृशो मर्त्याः क्षुद्रभाग्या महाशनाः ।
कामिनो वित्तहीनाश्च स्वैरिण्यश्च स्त्रियोऽसतीः ॥
दस्यूत्कृष्टा जनपदा वेदाः पाखण्डदूषिताः ।
राजानश्च प्रजाभक्षाः शिश्नोदरपरा द्विजाः ॥
अव्रता वटवोऽशौचाभिक्षवश्च कुटुम्बिनः ।
तपस्विनो ग्रामवासा न्यासिनोऽत्यर्थलोलुपाः ॥
ह्रस्वकायामहाहारा भूर्यपत्या गतह्रियः ।
शश्वत्कटुकभाषिण्यश्चौर्यमायोरुसाहसाः ॥
पणयिष्यन्ति वै क्षुद्राः किराटाः कूटकारिणः ।
अनापद्यपि मंस्यन्ते वार्तां साधुजुगुप्सिताम् ॥
पतिं त्यक्ष्यन्ति निर्द्रव्यं भृत्या अप्यखिलोत्तमम् ।
भृत्यं विपन्नं पतयः कौलं गाश्चापयस्विनीः ॥

पितृभ्रातृसुहृज्ज्ञातीन् हित्वा सौरतसौहृदाः ।
ननान्दृश्यानसंवादा दीनाः स्त्रैणाः कलौ नराः ॥
शूद्राः प्रतिग्रहीष्यन्ति तपोवेशोपजीविनः ।
धम वक्ष्यन्त्यधर्मज्ञा अधिरुह्योत्तमासनम् ॥
नित्यमुद्विग्नमनसो दुर्भिक्षकरकर्शिताः ।
निरन्ने भूतले राजन्ननावृष्टिभयातुराः ॥
वासो ऽन्नपानशयनव्यवायस्नान — भूषणैः ।
हीनाः पिशाच संदर्शा भविष्यन्ति कलौ प्रजाः ॥
कलौ काकिणिकेऽप्यर्थे विगृह्यत्यक्तसौहृदाः ।
त्यक्ष्यन्ति च प्रियान् प्राणान् हनिष्यन्ति स्वकानपि ॥
न रक्षिष्यन्ति मनुजा स्थविरौ पितरावपि ।
पुत्रान् सर्वार्थकुशलाम् ुद्राः शिश्नोदरम्भराः ॥
कलौ न राजञ्जगतां परं गुरुं
त्रिलोकनाथानतपादपङ्कजम् ।
प्रायेण मर्त्या भगवन्तमच्युतं
यक्ष्यन्ति पाखण्डविभिन्नचेतसः ॥
यन्नामधेयं म्रियमाण आतुरः
पतन्स्खलन् वा विवशो गृणन् पुमान् ।
विमुक्तकर्मार्गल उत्तमां गतिं
प्राप्नोति यक्ष्यन्तिन तं कलौ जनाः ॥
पुंसां कलिकृतान् दोषान् द्रव्यदेशात्मसम्भवान् ।
सर्वान् हरति चित्तस्थो भगवान् पुरुषोत्तमः ॥
श्रुतः संकीर्तितो ध्यातः पूजितश्चादृतोऽपि वा ।
नृणां धुनोति भगवान् हृत्स्थो जन्मायुताशुभम् ॥

( श्रीमद्भाग० १२।३।१८-४६ )

कलिः शयानो भवति संजिहानस्तु द्वापरः ।
उत्तिष्ठंस्त्रेता भवति कृतं सम्पद्यते चरन् ॥

( ऐ० ब्रा० ३३।३ )

युगेन सह वर्णसाहचर्यमपि वर्णितमस्ति—

चतुष्पात्सकलो धर्मो ब्राह्मणस्य विधीयते ।
पादावकृष्टो राजन्ये तथा धर्मो विधीयते ॥

तथा वैश्ये च शूद्रे च पादः पादो विधीयते ।
विद्यादेवंविधेनैषां गुरुलाघवनिश्चयम् ॥

( महा० शां० ३५।३२-३३ )

महाभारतस्य भीष्मपर्वणि भारतवर्षेण सह युगानां सम्बन्धः स्थापितोऽस्ति—

चत्वारि भारते वर्षे युगानि भारतर्षभ ।

( भीष्म० १०।३ )

वस्तुतो वनपर्वणि युगानां समाजशास्त्रीया व्याख्या प्राप्यते:—

कृतं नाम युगं तात यत्र धर्मः सनातनः ।
कृतमेव न कर्त्तव्यं तस्मिन् काले युगोत्तमे ॥
न तत्र धर्माः सीदन्ति क्षीयन्ते न च वै प्रजाः ।
ततः कृतयुगं नाम कालेन गुणतां गतम् ॥
देवदानवगन्धर्वयक्षराक्षसपन्नगाः ।
नासन् कृतयुगे तात तदा न क्रयविक्रयः ॥
न सामऋग्यजुर्वर्णाः क्रिया नासीच्च मानवी ।
अभिध्याय फलं तत्र धर्मः संन्यास एव च ॥
न तस्मिन् युगसंसर्गे व्याधयोनेन्द्रियक्षयः ।
नासूया नाऽपि रुदितं न दर्पो नाऽपि वैकृतम् ॥
न विग्रहः कुतस्तन्द्री न द्वेषो न च पैशुनम् ।
न भयं नाऽपि सन्तापो न चेर्ष्या न च मत्सरः ॥
ततः परमकं ब्रह्म सा गतिर्योगिनां परा ।
आत्मा च सर्वभूतानां शुक्लो नारायणस्तदा ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च कृतलक्षणाः ।
कृते युगे समभवन् स्वकर्मनिरताः प्रजाः ॥
समाश्रयं समाचारं समज्ञानं च केवलम् ।
तदा हि समकर्माणो वर्णा धर्मानवाप्नुवन् ॥
एकदेव सदायुक्ता एकमन्त्रविधिक्रियाः ।
पृथग्धर्मास्त्वेकवेदा धर्ममेकमनुव्रताः ॥
चातुराश्रम्ययुक्तेन कर्मणा कालयोगिना ।
अकामफलसंयोगात् प्राप्नुवन्ति परां गतिम् ॥
आत्मयोगसमायुक्तो धर्मोऽयं कृतलक्षणः ।
कृते युगे चतुष्पादश्चतुर्वर्ण्यस्य शाश्वतः ॥

एतत्कृतयुगं नाम त्रैगुण्यपरिवर्जितम् ।
त्रेतामपि निबोधत्वं यस्मिन् सत्रं प्रवर्त्तते ॥
पादेन ह्रसते धर्मो रक्ततां याति चाच्युतः ।
सत्यप्रवृत्ताश्च नराः क्रियाधर्मपरायणाः ॥
ततो यज्ञाःप्रवर्त्तन्ते धर्माश्च विविधाः क्रियाः ।
त्रेतायां भावसंकल्पाः क्रियादानफलोपगाः ॥
प्रचलन्ति न वै धर्मात् तपोदानपरायणाः ।
स्वधर्मस्थाः क्रियावन्तो नरास्त्रेतायुगेऽभवन् ।
द्वापरे च युगे धर्मो द्विभागो नः प्रवर्त्तते ॥
विष्णुर्वै पीततां याति चतुर्धा वेद एव च ।
ततोऽन्ये च चतुर्वेदास्त्रिवेदाश्च तथापरे ॥
द्विवेदाश्चैकवेदाश्चाप्यनृचश्च तथापरे ।
एवं शास्त्रेषु भिन्नेषु बहुधा नायते क्रिया ॥
तपोदानप्रवृत्ता च राजसी भवति प्रजा ।
एकदेवस्य चाज्ञानाद् वेदास्ते बहवः कृताः ॥
सत्त्वस्य चेह विभ्रंशात् सत्ये कश्चिदवस्थितः ।
सत्यात्प्रवच्यमानानां व्याधयो बहवोऽभवन् ॥
कामाश्चोपद्रवाश्चैव तदा वै दैवकारिताः ।
यैरर्द्यमानाः सुभृशं तपस्तप्यन्ति मानवाः ॥
कामकामाः स्वर्गकामाः यज्ञांस्तन्वन्ति चापरे ।
एवं द्वापरमासाद्य प्रजाः क्षीयन्त्यधर्मतः ॥
पादेनैकेन कौन्तेय धर्मः कलियुगे स्थितः ।
युगेष्वावर्तमानेषु धर्मो व्यावर्तते पुनः ॥
धर्मे व्यावर्तमाने तु लोको व्यावर्तते पुनः ॥
लोके क्षीणे क्षयं यान्ति भावा लोकप्रवर्त्तकाः ।
युगक्षयकृता धर्माः प्रार्थनानि विकुर्वते ॥
एतत्कलियुगं नाम अचिराद्यत्प्रवर्त्तते ।
युगानुवर्त्तनं त्वेतत्कुर्वन्ति चिरजीविनः ॥
( महा० वन० १४९ ११-३८)

एवमन्यत्रापि युगधर्मनिरूपणं द्रष्टव्यम्, तद्यथा—बृहन्नारदीये ( अ० ३८ ) महाभारते ( अ,० ५४।१३-१७ कुम्भकोणम्; शां० ३९।७९-१००; २३१।२३-३८ । अत्रत्याः श्लोकामनुसदृशा एव सन्ति । ब्रह्मपुराणे ( अ० १२२-१२३ ) ब्रह्माण्डपुराणे अनुषङ्गपादे ( अ० ३१); ब्रह्मवैवर्त्तपुराणे प्रकृतिखण्डे ( अ० ७ ); कूर्मपुराणे ( अ० २९-३० ); लिङ्गपुराणे ( अ० २२३ ); ( अ० १४२-१४६ ); स्कन्दपुराणे ( ख० ६ अ०

२७२ ); वायुपुराणे ( अ० ३२ तथा ५७-५८ ); गरुडपुराणे ( अ० २२३ ); मत्स्यपुराणे ( अ० १४२-१४६ ); श्रीमद्भागवते ( स्कं० ३ अ० ११ श्लो० १८-२१; १२।२; ३।१८-१३० ); हरिवंशे च ( १।८ ) ।

"जन्म संस्काराद् विद्यादेः शक्तेः स्वाध्यायकर्मणोः ।
ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम्" ॥
( कुसुमा० २, ३ )

सम्प्रदायस्य वेदादिसम्प्रदायस्य ह्रासोऽनुमीयताम्, कुतः ? जन्मादेर्ह्रासदर्शनात्; पूर्वं मानस्यः प्रजाः, ततः पुत्रमात्रार्थिताप्रयुक्तमैथुनजाः, सम्प्रतिसंभोगकामिप्रवृत्त्यावर्जितजन्मान इति जन्मह्रासः । पूर्वं चरुप्रभृतिषु संस्कारः, ततो गर्भे, ततो जननान्तरम्, इदानीं कथञ्चिदिति संस्कारह्रासः । पूर्वं सहस्रशाखस्य चतुर्वेदस्याध्ययनम्, ततः एकस्याः शाखाया इत्यादिक्रमेण विद्याह्रासः । विद्यादेरित्यादिना वृत्तिधर्मादिसंग्रहः, पूर्वमुञ्छशीलवृत्तयः, ततोऽयाचितवृत्तयः, ततः कृष्यादिवृत्तयः, ततः सेवावृत्तय इति वृत्तिह्रासः । पूर्वं तपोज्ञानयज्ञदानात्मकश्चतुष्पाद् धर्मः, ततस्त्रेतायामेकैकह्रासः, कलौ च विसंष्ठुलः स्खलद्दानैकपाद् इति धर्मह्रासः, पूर्वं यज्ञशेषभुजः, ततोऽतिथिशेषभुजः, ततः स्वार्थसाधितभुजः ततो भृत्यादिसहभुज इत्यपि धर्मह्रासः । अध्ययनशक्तेः कारणस्य ह्रासाद् विद्याशक्तेः कार्यस्य ह्रास इति पृथङ्निर्देशः ।

धर्मो देशकालनिमित्तानां विभिद्यते । स एव धर्मः, सोऽधर्मस्तं तं प्रति नरं भवेत् । शौचमाचारः श्रुतिश्च प्रतिकालं विभिद्यते । युगे युगे मानवानां नानाधर्माः प्रवर्त्तन्ते--

अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे ।
अन्ये कलियुगे धर्मा यथाशक्तिकृता इव ॥
( महा० शां० २६६।८ )

देशधर्माश्च दृश्यन्ते कुलधर्मास्तथैव च ।
जातिधर्मा वयोधर्मा गणधर्माश्च शोभने ॥
शरीरकालवैषम्यादापद्धर्मश्च दृश्यते ।
एतद्धर्मस्य नानात्वं क्रियते लोकवासिभिः ॥
( महा० अनु० )

कालादेः परिवर्तित्वाद् धर्मोऽपि परिवर्तते ।
न लोकाऽभ्युदयं कश्चिद् धर्मःसाध्नोति सर्वदा ॥
नैकस्मिन् समये चैको धर्मः सर्वसुखावहः ।
येनाऽभ्युदयते कश्चित् तेनैवाऽन्यो विपद्यते ॥

अन्यो धर्मः समस्थस्य विषमस्थस्य चापरः ।
न हि सर्वहितः कश्चिदाचारः सम्प्रवर्त्तते ॥
येनैवान्यः प्रभवति सोऽपरानपि बाधते ।
आचाराणामनैकाग्र्यं सर्वेषामेव लक्षयेत् ॥

( महा० शां० अ० २६६ )

भूमिर्नद्यो नगाः शैलाः सिद्धाः देवर्षयस्तथा ।
कालेन सह वर्त्तन्ते तथा भावा युगे युगे ॥
कालं कालं समासाद्य नराणां नरपुङ्गव ।
बलवर्ष्मप्रभावा हि प्रणशन्त्युद्भवन्ति च ॥

( शां० २१२।२७ )

युगे युगे च ये धर्मास्तत्र तत्र च ये द्विजाः ।
तेषां निन्दा न कर्त्तव्या युगरूपा हि द्विजाः ॥

( परा० स्मृ० १।३३ )



अध्यायः ३

# पात्रम्

नानागुणान्वितो जनः पात्रपदेन ग्राह्यः । यथा महाभारते अनुशासनपर्वणि—

अक्रोधना धर्मपराः सत्यनित्या दमे रताः ।
तादृशाः साधवो: विप्रास्तेभ्यो दत्तं महाफलम् ॥
साङ्गाश्च चतुरो वेदानधीते यो द्विजर्षभः ।
षड्भ्यः प्रवृत्तः कर्मभ्यस्तं पात्रमृषयो विदुः ॥
प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च समन्वितः ।
तारयेत कुलं सर्वमेकोऽपीह द्विजोत्तमः ॥
निशम्य च गुणोपेतं ब्राह्मणं साधुसम्मतम् ।

( महा० २२।३३-४१ )

केवलया विद्यया श्रुताध्ययनसम्पत्त्या नैव सम्पूर्णपात्रत्वम् । नाऽपि केवलेन तपसा शमदमादिना । केवलेनानुष्ठानेन केवलया जात्या वा नैव सम्पूर्णपात्रता । यत्र पुरुषे वृत्तमनुष्ठानमिमे चोभे विद्यातपसी स्तः, तदेवं मन्वादिभिः सम्पूर्णपात्रं प्रकीर्तितम्[१] । अत्र जातिविद्यानुष्ठाननयः समुच्चयानामुत्तरोत्तरप्राशस्त्येन फलतारतम्यं द्रष्टव्यम्—

न विद्यया केवलया तपसा वाऽपि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥

( याज्ञ० १।२०० )

किन्तु एतद्विषये पात्रविश्लेषणं मयाऽन्यस्मिन् अर्थे विधीयते । ममैतदुद्देश्यमस्ति यद् भारतीयराष्ट्रस्य पात्राणां विवेचनं पाश्चात्त्यसम्पर्केण जायमानो नूतनो भारतीयबौद्धिकवर्गो मन्यते यद् भारतवर्षं नहि एकराष्ट्रमस्ति । नैव च तस्य केऽपि मूलनिवासिनः । यत्किमपि समीचीनं तत्त्वमस्ति तत्सर्वमन्यप्रजातिभिः संस्कृतिभिश्च समागतमस्ति । फलत एतद्देशीपवर्तमानजनानां कोऽपि इदं राष्ट्रं स्वराष्ट्रमिति कथनस्याधिकारी नैवाऽस्ति । साम्राज्यवादिन ऐतिहासिकाः, राजनीतिज्ञाः समाजशास्त्रिणश्चानेनैवाधारेण स्वीयं विश्लेषणं चक्रुः । मया तेषामेव विवेचनं प्रतिवादरूपेणात्र संक्षिप्तं विधीयते ।

---

१—गौ० ५।६३; आप० ध० सू० २।६।१५।९-१०; मनु० ३।९८; ३।१२८; ४।३१; याज्ञ० १।२०१; कठो० ६।१४; वनपर्व० २।३६; अनु० ७।२१; ब्रह्माण्ड० ३।२८।१००; शां० १७४।४६; वायु० ९३।१०१; योग सू० २।१५।

आर्यशब्दस्तु ऋक्संहितादौ बहुत्र बहुधा श्रूयते, प्रतीयते च तत्र सर्वत्रैव तदानीमिह पृथिव्यां श्रेष्ठत्वमार्यनामतः प्रसिद्धेति। तद्यथा--'**विजानीह्यार्यान्ये च दस्यवो बर्हिष्मते रन्धया शासदव्रतान्**' ( ऋ० १।५१।८१ ); ''**साह्याम दासमार्यं त्वया युजा सहस्कृतेन सहसा सहस्वता**'' ( ऋ० १०।८३।१२ ); '**नवदशभिरस्तुवत शूद्रार्यावसृज्येताम्**' (यजु० वा०सं० १४।३०।१); '**तयाऽहं सर्वं पश्यामि, यश्च शूद्र उतार्यः**' ( अथर्व० ४।२०।३ ) इति। तैत्तिरीयसंहितायामपि एष आर्यशूद्रयोश्चर्मनिमित्तः कलह आम्नातः ( ७।५।९।८ ) । ऐतरेयकेऽप्याम्नात आर्यशब्दः– ''**अयुवमार्यस्य राष्ट्रं भवति**'' ( ८।५।२ )। पाणिनाऽप्येकत्र आर्यशब्दोल्लेखः कृतः–''**आर्यो ब्राह्मणकुमारयोः**'' ( ६।२।५८)। निरुक्तकारः खलु यास्कोऽप्येवत्र आर्यशब्दं व्यवहृतवान्—''**विकारमस्यार्येषु** ( २।१।४ )। आर्यशब्द व्याख्यानं चान्यत्र कृतं तेनैवम् - **आर्यः ईश्वरपुत्रः** ( ६।५।३ )। अस्ति च 'अर्यः' इति पदं परिपठितं निघण्टौ ( २।२२ ईश्वरनामसु; तत एवाऽपत्यार्थप्रत्यये सिद्धत्यार्यशब्द इति सम्पन्नं तन्निर्वचनम्।

आर्यः, त्रि, ( अर्त्तुं प्रकृतमाचरितुं योग्यः, अर्यते वा; ऋ + ण्यत् ) सत्कुलोद्भवः इत्यमरः। पूज्यः, श्रेष्ठः, बुद्धः इति शब्द रत्नावली। सङ्गत इत्यजयः। 'मान्यः, उदारचरितः, शान्तचित्तः' यथा रामायणे, ३ काण्डे—'**योऽहमार्येण परवान्भ्रात्रा ज्येष्ठेन भाविनि**'। न्यायपथावलम्बी, प्रकृताचारशीलः, सततकर्त्तव्यकर्मानुष्ठाता, तदुक्तम्—

**कर्त्तव्यमाचरन्काममकर्त्तव्यमनाचरन् ।**
**तिष्ठति प्रकृताचारे यः स आर्य इति स्मृतः ॥**

धार्मिकः, धर्मशीलो यथा मनुः ( १०।५७ )--**आर्यरूपमिवाऽनार्यं कर्मभिः स्वैर्विभावयेत्**। उचितः, यथा रामायणे--''**मार्गमार्यं प्रपन्नस्य नाऽनुमन्येत कः पुमान्**'' ? नाट्योक्तौ सम्मानसूचकमिदं नाम प्रायेण मान्यजनाह्वाने व्यवह्रियते, यथा साहित्यदर्पणे षष्ठपरिच्छेदे—

''स्वेच्छया नामभिर्विप्रः, विप्र, आर्येति चेतरैः।
वाच्यौ नटीसूत्रधारावार्यनाम्ना परस्परम्'' ॥

आर्यः, पु० ( अर्त्तुं सदाचरितुं योग्यः ) स्वामी बुद्धः इति हेमचन्द्रः। 'सुहृत्' इत्यजयः। 'श्रेष्ठवर्णः म्लेच्छेतरजातिः' यदुक्तं महाभारते—''**म्लेच्छाश्चान्ये बहुविधाः पूर्वं ये निकृता रणे। आर्याश्च पृथिवीपालाः**'' इति। '**स्वनामख्यातः सावर्णमनोः पुत्रः**' यथा हरिवंशे—

'वरीयांश्चावरीयांश्च संमतो धृतिवान् वसुः।
चरिष्णुरार्यो धृष्णुश्च राजः सुमतिरेव च ॥

**सावर्णस्य मनोः पुत्राः भविष्या दश भारत** ( शब्दकल्पद्रुमे )। वेदे तु ( ऋ० ४।२६।२ ) मनोरपि 'आर्य' इत्येकं नाम श्रूयते। तथा सति, तदपत्यतया सर्वे मनुजा ये

सततकर्त्तव्यकर्मानुष्ठातारस्ते आर्याः स्युः। आर्य—मानवशब्दौ च घटः, कलशश्चेव" पर्यायवाचिनौ स्याताम्।

ऋग्भाष्ये सायणाचार्येण कृतमार्यशब्दव्याख्यानम्—'विदुषोऽनुष्ठातॄन्' (१।५१।८), 'विद्वांसःस्तोतारः' (१।१०३।३); 'विदुषः' (१।११७।२१); 'अरणीयं सर्वैर्गन्तव्यम्' (१।१३०।८); 'उत्तमं वर्णं त्रैवर्णिकम्' (३।३४।९); 'मनवे' (४।४६।२); 'कर्मयुक्तानि' (६।२२।१०) 'कर्मानुष्ठातृत्वेन श्रेष्ठानि' ६।३३।१०) इति। आर्याणां बहवो वर्गा ऋग्वेदे निर्दिष्टाः। तत्र पश्चिमोत्तरप्रान्तस्थितो **"गन्धारिवर्गः"**। ते मेषपालवृत्तयोऽभूवन्नित्यवगम्यते। पश्चात्काले ते **'गन्धारा'** इति, **'गान्धारा'** इति चाख्याताः। अन्यः कश्चिदथर्ववेदोक्तो 'पूजवद्वर्गः'। ते च तत्र गन्धारिणां सन्निहिततरत्वेनोक्ताः। मूजवदासन्नदेशवर्तित्वात् ते तथा संज्ञिता इति तर्कयामः। एतौ द्वावेव वर्गौ आर्याधिवासभूमेः पश्चिमोत्तरभागाऽवस्थितौ।

यद्येव न सर्वे, तथाऽपि भारतवर्षीयाः प्रधानभूताः बहवो वर्गाः ऋग्वेदे शश्वदुच्यार्यमाणेन 'पञ्चजनाः' इत्यनेन शब्देन विवक्षिताः। असंशयमनेन शब्देन 'पञ्चवर्गा' एवाभिधित्सिताः। ते च 'पञ्चवर्गा' मन्त्रद्वये निर्दिश्यमानाः--पूरवः, तुर्वशाः, यदवः, अनवः, द्रुह्यवश्च। ते पुनरन्योन्येषामनवरतं कलहायमाना अभूवन्। तेषु चत्वारो वर्गाः कैश्चिद्वर्गान्तरैः सह मिलित्वा दशानां राज्ञां निर्देशे स्थिताः 'तृत्सूनामधिपतिना सुदासा' सह सङ्ग्रामाय प्रवृत्ता आख्याताः। तथाहि—कदाचिद् दशराजानस्तृत्सुभिः सह युद्धायागमन्। प्रत्यर्थिभटाः 'परुष्ण्यास्तटे' सङ्गताः। तत्र दशानां राज्ञां दारुणो रणः सम्प्रवृत्तः। परन्तु दशराजानस्तत्र प्रथममेव तन्नदीतरणोद्यमे, तत्प्रवाहनिरोधनसाहसे च, क्षीणसत्त्वास्तृत्सुभिरक्लेशं पराजिताः श्रूयन्ते। 'पूरवः' सरस्वत्याः कूलद्वयेऽधिष्ठिताः श्रूयन्ते, तथाऽपि तद्वर्गीयाः केचित्ततोऽपि पश्चिमतः स्थिताः "अलक्सान्द्रानुचरैः" परुरतयास्तीरे दृष्टाः। तेषां राजा पुरुकुत्सपुत्रः 'त्रसद्दस्युः' तद्वंशीयः शूरो राजकुमारः 'तृक्षिश्च' ऋग्वेदे बहुत्र प्रस्तूयेते। वर्गान्तरापेक्षया सातिशयं स्तूयमानास्तु 'तुर्वशाः'। येषां कण्वगोत्रीयाः पुरोहितास्ते 'यदवः' प्रायेण तेषां मित्रत्वेन वर्ण्यन्ते। 'अनवस्तु' परुष्ण्यास्तीरे न्यवसत्। तेषां पुरोहिताश्च भृगुवंशीयाः। 'अनवो,द्रुह्यव'श्चैकचित्ता अभूवन्नित्यवगम्यते। ऋग्वेदे केवलमेकस्मिन्मन्त्रे निर्दिश्यमानाः 'मत्स्याः' तृत्सूनां शत्रवोऽभूवन्। 'मत्स्याः' यमुनायाः प्रतीच्यकूले प्रत्यवसन्निति महाभारतादवगम्यते। 'सुदासः' शत्रूणां मध्ये प्रधानतया भरतः। ते च ऋग्वेदस्यैकस्मिन् सूक्ते (३।३३) 'विपाट्शुतुद्र्यो' सम्भेदमायान्तं विश्वामित्रमनुयान्तः प्रस्तूयन्ते। अन्यस्मिन् सूक्ते (३।५३) विश्वामित्रः सुदासः पुरोहितो भूत्वा भरतानां कृते नदीः स्तुवन् गाधीचकारेति श्रूयते। इदं च नदीनां गाधीकरणं मन्यामहे, सप्तमण्डलीयत्रयस्त्रिंशत्तमसूक्तोक्त्यनुसारेण यदा विश्वामित्रातिशायिनो वसिष्ठस्य स्तुतिवचनैरुपकृताः सुदासाधिष्ठितास्तृत्सवो

भरतानभ्यभूवन्, तदा भरतानामनुग्रहाय, वसिष्ठस्वाधिना विश्वामित्रेण कृतं स्यात्। तेषां भरतानां यज्ञक्रियासु प्राधान्यमभूदित्यनुमीयते। अत एवाऽग्निः 'भारत' इति, यज्ञदेवता 'भारती' इति चाभिधीयते। तत्र भारती, बहुत्र सरस्वत्या सह स्तूयते। अग्निस्तुतिपरे कस्मिंश्चित्सूक्ते ( ३।२३ ) द्वौ भारतौ स्मृतौ; तत्रैको 'देवश्रवाः' अपरो 'देवरातश्च'। तौ च **दृषद्वत्यामापगायां सरस्वत्याञ्च यज्ञियाऽग्निगामन्थिषानामिति** श्रूयते। स एव देशः पश्चात् काले 'ब्रह्मावर्त्त' इति, कुरुक्षेत्रमिति च संज्ञितः। 'तृत्सवः' परुष्ण्या नाऽतिदूरे पूर्वभागे कृताधिवासाः सम्भाव्यन्ते। तस्या एव पूर्वतीरे 'सुदाः' पश्चिमतस्तां नदीं तीर्णवतो दशराज्ञः प्रतियोद्धुं स्वकीयां सेनां निनायेत्यपि शक्यमास्थातुम्। 'पञ्चजनाः' पश्चात्कालिकग्रन्थेष्वनिर्दिष्टनामानः सुदासोऽतिघोरे समरे सहायभूतत्वेन वर्णिताः। 'सृञ्जया' अपि तृत्सूनां मित्रभावे स्थितास्तर्क्यन्ते; यतः तृत्सव इव सृञ्जया अपि तुर्वशानां नित्यशत्रवः श्रूयन्ते।

केषाञ्चिदन्येषां वर्गाणामृग्वेदे नामानि परं निर्दिश्यन्ते, न तु तानधिकृत्य कश्चिद्विशेषः प्रस्तूयते। अथाऽपि तेऽर्वाचीनेषु ग्रन्थेषु सविशेषमनुपवर्णिताः। तथाहि— उशीनराः ऋग्वेदे सकृदेव निर्दिष्टा, ऐतरेयब्राह्मणोत्पत्तिकाले उत्तरभारतवर्षस्य मध्यभागे स्थिताः। तथा 'चेदयोऽपि' सकृदुपात्ताः, पुराणकाले मगधदेशमध्याक्षिषत। अन्ये च 'क्रिवयो' नाम सिन्ध्वासिक्नीसम्बद्धत्वेन वर्ण्यमानाः पश्चिमोत्तरां दिशमशिश्रियन्निति ज्ञायते। शतपथब्राह्मणे क्रिवयः' इति पञ्चालानां प्राचीनं नामधेयमित्युक्तम्। पञ्चालास्ते हस्तिनापुरादुत्तरतः स्थिताः। अथर्ववेदो न केवलं गन्धारीन् नाऽपि केवलं पूजवतः, किन्तु मगधान् अङ्गांश्चापि प्राचीनवर्गत्वेन निर्दिशति। एतेनाथर्ववेदोत्पत्तेः पूर्वमार्याः गङ्गातीरं प्राप्तास्तदुत्पत्तिकाले तत्र सुप्रतिष्ठिता अभूवन्।

पञ्चालास्तु न कस्मिंश्चिदपि वेदे निर्दिष्टाः। कुरवोऽपि यथासंभवं समस्तैस्तद्धितान्तैर्वा शब्दैर्द्वित्रमन्त्रेष्वसाक्षान्निर्दिष्टा उपलभ्यन्ते। शुक्लयजुर्वेदे तु साक्षान्निर्दिष्टाः। ब्राह्मणकाले पुनस्तावेव वर्गौ प्राधान्यमुपगतौ। प्रत्युत ऋग्वेदेऽतिशयेन निर्दिश्यमाना---पूरुतुर्वशयदुतृत्सुप्रभृतयो वर्गाः नैव नामतोऽपि ब्राह्मणग्रन्थेषु निर्दिष्टाः। भरता अपि ब्राह्मणग्रन्थेषु प्रधानपदमारोप्य स्तूयमानाः सदाचाराणामादर्शभूतत्वेन वर्ण्यन्ते, न तु तदानीन्तना अन्ये वर्गा इव ते पृथक् सङ्घात्मनाऽवस्थिता इति कुत्रापि प्रस्तूयन्ते। तेषां नामधेयमपि ब्राह्मणग्रन्थेषु, मनुस्मृतौ वा, निबद्धायां वंशावलिपट्टिकायां नोपलभ्यते। तथा बौद्धग्रन्थेष्वपि तेषां वार्त्ताऽपि न श्रूयते।

इत्थं भूते व्यतिकरे इदमभ्यूहितुं युक्तं यत्—वेदोक्तास्ते बहवो वर्गाः क्रमेण नवनवान्निवेशदेशान् प्राप्तास्तत्तद्देशाऽवस्थाऽनुरूपेषु जीविकाव्यापारेष्वेकीभूता अन्यैरेव नामधेयैर्योजिता इति। तथा च वेदोक्ता भरताः पश्चात् काले कुरुवंश एवान्तर्भूताः; अत एव भरतः कुरुवंशीयानां मूलपुरुषत्वेन महाभारतादौ वर्ण्यते। कुरूणां रणकथा-

मधिकृत्य इतिहासोऽपि भरतसम्बन्धान्महाभारतमित्युच्यते। एवं महाभारतगतायां वंशावलौ पूरवः कुरूणामत्यन्तसन्निकृष्टत्वेनोक्ताः। अतस्तेऽपि क्रमेण कुरुष्वन्तर्भूता इति शक्यमास्थातुम्। ऋग्वेदाऽनन्तरकालिकेषु ग्रन्थेष्वगृहीतनामानस्तूत्सवोऽपि कुरुवंश एवान्तर्भूताः सम्भाव्यन्ते। पञ्चालास्तु क्रिवय एवेति पूर्वमेव प्रास्तौष्मा। तदेवमवधेयं यत्—अल्पाल्पाः पञ्चवर्गाः सम्मिलिताः पाञ्चाला अभूवन्निति; अत एव तत्र 'पञ्च'शब्दस्य घटना श्रूयते च ब्राह्मणग्रन्थेषु तुर्वशाः पञ्चालानामन्यतमा इति। तथा ऋग्वेदे तुर्यवशानामत्यन्तसुहृत्त्वेन वर्ण्यमाना यदवोऽपि पञ्चालेष्वन्तर्भूताः सम्भाव्यन्ते। पुराणेषु पुनस्ते गोत्रप्रत्ययान्तेन 'यादव' शब्देन व्यपदिश्यमानाः पृथग्वर्गत्वेनावस्थिताः।

## पाश्चात्त्यमतालोचनम्

अथाऽत्र युरोपीयविद्वान्सः केचन सम्प्रवदन्ते। श्रूयते हि ऋग्वेदसंहितायाम्—अनुप्रत्नस्यौकसो हुवे (१।३०।९) इति, तेनाऽवगम्यते—सारस्वतप्रदेशीयार्याणामादिपुरुषाणां वास आसीत् पुरा क्वचिदन्यत्रैवेति। तच्चार्याणामादिनिकेतनमस्यैवासिया (एशिया) खण्डस्य मध्यभागस्थितयोः 'वेलुर्त्ताग्-मुश्ताागपर्वतयोः पश्चिमपार्श्वगताधित्यक भूमिः; तत एव भारतीयाः, पारसिकाः, शर्म्मण्यादयश्च विकीर्णा भारतादिष्विति। परञ्च भारतीयपारसिकशर्म्मण्यादीनामार्यमूलत्वे, नैकजातिप्रभवत्वन्तु स्यात् स्वीकार्यम्, किन्त्विह औपनिवेशिका वयमिति नैव मन्तव्यमस्माकम्। स्वदेशस्वत्वहान्यादिदोषत्रयप्रसङ्गात्, तेषां तन्मतपोषकप्रमाणहेतूनामतिदौर्बल्याच्चेति।

ते त्रयो दोषाः खल्वेते—(क) नैव देशोऽस्माकं पैतृकः, अपि तु यथा अभवद् यवनानामधिकृतः; अद्य च इङ्ग्लोइण्डियानां तथैव पुराऽस्मत्पूर्वपुरुषैरत्रत्याननार्यान् विजित्य बलाद् गृहीत इति। एतेनास्मिन्देशेऽस्माकं मूलस्वत्वं कदाऽपि नास्ति; प्रत्युत यथापूर्वं यवनानां जयलब्धं स्वत्वं सम्पन्नम्, अद्य च इङ्ग्लेण्डियानां तथैव एकदा अस्माकमपि बभूवेत्येवेति प्रथमो दोषः।

(ख) तदनु सम्पद्यत एवाऽस्माकं यहूयादीनामिवोपनिवेशवासित्वमिति द्वितीयो दोषः।

(ग) स्वार्थानुरोधतः स्वावासकण्टकभूतानामेतद्देशीयमूलस्वत्ववतामनार्याणामुच्छेदनञ्चेति तृतीयः।

यदि हि तेषां तन्मतमस्माकमृतमित्यभिमतं स्यात्, तर्हि एते त्रयोऽपि दोषा गले कुठारन्यायेन मन्तव्या एव स्युः। न च तथा; प्रत्युत दृश्यते हि न कश्चित् स्वावासभूमेश्चतुरङ्गुलभूमिस्वत्वमपित्यक्तुमुत्सहते। तद् वयमिहार्यावर्त्ते चिरमासृष्टेर्निवसन्तोऽपि तद्विरुद्धप्रबलप्रमाणमन्तरा कथङ्कारं नाम पैतृकं स्वत्वमुत्सृजन्तोऽत्र दोषभावं क्षमामहे? अपि राजशासनतोऽन्नाभावादितो विपुलार्थार्जनस्पृहासन्नाडनादितो वा, ये केचनार्या

अनार्याश्च स्वदेशाद् बहिर्भूता औपनिवेशिकत्वमापन्ना, आपद्यन्ते वा अद्याऽपि, अस्तु तेषां तथात्वमदोषा च, अतथाविधानामस्माकं विषये, तेषां तथाविधजल्पनं कथं न नो हृदयं व्यथयेत् ? एवं दुर्बलानामाद्याऽनार्याणां प्राणादिसम्पीडनेनैवाऽस्मत्पूर्वपुरुषा इह वास्तुस्थानमा लेभिर इत्यनृतमपि यदि ऋतायेत तर्ह्येष तत्कलङ्कप्रवादः कथं न भवेद् दोषायेति च सुधीभिरेवाकलनीयम् । सन्ति चाऽत्र तेषां तन्मतपोषकायेऽष्टावनुमानहेतवो लिखितास्तेष्वेकोऽपि न विचारसह इत्यस्माकम्; तद्यथा—

(१) "एशियाखण्डितः प्रोषिता एवार्याः कालेन सर्वत्रयुरोपखण्डादौ बभूवुः कृतवास्तव्याः" इत्येवमस्त्येकप्रवादः अतोऽवगम्यते, नूनमासीदार्याणामादिवासः प्रथममेशियाखण्डमध्यभूभाग; इति तेषां तथाविधाऽनुमानस्य आद्यहेतुवर्णनम् ।

तथा स्वीकारेऽपि न भवेदस्माकंभूस्वत्वनाशः, आर्यावर्त्तस्यास्य चेशियाखण्डीय-भूभागत्वात् । निरवसिताश्चाऽस्माद् विश्वामित्रर्षिपुत्रादयः, तथा हि—'एते आन्ध्राः, पुण्ड्राः, शबराः, पुलिन्दाः, मूतिबा इत्युदन्त्या बह्वो भवन्ति वैश्वामित्रा दस्यूनां भूयिष्ठाः' इति ( ऐ० ब्रा० ७।३।६ ) । अतएव त्वग्दोषदुष्टा भर्तृपरित्यक्ता अत्रिसुता विदुष्यपालैव ग्रीकदेशीया अपेलो देवतेति संभाव्यते, तदत्र (ऋ० सं० ८।८१—सूक्त-व्याख्यानपरं शाट्यायनब्राह्मणं द्रष्टव्यम् ।

(२) भारतीयपारसिक इङ्लेण्डियादीनां विभिन्नजातित्वेऽपि भाषासौसादृश्यं दरीदृश्यते, विशेषतः सर्वास्वेव भाषासु शातर्त्तुनामैकविधमेव प्रायः, तस्माच्चावगम्यते, 'सर्वेषामेवैषामेकवंशप्रभवत्वं शीतप्रधानदेशवासित्वञ्चेति' तेषां तादृशाऽनुमानप्रवृत्तौ द्वितीयहेतुवर्णनम् ।

अस्त्वेषामेकवंशप्रभवत्वम्, अपि स्वीकार्यश्च स्यात् 'पुराऽऽसीदेषां सर्वेषामेव हिमप्रधानैकदेशवासित्वञ्च, तेन किम् ? शीतप्रधाने तस्मिन् सुवास्तुप्रदेशे हि तेषामुक्त-सर्वजातिमूलार्याणांवासस्वीकारेऽपि किमेतन्नोपपद्यते ? उपपद्यते इति चेत् ? कृतं कल्पना-कल्पितसुदूरजन्मकल्पनयेति । अपि पारसिकाऽवेस्ताग्रन्थस्य 'वेन्दिदाद्' प्रकर-णीयाऽऽद्याऽध्याये, 'हरख् इति' नाममस्यैकस्याऽभ्युदयशालिनो नगरस्य यद् वर्णनं दृश्यते, तन्नूनमेतस्य सारस्वतप्रदेशस्यैव, 'सरस्वती'शब्दस्यैव हि पारसिकभाषायां 'हरख् इति' (हरह्वती) व्यवहारः सर्वसम्मतः; सिद्धान्तितश्च तथा 'क्लार्क' महोदयेनाऽपि (१८६२ खी० मु० व्या० ५६–५८ पृ० ) ।

(३) तत्रैव 'अवेस्ता' ग्रन्थस्य 'वेन्दिदाक्' प्रकरणे देशवर्णनप्रसङ्गे, ऐर्यनम्वेजो' नाम कश्चिज्जनपदोऽपि वर्णितो दृश्यते; 'हिमर्त्तुप्रधानश्च स' इति चोल्लिखितं तत्र । स एष जनपदः पारसिकानामादि वास्तव्यः स्यात् । स्वीक्रियते च तथा तैः पारसिकैः । भारतीयपारसिकयोर्वदनमण्डलसारूप्याद्, भाषासादृश्याद्, अग्निपूज्यकत्वसाम्याच्च,

एकप्रभवत्वं व्यज्यत एवेति सर्वमूलार्याणामेवावासभूमिः स्यात् स 'ऐर्यनम्वेजो' जनपद इति तत्र तृतीयहेतुवर्णनम्।

अस्तु पारसिकानामार्यवंशसमुत्पन्नत्वेन अस्मद् भ्रातृत्वं स्याच्च स्वीकार्यं तेषामादिपुरुषाणाम् 'ऐर्यनम्वेजो' वासित्वम्; न तथाऽस्माकं तद्देशमूलत्वं भवेदुररीकार्यम्; राजाज्ञादिभिरस्मद्देशतो विताडितानां तदादिपुरुषमात्राणां तथात्वसम्भवात्। एकवंशप्रभवाणामपि हि पुरुषाणां नानाहेतुतो नानादेशवासित्वं सम्भवत्येव, सम्भवति च तत्र केषाञ्चित्स्वदेशवासित्वमपीति सुवचमेवेति। अपि वा 'राजतरङ्गिणी' वर्णितः 'आर्याणक' देश एव 'ऐर्यनम्वेजो' इति पारसिकनामभागासीत्; स च स्यात्केषाञ्चिदार्याणां वासभूमिः; पारसिकानां चैषां तेभ्य एवोत्पत्तिः स्वीकार्येति सर्वमवदातम्। स च देशः काश्मीरादुत्तरो हिमप्रधानोऽपि आर्यावर्त्तान्तर्गत एवेति, तथा हि—

**"तुषारवर्षैर्बहुलैस्तमकाण्डनिपातिभिः।**
**आर्याणकाऽभिधे देशे विपन्नं केचिदूचिरे"**॥ इति (४।३६७)

वस्तुतस्तु 'ऐर्यनम्वेजो' नाम नगरं नाद्य क्वचिदपि केनाऽप्युपलभ्यते; पुरा क्वासीत्तस्य विद्यमानतेत्यपि नाद्य यावत्सुनिर्णीतम्; तदलं खपुष्पपर्यालोचनयेति।

(४) अस्ति चैवमपि प्रवादः—"ग्रीक्रोमकजाति"पूर्वपुरुषाः पूर्वोत्तरदेशतः प्रोषिता इताल्यादौ (इटली) न्यवात्सुरिति। स एव प्रवादस्तदैव सङ्गच्छेत, यदि नामासिया (एशिया) खण्डस्थमध्यभूमिरेव तेषामाद्यार्याणां निकेतनं मन्येत तत्र चतुर्थहेतुवर्णनम्।

पूर्ववर्णितः सुवास्त्वादिप्रदेशोऽपि इताल्यादिभ्यः किञ्चिदुत्तरपूर्वगत एवेत्यतस्तत्प्रवादोपपत्तिरुभयत्र समानैवेति।

(५) हिमालयस्योत्तरभागस्य पवित्रतमत्वेन लोकाऽतीतमहिमान्वितत्वेन स्वर्गरूपत्वेन चेदानीन्तनानामार्याणां स्वीकारात् तादृशस्थानस्यैतदादिपुरुषाणां वासभूत्वं सम्भाव्यत इति तत्र पञ्चमहेतुवर्णनम्।

हिमवद्दक्षिणभागस्था आर्यास्तपःसाधनादिकं चिकीर्षवश्चिरमेव हिमवदुत्तरभागं गत्वा कृतकृत्या भवन्ति; इत एव तस्य पवित्रतमत्वेन वर्णनम्; न त्वादिपितृवासनिबन्धनमिति। लोकाऽतीतमहिमाऽन्वितत्वन्तु उत्तराणां कुरूणामजेयत्वादिश्रवणत एव। हिमवत्पृष्ठस्य स्वर्गरूपत्वं तु पौराणिकम्, उत्तरशब्दमात्रं तद्बीजम्। तदिदं स्फुटं प्रतिपादयिष्यामोऽष्टमे, इह चोत्तरत्र किञ्चिदिति।

(६) श्रूयते हि कौषीतकब्राह्मणे—"**उदीच्यां दिशि प्रज्ञानतरा वागुद्यते, उदञ्च उ एव यन्ति वाचं शिक्षितुम्, यो वा तत आगच्छति, तस्य वा शुश्रूषन्ति इति**

**ह स्माहैषा हि वाचो दिक् प्रज्ञाता''** इति (१।७।६)। तदेवं कौषीतकब्राह्मणग्रन्थप्रवक्तुराचार्यस्य हिमवद्दक्षिणखण्डस्थत्वेऽपि, तदादिपुरुषाणां हिमवदुत्तरखण्डवासित्वेनैषोत्तरदिक् स्तुतः सङ्गच्छत इति तत्र षष्ठहेतुवर्णनम्।

ऐतरेये च ब्राह्मणे समाम्नातैतदर्थिका श्रुतिः; ऐतरेयकाले 'कुरुपञ्चालशिविसौवीराणां मध्यदेशत्वं पूर्वं वर्णितम्। मध्यदेशापेक्षयोद्याननगरस्योत्तरत्वं सर्वैश्चक्षुष्मद्भिर्मन्तव्यमेव। एष एवोद्यान देशो राजतरङ्गिण्याम् 'उज्जानक' इत्युक्तः। तस्यास्य विद्यानिवासत्वेन स्तुतिरन्यत्राऽपि। स एष काश्मोरसन्निहित उद्याननामजनपदोऽत्रेष्टो विद्यानिलय इति कथं धावेम हिमवतोऽप्युत्तरमिति।

(७) श्रूयते हि—**''तोकं पुष्येम तनयं शतं हिमाः''** (ऋ. सं. १।६।९४) इति आशीर्मन्त्रः। तदत्र विवेचनीयम्। हिमर्त्तुतोऽब्दपरिगणनन्तु तत्रैवोपपद्येत, यत्र प्रदेशे हिमप्रपातस्यातिशय्यं विद्यते सदैव; नात्र तथोपलभ्यते; अपि एशिया—मध्यभूभागस्थो **'बेलुर्त्ताग्मुस्ताग्'** पर्वतयोरन्तरालप्रदेशस्तु नूनं तादृश इति, तेषां तत्र प्रबलोऽयं हेतुः सप्तमः।

यदि हि हिमर्तुवाचि 'हिम' शब्देन अब्दपरिगणनश्रवणाद्, 'हिम' शब्दस्याब्दवाचित्वेन व्यवहाराद्वा, स्यादस्मत्पूर्वपुरुषाणां हिमर्त्तुप्रधानदेशवासित्वाऽनुमानम्; तर्हि शरदृतुवाचिशरच्छब्देनाऽब्दपरिगणनश्रवणात्, शरच्छब्दस्याऽब्दवाचित्वेन व्यवहाराद्वा, किं न स्यात्तेषां शरदृतुप्रधानदेशवासित्वाऽनुमानम्? **''शतमिन्नु शरदो अन्तिदेवाः''** (ऋ० सं० १।१४।६०); **शतं नो रास्व शरदो०—०ऽश्यामायूँषि''** (ऋ० सं० २।३।२७); **''अस्मै शतं शरदो जीवसे धाः''** (ऋ० सं० ३।३।३५); **पतिर्जीवाति शरदः शतम्''** (ऋ० सं० १०।८६।३९)। वस्तुतस्तु आर्याणां न कदाऽपि हिमर्त्तुमात्रभोगौकस्त्वमासीत्, न च कदाऽपि शरदृतुमात्रभोगौकस्त्वम्; अपि नाम **'शरच्छृता अस्यामोषधयो भवन्ति, शीर्णा आप इति वा'** इति यास्कोक्तेः (४।४।४) 'शृणाति हिनस्ति, प्राणिनः' इति शरच्छब्दव्युत्पत्त्या शरदृतोरस्वास्थ्यकारित्वमासीदार्यसम्मतमिति तस्य ऋतोरब्दान्त्यत्वममानि तैरिति प्रतीयते। सति चैवं तस्याऽब्दान्ताऽवयवत्वे, हिमर्तोरब्दाद्यवयवत्वं सुतरां सम्पन्नम्। अत एवाब्दगणनाप्रसङ्गे 'शरच्छब्दहिमशब्दयोरन्यतरस्य प्रयोगो बहुत्र श्रूयते वेदे; सङ्गच्छते च तयोः शब्दयोर्गौण्या वृत्त्याऽब्दवाचित्वमपीति।

(८) अपि श्रूयते—**''उत्तरं गिरिमतिदुद्राव'** इति (शत० ब्रा० १।८।१)। उत्तरं गिरिं हिमालयम्, 'अति' अतिक्रम्य, उल्लङ्घ्य 'दुद्राव' द्रुतगमनं कृतवानिति च तस्य तत्सम्मतोऽर्थः। तस्मादपि वचनाद् हिमालयमुल्लङ्घ्य इहागमनं सुव्यक्तमिति तेषां तादृशाऽनुमानेऽष्टमो हेतुः।

तस्याः श्रुतेराद्यन्तपर्यालोचनया, 'अति' शब्दार्थालोचनया च, एतद्विपरीत एवार्थः प्रतीयते। तथाहि—स औघं उत्थिते नावमापेदे; तं स मत्स्य उपन्यापुप्लुवे; तस्य

शृङ्गे नावः पाशं प्रतिमुमोच, तेनैतमुत्तरं गिरिमतिदुद्राव। स होवाच, अपीपरं वै त्वा; वृक्षे नावं प्रतिबध्नीष्व; तं तु त्वा मां गिरौ सन्तमुदकमन्तश्छैत्सीत्; यावद्यावदुदकं समवायात्, तावत्तावदन्ववसर्पासीति। स ह तावत्तावदन्ववससर्प; तदप्येतदेवोत्तरस्य गिरेर्मनोरन्ववसर्पणम्' इति पूर्णं तत् शतपथवचनम्। तदेतत्पर्यालोचनया गम्यते—कदाप्येकदा सम्भूतेऽत्र जलप्लावने, अस्मादेवार्यावर्त्तीयसमुद्रादुत्थितस्य जलौघस्य हिमालयशृङ्गाधिरोहणम्; उपशान्ते च तदुपद्रवे, ततः क्रमादभिसर्पणञ्चेत्येवेति सत्यमताऽनुकूलैवैषा श्रुतिः। अत एव 'अतिदुद्राव' इति पदस्य 'अधिजगाम' इत्यर्थः कृतस्तद्भाष्यकृता हरिस्वामिना। वेदार्थनिर्णयायैव यास्कप्रणीते निरुक्ते त्वभिपूजितेऽर्थे 'अति' शब्दो निर्णीतः—'अति, सु, इत्यभिपूजिते' इति (१।१।५)। 'अतिधनः' इति, 'सुब्राह्मणः' इति च तदुदाहरणद्वयम्। अतिशयोऽपि अर्थोऽप्यस्ति 'अते'र्य स्कीयः; अत एव—'अति मृत्युमेति' (श्वेता० उ० ६।१५) इत्यादौ अतिशयोऽर्थ एव प्रतीयते, नोलङ्घनार्थः। 'अतिरतिक्रमणे च' (१।४।५०) इति पाणिनिसूत्रस्य व्याख्यायां ह्याहैव ज्ञानेन्द्रसरस्वती—"अतिक्रमण" "उचिताऽवधिकस्याऽनुष्ठानमिति"। प्रकृतौ अतेरुल्लङ्घनार्थत्वस्वीकारेऽपि, हिमालयोत्तरवासिनां तेषां दृष्टचऽस्य हिमालयस्य उत्तरगिरित्वं कथं सम्भवेन्नामेति च तैरेवविचारणीयं स्वयमिति[1] ( ऐतरेयालोचने० पृ० ४८-५५ )।

इतः परम्—"एवमस्मत्पूर्वपुरुषाः खल्वासन् पुरा सुमेरुप्रदेशवासिन एवेति बालसिद्धोऽपि बालसिद्धान्तः" इत्युपक्रम्य—तदेवमिदं स्वप्नदृष्टाऽश्रुतपूर्वरत्नोद्धरणाय, वेदाऽवेस्तादिजलधिप्लवमानस्याऽऽश्रयहीनस्य तस्य कुशकाशाऽवलम्बनं सर्वनिरर्थकमेवेति किन्तु तत्राऽस्ति शोच्यमिति **सामान्यविचारः**।

वस्तुतः—

ये हि ते ऋषयः ख्याताः सप्त चित्राशिखण्डिनः।
तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम्॥
वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ।
आस्यैः सप्तभिरुद्गीर्णं लोकधर्ममनुत्तमम्॥
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः।
वसिष्ठश्च महातेजास्ते हि चित्रशिखण्डिनः॥
सप्तप्रकृतयो ह्येतास्तथा स्वायम्भुवोऽष्टमः।
एताभिर्धार्यते लोकस्ताभ्यः शास्त्रं विनिःसृतम्॥

---

१. उत्तरे हिमवत्पार्श्वे पुण्ये सर्वगुणाऽन्विते।
पुण्यः क्षेम्यश्च काम्यश्च स परो लोक उच्यते॥
उत्तरः पृथिवीभागः सर्वपुण्यतमः शुभः।
इहस्थास्तत्र जायन्ते, ये वै पुण्यकृतो जनाः॥

( महा० शा० अ० १९२। ८, २१ )

एकाग्रमनसो दान्ता मुनयः संयमे रताः ।
भूतभव्यभविष्यज्ञाः सत्यधर्मपरायणाः ॥
इदं श्रेयः, इदं ब्रह्म, इदं हितमनुत्तमम् ।
लोकान् सञ्चिन्त्य मनसा ततः शास्त्रं प्रचक्रिरे ॥
तत्र धर्मार्थकामा हि मोक्षः पश्चाच्च कीर्तितः ।
मर्यादा विविधाश्चैव दिवि भूमौ च संस्थिताः ॥
आराध्य तपसा देवं हरिं नारायणं प्रभुम् ।
दिव्यं वर्षसहस्रं वै सर्वे ते ऋषिभिः सह ॥
नारायणानुशास्ता हि तदा देवी सरस्वती ।
विवेश तानृषीन्सर्वान् लोकानां हितकाम्यया ॥
ततः प्रवर्तिता सम्यक् तपोविद्भिर्द्विजातिभिः ।
शब्दे चार्थे च हेतौ च एषा प्रथमसर्गजा ॥
आदावेव हि तच्छास्त्रमोङ्कारस्वरपूजितम् ।
**लोकतन्त्रस्य कृत्स्नस्य यस्माद्धर्मः प्रवर्त्तते ॥**

( महा० शा० अ० ३३५।२६-३७ )

पुरा मेरुप्रदेशस्थः शुकोऽत्र मिथिलां पुरीमागत्य जनकात्सम्यक्वेदान्तार्थमधीतवान्—

एवमुक्तः स धर्मात्मा जगाम मिथिलां मुनिः ।
पद्भ्यां शक्तोऽन्तरिक्षेण क्रान्तुं पृथ्वीं ससागराम् ॥
स गिरींश्चाप्यतिक्रम्य नदीतीर्थसरांसि च ।
बहुव्यालमृगाकीर्णा ह्यटवीश्च वनानि च ॥
मेरोर्हरेश्च द्वे वर्षे वर्षं हैमवतं ततः ।
क्रमेणैवं व्यतिक्रम्य भारतं वर्षमासदत् ॥
स देशान्विविधान्पश्यंश्चीनहूणनिषेवितान् ।
आर्यावर्त्तमिमं देशमाजगाम महामुनिः ॥

( महा० शा० अ० ३२५।१२-१५ )

तथा च—

अथ यद्यदा भाविकालयोगाद्युगादिषु ।
तत्तदुत्पद्यते ज्ञानं लोकयात्राविधानजम् ॥
श्रुतिरेषा समाख्याता तदर्थं कारणात्मना ।
अनाम्नायविधानाद्वै वेदा ह्यन्तर्हिता यथा—
युगान्ते ह्यस्तभूतानि शास्त्राणि विविधानि च ।
सर्वस्त्वविनाशाद्वै, स्मृत्या जीवात्मनित्यया ॥

अन्यस्मिन्नण्डसद्भावे वर्तमानानि नित्यशः ।
युगान्तेऽन्तर्हितात्वेदान्सेतिहासान्महर्षयः ॥
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ।
नियोगाद्ब्रह्मणे विप्राः लोकतन्त्रप्रवर्त्तकाः ॥
वेदविद्भगवान् ब्रह्मा वेदाङ्गानि बृहस्पतिः ।
भार्गवो नीतिशास्त्रं तु जगाद जगतो हितम् ॥
गान्धर्वं नारदो वेद भरद्वाजो धनुर्ग्रहम् ।
देवर्षिचरितं गर्गो कृष्णात्रेयाश्चिकित्सितम् ॥
न्यायतन्त्रं हि कात्स्न्र्येन गौतमो वेदतत्त्वतः ।
वेदान्तं कर्मयोगं च वेदविद् ब्रह्मविद् विभुः ॥
द्वैपायनो निजग्राह शिल्पशास्त्रं भृगुः पुनः ।
न्यायतन्त्राण्यनेकानि तैस्तैरुक्तानि वादिभिः ॥
हेत्वागमसदाचारैर्यद्युक्तं तदुपास्यते ।
अनाद्यं तत्परं ब्रह्म न देवा नर्षयो विदुः ॥
एकस्तद् वेद भगवान् धाता नारायणः प्रभुः ।
नारायणादृषिगणाः तथा मुख्याः सुरासुराः ॥
राजर्षयः पुराणाश्च परमं दुःखभेषजम् ।

( महा० शा० अ० २१२ कु० शे० )

स्पष्टमेतद्यदग्रे सर्गस्य वाऽऽरम्भे नृसृष्टिः प्रथमाऽभवत्, अत्रैवाऽतोऽग्रजन्मानः एतद्देशप्रसूतयः—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन्पृथिव्यां सर्वमानवाः ॥

( म० २।२० )

वैदिकसमाज एव समाजस्यास्य प्रथमं सोपानम् । यद्यासीदपीतः प्राचीनं कश्चित् समाजः तर्हि असौ इत्थमात्मसात् कृतो वैदिकेन समाजेन यत् स सूक्ष्मेक्षिकया अनुसन्धीयमान एव शक्नोति स्फुलिङ्गायितुम् । भारतीया सभ्यता ऋग्वेदत एव प्रकाशं याति, एष एवास्या आरम्भिकः कालः । ऋग्वेदे हि समाजस्यान्तरवाह्यावुभावपि पक्षौ प्रस्फुटतः सामाजिकेषु उद्देश्येषु घटकेषु चानुशील्यमानेषु स्फुटमेव तत्र परिलक्ष्यते ऋग्वेदात् प्राक्तनस्य समाजस्य छाया । वैदिकवाङ्मये उपलभ्यते ऋत शब्दः । ऋतस्यास्यसमाजशास्त्रीयेक्षयालोचने तत्र नैसर्गिकींपरिवर्तनंप्रवृत्तिम् अनुवर्तमानमग्रिमा स्थितिं प्रतीमः । तदानीं हि ऋतमेव विश्वस्य, मानवसमाजस्य चासीत् आधारः । ऋतमेवेदं समाजीकृतं सत् पर्यणमत धर्मतया पश्चात् । सामाजिकीं पदवीमारूढमेतदेव

धर्म इति उदघोष्यत वैयक्तिकानाम् सामाजिकानां च, व्यवहाराणामाचरणम्, कर्त्तव्याणां वा नियन्त्रणमेवायाति धर्मकुक्षिम्। व्यवहारे व्यवहारविधेः, सामाजिक संघटनानाम्, सम्प्रभुतायाश्च स्वरूपं प्रास्फुटत्। व्यवहाराणामाचाराणाञ्च च, समन्वयो द्रढयति, कर्त्तव्यानां पृष्ठभूमिं त्रितयमिदमाश्रित्य प्रतिष्ठितो वैदिकः समाजे यस्य संहितीकृतं स्वरूपं ऋग्वेदः।

प्रागेवावोचाम यद् ऋग्वेदीये सामाजिके विश्लेषणे परिशील्यमाने स्फुटमेव तत्र परिलक्ष्यते अवैदिकानामपि प्राक्तनानां समाजानां छाया; शक्यते च ततः पूर्वमपि समाजविशेषाणां स्थितिर्निश्चेतुम्। दास-दस्यु-अव्रत-अपव्रतप्रभृतिभिर्विशेषणैर्ये समाजाः विशेषिता ऋग्वेदे भाषामान्यता व्यवहाराचरणादिभिर्वैदिकसमाजाद् भिन्ना भाषादिकृत एषां वैदिकसमाजाद् भेद ऊरीकार्यः। एते समाजाः वैदिकसमाजेन विगृह्णन्तः परिलक्ष्यन्ते वैदिकसाहित्ये। चिरं कालं विगृह्य पराभवमयुरिमे वैदिक-समाजाद् अर्थात् संघर्षेऽस्मिन् वैदिकसमाजेन एतेषामात्मसात् कृतिरारभ्यते। फलत उत्तरवैदिककालं यावदमी शाकल्येनात्मसात् क्रियन्ते वैदिक समाजेन।

एवंविधो विविधानां समाजानां समावेशः प्रथममभूत् वैदिकसमाजे। एष च समावेशस्तदा पदं न्यदधाद् यदा वैदिकैः स्वीयः समाजः समाजस्य स्वरूपं वा न्यबद्धत संहितया। अस्याञ्चावस्थायां पराभूतो वैदिकसमाजः कीदृश्या आचारसंहितया बन्धनीयः समाजस्याऽस्य का संहिता व्यवस्थापनीया इत्येष प्रश्न उदगच्छत्। स्वतन्त्र्याः विधिसंहितया समाजानामेतैषां सञ्चालने आसीदशक्या राष्ट्रस्यैकसूत्रबद्धता राष्ट्रियै-कतायाः वा। अतोऽवैदिकसमाजस्य वैदिकसमाजेन सहावस्थानमेव न्याय्यमालोचयत वैदिकैः। फलतो द्वयोरपि समाजयोस्समन्वयः पर्यवष्यत्, सोऽपि च बलवतो वैदिक-समाजस्यानुरोधेनैव। समन्वयेन चानेन धर्मः प्रभावितः। सामाजिकीकरणेन सहैव धर्मरूपताऽ्यासादिता ऋतेनेति प्रागेव अवोचाम। अवैदिकसमाजाय प्रदत्त प्रश्रयो धर्मो द्वेधा प्रावहत् अवैदिकसमाजेनापि धर्मसंहितायां परमासादितम्, अस्यैव फलं यद्धर्मस्य द्वे शाखे अभूताम्—सामान्यधर्मः, विशेषधर्मश्च। ऋतस्याखिला अप्रंशाः सामान्यधर्मात्मना विकाशमयुः। सत्यम्, ( यदजायत ऋतेन सहैव ) दया, अहिंसा, ब्रह्मचर्यञ्चेत्यादयस्सा-मान्यधर्मकुक्षिं प्राविशन्, विशेषधर्मकुक्षिञ्च सामाजिकानि पुरुषस्य कर्त्तव्यानि। अत्र च विशेषधर्मे समाजस्य विभिन्नाः पुरुषाः विभिन्नाश्च समूहानां घटकाः स्थिरीकृताः। सामान्याम् ऋतात्मिकां नैतिकतामनुरुन्धानः समाजश्चतुर्धा विभाजितः। एता एव चतस्रो विधाः चातुर्वर्ण्यमिति आख्याताः। वर्णविशेषाणां धर्मविशेषाः निरधार्यन्त। निर्धार्यमाणा एते विधिविशेषा एव वर्णविशेषाणां विशेषधर्मा आम्नाताः।

विशेषधर्मव्यवस्थायां समाजीयानां घटकानां विभाजनं पदं लेभे, परं सामान्य-धर्मव्यवस्थापने आसीत् सर्वेषामेकसूत्रतैव, एकरूपैवेयं व्यवस्था प्रावर्तत सर्वेष्वपि।

विशेषधर्मव्यवस्थापने हि जातीयसम्मिश्रणभावना प्रस्फुटति। अवैदिकानां समाजानामप्याचारास्तत्र प्रवेशं लेभिरे। एतेषाञ्च समन्वितः प्रभावः विधिसंहितायां प्रर्यलक्ष्यत। फलतो विधेरेकरूपता दूरंगता। विभिन्नेषु वर्णेष्वासीदेषां तत्त्वानां प्रभावः, विधिसंहितायाम् अयुः तानि प्रकाशम्। विशेषधर्मव्यवस्थायां तथा प्रयतितम्, यथा तत्र मा भूत् सांकर्यस्य संस्पर्शः। सामाजिक्याः संप्रभुताया अभिव्यक्तये तारतम्यभावेन वर्णाः, तत् सुरक्षार्थं केचनसंस्कारविशेषाश्च व्यवस्थापिताः। फलतः वर्णविशेषाणां संस्कारविशेषाः प्रावर्तन्त। संस्कारेष्वपि तारतम्यविचारेणोदिता, एतदनुरोधेनैव च ब्राह्मणात् प्रभृति आशूद्रं संस्कारा व्यवस्थाप्यन्त।

संस्कार-यज्ञीयविधि-राज्याभिषेकदैनिककर्मकाण्डप्रभृतीनां धर्मकुक्षौ समावेशेन धर्मस्य क्षेत्रमभूत् व्यापकम्। सहैव चास्यकृच्छ्रसाध्यतापि। तत्र वैषम्येण सह आडम्बरेणापि पदं निहितम्। वैदिककालिकाः सामान्या विधयोः धार्मिकसंस्कारतया परिणताः, अत एव चाभूवन् अनिवार्याः। पशुबलेः प्रभृति शूद्रैः सह व्यवहारं यावत् समेऽपि विषया धार्मिकविध्यात्मकतामासादयन्। तेषु मनागपि संशोधनं नास्तिक्यममन्यत। फलतः बौद्धैर्जैनैश्च आक्रान्तमत्र क्षेत्रे।

एतर्हि धर्मस्य द्वितीयायां शाखायां ( विशेषधर्मे ) महत् प्रहृतम्। सामान्यधर्मः पुनरासीद् बौद्धानामार्हतानां च मूलाधारः ( य ऋतेन सम्बद्धः )। अस्यां क्रान्तौ तात्कालिकिभिः परिस्थितिभिरपि साहाय्यमाचरितम्। तथागतेन ऋतस्य वैदिकीः परम्परास्तात्कालिकीभिः परिस्थितिभिः समन्वित्य यादृशं धर्मस्य स्वरूपं व्यवस्थापितम्, स एव तद् दृष्टया सनातनो धर्मः, अर्थात् सामयिकीनां परिस्थितीनां सामान्यधर्मविषयिकाणां वैदिकपरम्पराणां चैकवाक्यतया व्यवस्थाप्यमानो विधिरेव सनातनो धर्म आस्थितो बौद्धैः। बौद्धधर्मस्य, जैनधर्मस्य च प्रभावः स्फुटं परिलक्ष्यते विधिसंहितायाम्। परमेतेन सामाजिकानि संघटनानि यथा प्रभावितानि, न तथाभूदस्य प्रभावो न्यायालये, विधौ, संहितायां वा। न्यायालयस्य तद्विषयकनियमानां न्यायाधीशादेश्च व्यवस्था वैदिकपरम्परामाश्रित्यैव विकारामायात्। यथैव एषु संशोधनमभूत् तथैव दाढ्र्यमपि। सौगता, आर्हताश्च नास्तिका उद्घोषिताः, फलतः नैतैर्न्यायपालिकायां क्वापि क्षेत्रे पदं लब्धम्। एतस्य स्फुटं स्वरूपं परिलक्ष्यते दण्डसंहितायाम्। अत एव नास्तिकानां नास्तिकशूद्राणां च कठोरतरा दण्डा व्यवस्थापिताः। दण्डविधेराधारैरुद्देश्यैश्च सह वर्गीया भावना अपि स्फुटं प्रकाशमायाति।

यदाभूवन् बौद्धजैनीयाः क्रान्तयस्तदा पुनरेकदा जातीयसम्मिश्रमाक्रान्तम्। पश्चिमोत्तरसीमातो यवनशकपह्लवप्रभृतिभिः प्रविष्टमत्र। एतैः क्वचिद् विजयः, पराजयश्चापि क्वचिदासादितः परं न परित्यक्तं भारतम्, विजीयमाना विजयमानाश्च भारतमेवाध्याषत इमे। अशक्यमिवासीदेषां परावर्त्तनम्। वैदिकसमाजेन अवैदिकसमाजमिश्रणविषयिन्यायमस्यां समस्यायामवधीयत। समस्याद्वयमेतस्य पुर आयतम्—

सांस्कृतिकीजातीया च। सांस्कृतिकक्षेत्रे बौद्धैर्जैनैश्च यो विप्लव आरब्धः, समाधातुमेतं वैदिकैः कर्मकाण्डे, संस्कारमूलके धर्मे च बहुसंशोधितम्। संशोधनेनानेन-यत् प्रसूतं यन्नूतनानां देवमण्डलानां स्थापना आरब्धा। वैदिकीनां देवतानां स्थाने पञ्चदेवस्य पूजनमारभ्यत वैदिकैरपि। वैदिकदेवमण्डलस्य नैतिकता न सममन्यत नूतनेन समाजेन। भगवान् विष्णुर्मुख्या देवता आस्थीयत; यो वेदेषु उपेन्द्र इति ख्यातः। आदर्शदृष्ट्या शीलदृष्ट्या च महापुरुषा विष्णोरेवावतारा अभ्युपगताः। आसीदेषा कथा धर्मसूत्राणां पुराणेषु काव्येषु च पुनः विष्णुना सह अन्या अपि चतस्रो देवताः प्रतिष्ठामलभन्त, फलतोऽखिलेऽपि देवमण्डले देवपञ्चकमभूत् आराधनाया विषयः। अस्मिन्नेवावसरे ते समेऽपि विधयः कलिवर्ज्यतयोद्घोषिताः येषामनुष्ठानं कदाचिदासीत् न केवलं वैधमेव अपि तु अनिवार्यमपि, श्रुतिसम्मतं च। इमामेव पृष्ठभूमिमाश्रित्य जातिविषयिका अपि समस्याः समाहिताः। जातीयसम्मिश्रणे वैदिकैः सैव नीतिरवलम्बिता या कदाचिद् दासादिषु प्रयुक्ता आसीत् तैः। विभिन्नासु जातीयश्रेणिषु ता जातयः समावेशं लेभिरे। ऋते प्रतिष्ठितो वर्णविभागानपेक्षो वैदिकः समाजोऽवैदिकसमाजसम्मिश्रणेन वर्णेषु विभागमायातः। तत्र च हीनतमा जनाः वर्णेष्वपि समावेशमलभमानाः पञ्चजना उद्घोषिताः। सम्मिश्रणञ्च तन्न वर्णविहीनेऽपि तु वर्णव्यवस्था सम्पन्न एव समाजे पदं न्यदधाति। फलतः प्रतिवर्णमप्यनेके प्रभेदा उद्भूताः, प्राथमिकेन सम्मिश्रणेन अनासादितवर्णविभाग एष समाजो वर्णेषु विभाजितोऽनेन तु पश्चात्तनेन पुनस्तेऽपि वर्णाः प्रत्येकमनेकेषु प्रभेदेषु विभागमानीताः। ब्राह्मणेष्वपि देशक्षेत्रगोत्र प्रवराद्याश्रयणेन तारतम्यभावापन्ना बह्व्यः श्रेणयो व्यवस्थाप्यन्त। एषैव प्रक्रिया राजन्यवैश्यशूद्रेष्वपि समजनि। अर्थाद् एतेषामपि प्रत्येकमुच्चनीचभावापन्या नानाश्रेणय उदभूवन्। किं बहुना, अन्त्यजेष्वपि श्रेणीविभाजनेनानेन पदं न्यधायि, एतेष्वपि हि उच्चाः, नीचाश्च व्यवस्थापिताः। अद्यत्वेऽप्यस्य विभाजनस्य प्रभावो परिलक्ष्यते वैवाहिकादिषु सम्बन्धेषु। वर्णव्यवस्थाया अस्या एतदंशे तु औचित्यं पुनः दुरपह्नवं यदनया राष्ट्रस्य विभिन्नेषु प्रखण्डेषु विकीर्णो विभज्य स्थितो वा बहुखण्डसमाजा वर्गचतुष्टये समावेशमानीतः। फलतोऽखिलसमाजसंग्राहकाणि समाजस्य शाश्वतानि चत्वार्यङ्गानि राष्ट्र्योगकतामभ्यव्यञ्जन्। राष्ट्रस्यास्यानेकखण्डप्रखण्डखण्डिततामपनीय चातुर्वर्ण्यात्मकेनैकेन सूत्रेण निबद्ध्य चेदं राष्ट्र्यैकतायां निष्ठा प्रकटीकृता वैदिकैः। यद्येवं विधाः बौद्धिकी क्षमता नाप्रयोक्ष्यते तैर्नूनं तदा राष्ट्रे उदभविष्यन् परश्शताः राष्ट्र्यताः फलतो नेदमेकया राष्ट्र्यतया रज्वानिबद्धं महद् भारतमायास्यद् अस्माकं पुरः। प्रस्तुतो विषय इहोपलभ्यमानां सामग्रीमाश्रित्यैकारमाभिरुपस्थापनीयः, कार्यं चास्य प्रामाणिकमध्ययनम्।

वैदिकसमाजस्यास्य आरम्भिकानां केषाञ्चित् सामान्यानां वैशिष्ट्यानामालोचनात् पूर्वं वैदिकजातिरवश्यं विचारपदवीमानेयास्ति या "आर्य" इति संकीर्यत

जातिमिमामालोच्यैव विषयान्तराणां विमर्शमनुपयुक्तं मन्यामहे। पाश्चात्त्याः समाजशास्त्राध्येतार 'आर्य' इति जातिविशेषस्य संज्ञां मन्यमानां काश्मीरात् प्रभृति-आमध्ययुरोपात्, मध्येशियात आरभ्योत्तराफ्रीकां यावद् विकीर्णां मन्वत इमां जातिम्। आर्याणामेषां देशान्तराद् भारते प्रवेशोऽनादृतः। डॉ० अविनाशमतानुसारमार्याणां मूलं स्थानं सप्तसिन्धुः[१]। डाक्टरदासात् पूर्वं देशान्तंरादेव इमे आर्या भारतमागुरित्यासीत् मतिः समेषामपि पाश्चात्त्यानां विदुषाम्। मैकडॉलेनेन, कीथेन च स्फुटमेव व्यलेखि यद् डाक्टरदासस्य विचारान् समर्थयितुं नालं तदुपन्यस्तानि प्रमाणानि ऋग्वेदश्च। दासमहोदयेन यानि प्रमाणानि उपन्यस्तानि, स्वीयं मतं साधयितुं न तैः शक्यं मतस्यास्य साधनम्[२]।

होरलेमहोदस्य विचारो यद् आर्यैर्भारतमिदं द्विराक्रान्तम्। प्रथमं तावत् पारसीकदेशात् पदार्पणं कृतमैतैर्भारते। इमे हि ईरानदेशीयेन पथा पञ्चनदीयामुर्वरां भूमिं प्रति आजग्मुः सपरिवाराः सम्प्राप्य च पञ्चनदप्रदेशमत्रैव एतैः ऋग्वेदीयाः केचन अंशाः विरचिताः। ते सपरिवारा एव इहागमन्; अतो जातीयेन साङ्कर्येण नावसरो लब्धाः। क्रमेण चैभिः पञ्चनदादग्रे प्रसरणमारब्धम्। एषाभूत् प्रथममस्याक्रमणस्य कथा। ततः पश्चादेषामपरेण हिन्दुकुशगिलगितचित्रालोत्तरपञ्चनदीयेनाध्वना प्रसृतं गङ्गायमुनयोः प्राङ्गणे दलेनानेन सह नासीत् स्वीयः परिवारः, अपरिवारमेवेदं प्राविशत् भारतम्, अतः स्थानीयैरेव जनैः सह स्थापिताः सम्बन्धा अनेन। फलतो जातीयेन साङ्कर्येण दलेऽस्मिन् पादन्यास आरब्धः, न च अवाशिष्यत् विशुद्धम् आर्यरक्तम् अर्थात् जातीयसाङ्कर्येण रक्तसाङ्कर्यं फलितम्। दलेनानेन दक्षिणोत्तरपूर्वा दिशा व्याप्ताः[३]।

ग्रियर्सनोऽपि समर्थयते एतद् होरले मतम्[४]। परं पक्षोऽयं न वैदिकैः प्रमाणैः शक्यः समर्थयितुमिति मतिः मैकडॉनलकीथयोः[५]। इमे आर्या यदा भारतं सम्प्राप्नुवन् नासीत्तदैतेषु सभ्यताया विकारा इति दर्शनं पाश्चात्त्यानां विचक्षणानाम्। परं समाजशास्त्रीयः शोधो नैतं विचारं सम्मन्यते। ऋग्वेदे आर्यसंस्कृतेर्यादृशं चित्रणं दृश्यते तदस्ति सभ्यतोत्कर्षस्य परिचायकम्। ते हि तस्य विजेतुः समाजस्य प्रतिनिधयो येन न केवलं कृषिकलाकौशलादिकमेव अपितु राष्ट्रियतापि विकाशमानीतासीत्[६]। आर्यैरेतैर्न देवालयो व्यरच्यत परं प्राकृतिक्यः शक्तयो दार्शनिक्या दृशा स्फुटं मीमांसिताः। प्राक्त-

1. A. C. Das, Rigvedic India.
2. Macdonell, History of Sanskrit Literature.
   Macdonell and kieth, Preface to Vedic Index.
3. A F. Rudolf, A History of India.
4. Grierson, Indian Impire.
5. E. B. Havell, History of Aryan Rule in India, P. 4.
6. Vedic Index, Vol. II. P. 126.

नीनां समासामपि जातीनां मूलाधारान् समन्वयदृशा आलोच्य ता जातयः आत्मसात् कृता एतैः[१] ।

पाश्चात्यमतानुसारमार्येभ्यः प्रागपि भारते बह्वयो जातयोऽवातिष्ठन्त इत्थमिमे पाश्चात्या विद्वान्स आर्यजातिरनार्यजातिश्चेति आर्यानार्यसंज्ञाभ्यां जातिविशेषं व्यपदिशन्ति। आर्येभ्यः पूर्वमाग्नेयद्रविडाख्ये जाती अध्यूषतुर्भारतम्। द्रविडा अपि भूमध्यसागरात् सम्प्राप्ताः पलाययंश्चाग्नेयान् अधस्तः। आग्नेया अपि हि देशान्तरादेव भारतमायुः। विवेचितस्य अस्यैष निष्कर्षो यद् भारतमिदं कदाचिन्मानवसृष्टिविरहितमेवासीत्[२] ।

एवंविधायां गवेषणायां न भाषाशास्त्रीयाणि समाजशास्त्रीयाणि वा प्रमाणानि, भाषाशास्त्रीयदृष्ट्या समाजशास्त्रीयदृष्ट्या चालोचनेनेयं गवेषणावस्थातुमलम्। ऋग्वेदादुत्तरकालं यावन्नोल्लेखो दृश्यत आर्याख्याया जातेः । भारतीयसाहित्ये विशेषणवाचकतया शब्दस्यास्य लभ्यते प्रचुरं प्रयोगः, न जातिवाचकतया, पूज्यतायाम् हि अयं शब्दः प्रायः प्रयुज्यते। जगति विकीर्णासु विभिन्नासु जातिषु यद् भाषाकृतं यच्च वर्णकृतं साम्यं तदेवानुरुध्य व्यवास्थाप्यन्त आधुनिकैरुक्ताः सिद्धान्ताः, परमेतदुपपद्यते सांस्कृतिकसम्पर्केणापि, नैतावता भाषासाम्यमात्रेण वर्णसाम्यमात्रेण वा उक्तविधा निर्णयाः शक्या आसादयितुम्। भारतीये वातावरणे इयद् वैरूप्यं दृश्यते, अतो वर्णभेदः स्वाभाविक एव। भूगर्भशास्त्रिणां चेतसि उक्तविचारविसंवादी एष पक्षः निदधे पदं यद् भारत एव प्रथमतो मानवीया सृष्टिरभूत्, इत एव च विभिन्नेषु देशेषु विकाशमायात् सा[३] ।

परं नास्यैषोऽर्थः यद् वैदिकजातिर्जातीयसम्मिश्रणेन नैवाक्रान्तेति। यद्यपि आर्यानार्यविभागो विवादग्रस्तः, नापि वयं सम्मन्यामहे आर्याख्यां जातिम्, तथापि वैदिकसमाजादन्यस्तद्विरोधी च समाजो जातिर्वा आसीदिति न शक्यमनङ्गीकर्तुम्। वैदिकसमाजेन प्रतिस्पर्धमाना अवैदिकाः समाजा जातयो वा अध्यतिष्ठन् एवेदं भारतम्। अत आर्यानार्यशब्दयोः स्थाने वैदिकावैदिकशब्दौ प्रयुञ्ज्महे। प्रचुराणि प्रमाणानि लक्ष्यन्ते यैरवैदिकानां समाजानां स्थितिः शक्या निश्चेतुं प्राचीनभारते। वर्णशब्देन अद्यत्वे जातिपर्यायता आसादितास्ति। जन्मकृत एव दृश्यते सम्प्रति तत्तद्

१. तदेव, पृ० ५।

२. भारत जनगणना विवरण, १९३१, अत्र डॉ हटन महोदस्य मतम्।

३. डॉ० पिलग्रिम, प्रागैतिहासिक भारत, पृ० ११०–११४।
भारतस्य भौगोलिकपर्यवेक्षणस्य विवरणम्, वर्षः १९२६, पृ० ३।
पी० टी० श्रीनिवास आयंगारव्याख्यानमाला, वर्षः १९२६, पृ० ३।
Opening up of Africa, P. 10.

वर्णव्यवहारः। ऋग्वेदे नैष शब्दः क्वापि जातौ प्रयुज्यते। अत्र हि शब्दस्यास्य रूपे (शुक्लादिरूपपरतया) लभ्यते प्रयोगः।[1] समुदायविशेषेऽपि शब्दोऽयमिह प्रयुक्तः य (समुदायः) आसीत् कृष्णवर्णः।[2] इन्द्रेण कृष्णवर्णस्य दमनमन्यत्रापि वर्णितम्।[3] एवं विध एव सोमस्याप्युल्लेखः।[4] यज्ञमनुतिष्ठतां वैदिकानां साहाय्यमाचरितमिन्द्रेण।[5]

उद्धरणैरेते स्फुटमेव यन्न वर्णशब्दस्य जातिपर्यायता। वैदिकसमाजं विरुन्धान आसीदवैदिकसमाजः। कृष्णवर्णा असुरवर्णाश्च अवैदिकसमाजतया सन्ति सङ्केतिताः। ब्राह्मणग्रन्थान् यावद् वैदिकसमाजे वर्णचतुष्टये विभागमाससाद। एतेषां च यः पारस्परिकः संघर्षस्तस्यैव फलं यद् ब्राह्मणा देववर्णाः शूद्राश्च असुरवर्णा उद्घोषिताः। एवंविधे व्यवहारे प्राक्तनं सामाजिकबीजमेव प्रयोजकम्।[6] तैत्तिरीयब्राह्मणीयमन्त्रेण सहैकवाक्यतया ऋग्वेदीयऋचो (९।७१।२) व्याख्याने "असुर्यं वर्णमि" त्यस्य शूद्रजातिपरता प्रतीयते।

निश्चप्रचमेवासुरशब्दस्य प्रसिद्धादर्थादन्योऽपि कश्चिदर्थोऽभिमतः, यदयं शब्दो वरुणस्य विशेषकः, असुर इति हि वरुणस्य विशेषणं लभ्यते। दस्युभ्यः परित्राणमिच्छद्भिर्वैदिकैर्बहुत्रैरिन्द्रः प्रार्थितः।[7] एकत्र प्रार्थ्यतेस्म इन्द्रः सदस्यूनां वैदिकानां च भेदं व्यवस्थापयेदिति।[8]

दस्यवो वैदिकेभ्यो न केवलं शरीरेणेन भिन्ना अपितु विचारेणापि। आकृतिगत इव विचारकृतोऽपि एषां भेद आसीत्। वैदिका, बर्हिष्मन्त इति दस्यवश्च अव्रता इति व्यपदिष्टाः। य एव दस्यवस्त एव दासा अपि उच्यन्ते, परमेतेषामुभयेषां मौलिको भेदः एकस्यामेव ऋचि दस्युशब्दो दासशब्दश्च दृश्येते परं न तत्रानयोरेकमभिधेयम्, भिन्नार्थपरतयैवैतौ व्याख्येयौ।[9] दस्युदासाख्यं संघटनद्वयमप्यासीदवैदिकम्। वैदिकैः सह स्पर्धमाने उभे अपि संघटने वैदिकपराभवकामनया पारस्परिकी मैत्री

१. ऋ० १।७३।७; २।३।५; ९।९७।१५; ९।१ ५।४; १०।१२४।७।

२. ऋ० २।१२।४; १।७९।६।

३. ऋ० २।१२।४।

४. ऋ० ९।७१।२; ९।४१।१।

५. ऋ० ११।१३०।८; ३।३४।९; ४।१६।४।

६. तै० १।२।६।

७. ऋ० १।५१; ८।११।०३; १।११७।२१; २।११।२, ४,१८,१९; ३।२९।९; ५।७०।३; ७।५।६; ९।८८।४; ६।१८।३; ६।२५।२।

८. ऋ० १।५१।८।

९. १०।२२।८।

ययतुः ।[१] अतो वैदिकानां कृते द्वयोर येकविधमेव स्थानमासीत् । द्वयोरप्यनयोस्संघटनयोरनन्यत्वमेव अमन्यत वैदिकसमाजेन । फलतः पर्यायतया दस्युदासशब्दयोः प्रयोग आरब्धः । उभये अपि इमे दस्युदासाः सममेव समह्रियन्त इन्द्रेण ।[२] द्वये अपि यज्ञं विरुन्धन्तोऽक्रतवः ।[३] ऋग्वेदीयायामेकस्याम् ऋचि दस्यूनां कानिचिद् विशेषणान्युपात्तानि तैश्च स्फुटमेव प्रकाशं याति, यदेतेषां संस्कृतिः कीदृश्यासीत्, कीदृशाश्च वैदिकेन समाजेन सहैषां सम्बन्धाः ।[४] एते हि अक्रतु, मृध्रवाच, अश्रद्ध, पणि, अव्रतप्रभृतिभिर्नामभिः संकीर्तिताः ।[५] अन्यत्रापि दासाः पणि नाम्ना व्यपदिष्टाः । अवैदिकेषु संघटनेषु शम्बरा अपि गण्यन्ते, एतेऽपि दासा दस्यवश्च कथिताः ।[६]

वैदिकेष्वेव परस्परेण स्पर्धमाना अतिवर्तमानाश्च वैदिकीं मर्यादां दासा इति दस्यव इति वा कथिता अर्थाद् दासाख्यो वैदिकानामेव प्रभेद इति त्वशक्यं वक्तुम् । वर्णशब्दः रूपे प्रयुक्त इति प्रागेवावोचाम । एतेन दस्युदासाः वर्णतोऽपि वैदिकेभ्यो भिन्ना इति स्फुटमेव । येनैतेषां न सम्प्रदायगतोऽपितु समुदायगतो भेदो व्यवतिष्ठते अर्थादेषां समाज एव वैदिकसमाजाद् भिन्न आसीत् । अस्मिंश्च विषयेऽन्यान्यपि प्रमाणान्यवधेयानि यैर्वैदिकसंस्कृतेः स्वरूपमपि प्रकाशमायाति । तदीयेषु धर्मभाषोपासनासंघटना दषु वैदिकानां का दृष्टिरासीदित्यप्यालोचनीयम् ।

ऋग्वेदे दासा दस्यवश्च अवैदिकसमाजतया निर्दिष्टाः ।[७] इन्द्रेण दासा विजिताः सम्भृताश्चेति वर्णितमत्र ।[८] दासेभ्यो रक्षार्थमिन्द्रः प्रार्थ्यते ।[९] दस्यूनामुन्मूलनेन आर्यवर्णस्य सुरक्षा शक्या ।[१०] एतैरेवंविधैरन्यैश्च बहुभिरुल्लेखैर्वैदिकानां दस्यूनाञ्च पारस्परिकी स्पर्धा स्फुटमेव समर्थ्यते । इमे ( दस्यवः ) हि सततमासन् स्पर्धमानाः[११] सम्पच्छालिनश्च । परमेतेभ्यः सम्पत्तिराछिद्य वितीर्यतेस्म जनेषु[१२] । उत्तरकाले च अवैधमाचरन्तो दस्यवः कथिताः फलतः लुण्टाकेन शब्देनास्य प्रयोग आरब्धः । ऋग्वेदे

---

१. तदेव ।

२. ऋ० १०।९९५,६ ।

३. ऋ० ७।६।३ ।

४. ऋ० ५।३४।६-७ ।

५. ऋ० ३।३२।४; ६।२६।५ ।

६. ऋ० ३ ३१.४; ६।२६।५ ।

7. Some Original Texts, II, 387.

८. ऋ० २।१२।४; ४।३४ ६; २।१३।८ ।

९. ऋ० २।११।४; १०।१४८।२ ।

१०. ऋ० ३।३४।९; अथर्व० २०।११।९; २०।२०।४; ऋ० १।१०३।३ ।

११. ऋ० ४।३०।१३; ५।४८।४; १८।६९।६ ।

१२. ऋ० १।१७६।४ ।

धनिनो दस्यवः कथिताः;[१] आसंश्चेमेऽक्रतवः। अत एतेभिर्वैदिकानां वैचारिकी जातिगता च स्पर्धा सम्पच्छालिनां दस्यूनामुल्लेखो दृश्यते,[२] लभ्यते ह्येकत्र इन्द्र एतेषां सम्पत्तिमाच्छिद्य प्रजाभ्यो वितरेदिति।[३]

ऋग्वेदेऽक्रतून्, अयज्ञानिति एषां विशेषणे दृश्येते[४]। एतेन परम्परागत एव वैदिकेभ्यो दस्यूनां भेदः, वैदिकविरोधिता च स्फुटति। अन्यत्रापीमेऽयज्वानः, अनीन्द्रा इति च कीर्तिताः[५]। वैदिकैरनुष्ठीयमानान् यागान् विध्वंसयन्तो वर्णिताऽथर्ववेदे। अत्रैवामानवीयेन लोकेन सम्बन्धमाचरन्तः मायाविनश्चैते दर्शिताः[६]। ऋग्वेदे यादृशः संघर्षो वर्णितास्तदनुसारमेवंविधं नैतिकं परिवर्तनं स्वाभाविकमेव। वेदेषु व्रतमिति विधिर्व्यपदिश्यते[७]। अत एव वैदिकव्रतबहिर्भूताः स्वतन्त्रमेव स्वकीयं व्रतं व्यवस्थापयन्त इमेऽव्रता अपव्रताश्च कथ्यन्तेस्म[८]। अत्रेदमवधेयं यदीदृशैर्विशेषणैर्दासा न क्वापि विशेषिताः।

अपव्रतशब्दः कृष्णताद्योतकोऽभ्युपगतो व्याख्याकारैर्दस्यवो ह्यासन् कृष्णवर्णाः—**असिक्नी विशः**। कृष्णवर्णानां दस्यूनां संहारे सोमोऽग्रेसरः[९]। स एव 'सोमोऽस्माकं ब्राह्मणानां राजा' इत्यभ्युद्घोष्यते। कृष्णवर्णा राक्षसनाम्नापि व्यपदिश्यन्तेस्म। इन्द्रेण रक्षसां पञ्चाशत् सहस्राणि निहतानि। असुरा अकृष्णवर्णाः कीर्तिताः[१०]। वैदिकावैदिकसमाजयोर्वर्णगत इव भाषागतोऽपि एषां भेदो लभ्यते[११]; स्थलद्वये दस्यूनां भाषापि संकेतिता[१२]। ग्लेण्डरः भाषामिमां अपभ्रंशात्मिकां मन्यते।

एतेन वक्तुमिदं दुष्करं यदेतेषां स्वतन्त्रा भाषा आसीत्, परमिमे अव्यक्तभाषा इति तु स्फुटमेव। यस्त्वेषां वैदिकैः सह संघर्षो न तेनापि पूर्वोक्तो विचारः शक्यः समर्थयितुम्, यतो वैदिकेष्वपि हि पारस्परिकः संघर्षो दृश्यते बहुषु स्थलेषु[१३]। इन्द्रावरुणाभ्यां सुदासो न केवलं दासेभ्य एव रक्षितोऽपि तु शत्रुमाचरद्भ्यो वैदि-

---

१. ऋ० १।३३।४; १।३३।७-८।

२. ऋ० ६।४७।२१।

३. ऋ० ८।४।६।

४. ऋ० ७।६।३।

५. ऋ० १।३३।४; १।१३३।१; ५।२।३; ७।१८।१३; १०।२७।६; १०।२८।७।

६. ऋ० ४।१६।९; अथर्व० २।१४।५; १०।६।२८; १२।१।३७; ऋ० १०।२२।८।

7. P. V. Kane, JBBRAS, XIX, 12.

८. ऋ० ८।७०।११; १०।१२२।८; ५।४२।९; ५।४०।६।

९. ऋ० ९।१४१। १-२।

१०. ऋ० ४।१६।३। अत्र सायणभाष्यमपि द्रष्टव्यम्।

११. ऋ० १।१३०।८।

१२. ऋ० १।१७४।२; ५।२९।१०; ५।३२।८; ७।८।१३।

१३. ऋ० ५।२९।१०; ७।६।३।

केभ्योऽपि[१]। वैदिकानां पारस्परिका अपीदृशा संघर्षा लभ्यन्ते यत्र दस्युभिः पक्षविशेषस्य साहाय्यमाचरितम्, वैदिकीयैकतरपक्षाश्रयणेन पक्षान्तरेण सह युद्धम्[२]। एतेषु युद्धेषु कानिचिद् वैदिकमर्यादातिवर्तनमूलकान्यप्यासन्। वैदिकसमाजीयैरपि सदस्यैर्वैदिकी मर्यादा अतिवर्तिता, येन वैदिकेष्वपि पारस्परिकेण संघर्षेण पदं न्यधायि। प्रकाशमायाति एष विषयो वरुणार्थर्वणोः संवादेन। यद् व्यवस्थापितं विधिं न कश्चिदपि आर्यो वा दस्युर्वा शक्नोत्यतिवर्तितुमित्युद्घोषितमथर्वणा[३]।

मूरो नात्र विश्वसिति यद् वैदिकेतरेषामपि समाजानामासीत् सत्ता तैश्च समाजैः सहाभूवन् वैदिकानां संघर्षाः[४]। स ऋग्वेदीयानष्टपञ्चाशदुल्लेखान् प्रस्तौति यैर्वैदिक-समाजे एव आचारविषयकाभिमतय आसन्। फलतश्च विषयमिदमधिकृत्य वैदिकानामेव पारस्परिकाः संघर्षा उदभूवन्निति शक्यं वक्तुम्[५]। वैदिकपरम्परासु वैदिकविधिषु चाश्रद्दधानः "आराधसम्, अप्रणतम्, अप्रणतः" इत्यादिभिः पदैर्व्यवहृतः[६]। एकत्र स्थले इन्द्र "एधमानद्विट्" इति कीर्तितः[७]। एधमानद्विडित्यस्य इहैषोऽर्थः—तेषां वैदिकानां अरिर्यैरिन्द्राय हविर्न हूयतेस्म, स समाजीयास्तेन सदस्या इन्द्रेणाक्रान्ता यैस्स्वीया सम्पत्तिर्न विनियुक्ता समाजहिताय[८]। पणिरिति ख्यातो वर्गः समाजविरोधीनां तत्त्वानां संघटनमासीत्[९]। मूरेण अयं वर्गः कृपणनाम्ना कीर्त्यते[१०]। मैकडानलकीथा-वपि तं पणिमाहतुर्यः सम्पच्छाल्यपि यज्ञेषु अन्येषु च सामाजिकेषु कार्येषु न विनियुङ्क्ते अर्थम्[११]। एकत्रेदृशानां कृते बेकनाट्स इत्येष शब्दः प्रयुक्तः, अयं च पणिवर्ग इन्द्रेणा-क्रान्त इत्यप्युल्लिख्यत आभ्याम्[१२]। एतेन एतेषां वैदिकसमाजीयता स्फुटमेव प्रतीयते[१३]।

---

१. ऋ० ६।६०।६; ६।३३।३; १०। ०२.३; ६।६०।६; ७।८३।३; ८।२४।७; १०।६९।६; १०।८३।१।
२. ऋ० ७।३३.२; ५.७.८३; ८।७।१८
३. अथर्व० ५।११।३।
४. पैप्यवाद० ८।१।३।
5 JRAS. VII. 1, 3.
6. Original Sanskrit Text, 2, 387.
ऋ० १।१२५।७; ६।४ ।११।
७. ऋ० ६।४७।१६।
JRAS. XI, 282–294.
८. सामज्या पर्वत्या वासूनि दासा वृत्राण्यार्या जिगेथ—( ऋ० १०।६९।१ )
९. ऋ० १।१२४।१०; १।१८२।२; ४२५।६; ४।५१।३; ५।३४।७; ६।५३।३।
10. JRAS, II, 286–294.
11. Vedic Index.
१२. ऋ० ८।६६।१०।
१३. ऋ० ८।१।४७२।

एषा च तदानीतंनी स्थितिर्यदा वैदिकावैदिकानां पारस्परिकेण संघर्षेण सहैव पारस्परिकस्य सम्बन्धस्यापि पदार्पणमारब्धम्। वैदिकेष्वपि दस्यूनां प्रभाव आरब्धः। वैदिकसमाजेऽपि वैदिकयज्ञव्रतविध्यादिष्वश्रद्दधाना सदस्या अभूवन्। सामाजिकान् नियमानतिवर्तमानैर्वैदिकेषु विधिषु अश्रद्दधानैश्च वैदिकसमाजीयैरेव सदस्यैरासीद् वैदिकानां संघर्षः। अयमासीत्तेषां कृते संक्रमणकालः, परं वैदिकैरुभयेऽपि विजिताः। एतदवसरे च विजेतॄणां वैदिकानां कृते स्वीयायां संस्कृतौ विधिसंहितायां वा किञ्चित् संशोधनमप्यभूदनिवार्यम्। फलतोऽवैदिक्याः संस्कृतेर्वैदिकसंस्कृतौ विलय आरब्धः। ततः सर्वानपि समाजान् संगृह्य समावेशेन वा आत्मनि आसादित महाशक्तिर्वैदिक-समाजोऽग्रे प्रस्तुतः। परमेतद् विभिन्नसंस्कृतिसमाजादिसम्मिश्रणं नासीत् "दीने इलाही" समम्। अत्र हि वैदिक्यो विचारधारा एव संशोधनपुरस्सरमग्रे प्रचारिताः। येन सम्मिश्रणदशायामपि वैदिकाः सिद्धान्ताः न विकारमाप्ता अपितु दार्ढ्यमेव।

दस्युदासयोरिव आन्ध्रशबरपुलिन्दप्रभृतीनामपि समस्योदिता[1]। समस्येयं रामायण-महाभारतपुराणादिकालं यावद् दृश्यते[2]। इत्थमिव शकहूणखशदरदयवनादीनामप्युद-भूत् प्रश्नः। एतेषु समेष्वपि तथैव वर्तितम्, वैदिकैर्यथा दस्युषु। फलत एकतो वैदिकी, मर्यादा विकासमायाता, अपरतश्चैतासां जातीनां वैदिकधारायामेव विलय आरब्धः। आसादितश्चैताभिर्जातिभिर्वैदिकसमाजस्याङ्गभावः। शनैः शनैरासाम् स्वतन्त्र-मस्तित्वमपि अभूत् तिरोहितम्। एषां चावैदिकसमाजानां मर्यादापि वैदिकपरम्परायां समाविष्टा।

स्पष्टं यद् भारतवर्षमेकं राष्ट्रमस्ति। अस्य रूपद्वयं वर्तते। इदं राष्ट्रं मान-सरोवरसदृशम्। यत्र विभिन्नाः प्रजातयः संस्कृतयश्च विश्वाभ्यन्तरे प्रवाहिता भवन्ति। राष्ट्रमिदं सागर इवास्ते। यत्र विभिन्नाः प्रजातयः संस्कृतयश्च लीनाः सत्यः स्वास्तित्व-मुत्सृजन्ति। स्वीयया विशिष्टभौगोलिकस्थित्या सर्वेभ्यो देशेभ्यः पृथगात्मीयमस्तित्व-मर्जयति। अस्य राष्ट्रस्य शिवो विश्वस्य सर्वोत्कृष्टनगराजहिमालयस्य धर्मदेवसागरस्य च स्वामी वर्तते। अत्र समुद्रतटे कुमारी कन्या शिवप्राप्तयेऽहर्निशं तपश्चर्यायां निरता अस्ति। अस्य विराजो देशस्य नोत्तरा, न दक्षिणा, न पूर्वा, न च पश्चिमा काश्चिद् दिग् विद्यते। समग्रदेशो ज्ञानस्वरूप एव। अत एव देवभूमिरियम्। हिमालयसमुद्रा-भ्यामेकान्तिकया अस्य देशस्य सामाजिकी सांस्कृतिकी च अविच्छिन्नता सुस्थिरायमाना अभूत्। विन्ध्यमेखला अपि अस्य पार्थक्यं प्रस्तोतुं समर्था नाभूत्। समग्रदेशे हिम-वत्सेतुपर्यन्तं सांस्कृतिकं चैतन्यं प्रवाहितं वरीवर्त्ति। विचारप्रधानतया अस्मिन् प्रान्तीयता,

---

१. ऐ० ब्रा० ७।१४।

२. रामा० २।५०।३२; २।४८।४; ७।२२।६; ७।२।३; ४।४१।१२; महा० १२।२०७।४३; वा० पु० ४५।१२६।

क्षेत्रीयता इत्यादयः सर्वथा न प्रादुरभूवन्। सामाजिकदार्शनिकाधारशिलायां स्थितोऽयं समग्रो देशः अखण्ड आसीत्। मानवकल्याणप्रतिपादकविचाराः कस्मिंश्चित् क्षेत्रे विकसिताः स्युः, समग्रोऽपि देशस्तान् विचारान् स्वीचकार। भाष्यकाराणामाचार्याणां टीकाकृतां परस्परं न कोऽपि सङ्कीर्णो मतभेदोऽभवत्। बौद्धिको मतभेदो देशोन्नत्यै आवश्यको मन्यते, मतोऽनेन मतभेदेन सत्यस्य निर्णयो भवति '**वादे वादे जायते तत्त्व-बोधः**।' माध्यमिकस्य शून्यवादिनो वा दर्शनस्य रचयिता आचार्यो नागार्जुनः (१०० ई०) विदर्भे, सौत्रान्तिकवादस्य अभिधर्मकोषस्य कर्त्ता आचार्यो वसुबन्धुः पेशावरे', आचार्यः शङ्करश्च दक्षिणे उदभूवन्। शारीरकभाष्यस्योपर्यद्भुतटीकालेखको वाचस्पतिमिश्रो मिथिलावासी आसीत्। अनेनेदं स्पष्टं प्रतीयते यत् समग्रो देशः विचारप्रवाहस्य समुद्र आसीत्।

## पाश्चात्यनृतत्त्ववादिदृष्टिकोणः

यस्मिन् समये भारतीयसमाजस्याध्ययनं प्रारब्धमभवत् तस्मिन् समये जर्मने ऐतिहासिका इदं साधयितुं प्रायतिषत यत् वयमार्याः स्म। पृथिवीतले यत्किञ्चित् सौष्ठवं तत् सर्वमार्यप्रयोज्यमेव। युरोपस्यान्ये साम्राज्यवादिनो विद्वान्सोऽस्योत्तरं प्रददुः। तदनुसारमार्यापेक्षया पूर्ववर्त्तिन्य एवंविधाः प्रजातयः सभ्यताश्च आसन्, याः आर्यप्रजातिभ्यः श्रेष्ठा आसन्। आर्यैस्तासां नाशः कृतः। इदं कार्यं जॉनमार्शल-महोदयः 'मोहन-जो-दडे' इत्याख्यस्योत्खननेन प्रारब्धवान्। तदनुसारेण प्रस्तुतः खण्ड-भागो द्राविडसंस्कृतेर्ध्वंसावशेषोऽस्ति। एतद्ध्वंस आर्यैः कृतः। ते आरण्यकाः कृषकाश्चा-सन्। ते आर्यवाह्यदेशत आगमन्। मूलनिविशिनो द्राविडा आसन्। तेषु नागरिक-संस्कृतिर्विकसिता आसीत्। तेषां पार्श्वे नगरस्य, सहस्रस्तम्भकाश्च दुर्गा आसन्। भारतीयविद्वान्स एतान् विचारान् समर्थयन्तः स्वीकृतवन्तो यत् पुरो ध्वंसादेव आर्यदेवता इन्द्रः पुरन्दरः कथ्यते।

साम्राज्यवादिविद्वान्सो भारतीयसमाजस्याध्ययनं स्वार्थपूर्त्तयेऽकुर्वन्। श्रीएण्डर्सन-महोदयः १९१० खीष्टाब्दे विनचेस्टरविद्यार्थिनां समक्षमभाषत्। तस्मिन् भाषणे तेन स्वमित्रस्य डॉ० जैक्सन महोदयस्य बामफील्डमहोदयस्य चोद्धरणमकरोत्। तदनुसारेण भारतीयानां मध्ये लोकप्रियतायाः सर्वश्रेष्ठसाधनं तेषां धर्माग्रहः स्वभावज्ञता चासीत्।[१] हर्बर्ट रिज्ले महोदयोऽपि लन्दने भारतीयलोकसेवकेभ्य इदमेवोपादिशत्। १९१३ खीष्टाब्दे सर आर० टेम्पुल महोदयो 'ब्रिटिश असोसियेशन' इत्यस्य बर्मिंघम-स्थाने नृवंशविज्ञानशाखाध्यक्षीयभाषणे इममेव विचारमस्पष्टयत्। स्पष्टतः प्रतीयते यत्

---

1. K. M. Pannikar, Servey of Indian History, A. P. 4–5. Man, Vol. X, P. 163.

भारतीयसमाजस्य खण्डयितुमेव राजकीयसमाजशास्त्रिणो भारतीयनृवंशस्याध्ययनमकुर्वन्। तेषामुद्देश्यमेतत्साधनायाभवत् यद् भारतस्य मूलनिवासी न कोऽप्यभवत्। तेभ्यो यवनेभ्योऽपि पूर्वमपि भारते प्रजातय आगच्छन्त्य आसन्। अत एव इदं भारतं न कश्चिदपि मातृभूमिः। अयं देशः विभिन्नानां परस्परविरोधिनां समाजानां सङ्ग्रहमात्रमेव। न चैकं किमप्येकं राष्ट्रम्।

१६०१ खीष्टाब्दे, १९११ खीष्टाब्दे च जनगणनायाः प्रतिवेदनं रिज्ले महोदयः ई० ए० गेटमहोदयस्य साहाय्येन निरणयत्। तस्यां व्यक्तविचाराणां परिवर्धितरूपमेव "दि पिपुल ऑफ इण्डिया" (१९००) नामको ग्रन्थो वर्तते। अस्मिन् ग्रन्थे भारतीयजनसङ्ख्यायामनेकप्रजातीनां सम्मिश्रणस्य सिद्धान्तः प्रस्तावितः। रिज्लेमहोदस्याध्ययनस्य निष्कर्षोऽत्यन्तः स्पष्टो भाति; तस्य ग्रन्थस्योपसंहारात्मकोपशीर्षकोऽस्ति 'भारतीयराष्ट्रियताया भविष्यम्।" तदनुसारेण जातीनाम्, भाषाणाम्, प्रजातीनां च विभिन्नतया भारतमेकं राष्ट्रं भवितुं न शक्नोति। एतदेकसूत्रे स्थापयितुं सूत्रद्वयमस्ति—ब्रिटिशशासनमाङ्ग्लशिक्षा च। यवना, एतद् द्वयाद् वञ्चिताः।[1] फलतः यवनान् अन्यसमुदायांश्च भारतीयराष्ट्रात् पृथक्कर्तुं प्रयासोऽभवत्। १८५७ खीष्टाब्दतो भारतस्य "निष्ठावान् यवनः" सरसैयदअहमदखाँमहोदयः इदं कार्यं प्रारभत्। १६०६ खीष्टाब्दे 'मुस्लिमलीग'संस्थायाः स्थापना अभूत्। १६०८ खीष्टाब्दे रिज्लेमहोदस्योक्तग्रन्थः प्रकाशितोऽभवत्। १९०९ खीष्टाब्दे 'मिन्टो मार्ले' नामकः सुधारः समायातः; यस्मिन् यवनेभ्यः साम्प्रदायिकं प्रतिनिधित्वं प्रदत्तम्। अन्यसमुदायानामनेकराष्ट्रियतानां बीजारोपणमपि जातम्। ७ फरवरी १६१० खीष्टाब्दे कलकत्ताया एकस्मिन् प्रीतिभोजे लार्डमिण्टो महोदयो रिज्लेमहोदयस्य प्रशंसाप्रसङ्गेऽवोचद्, यत् यदि रिज्लेमहोदयो भारतीयसमाजस्याध्ययनं नाकरिष्यत् तदा वयं सुधारं प्रस्तावयितुं न प्राभविष्यामः। तस्य महत्त्वपूर्णाया अस्याः सेवाया एव इदं फलमासीद् यत् सः सामान्यकर्मचारिपदात् 'गवर्नर-कौंसिल' इत्यस्य सदस्योऽन्त्ये च सर सी० जे० लायडमहोदयस्य स्थाने भारतीयकार्यालये सचिवपदं प्राप्तवान्। सर्वविदितमिदं यद् भारतीयसमाजस्य समग्रमध्ययनं प्रारम्भे ब्रिटिशराजकीयकर्मचारिणः कृतवन्तः। फलतोऽध्ययने निष्पक्षतायाः प्रश्न एव नास्ति।[2]

## रिज्लेमहोदयस्य परिगणनम्

एच० एच० रिज्ले महोदयो भारते मुख्यतः द्राविड, इण्डो आर्यन, मांगोलियन इत्याख्यास्तिस्रः प्रजातयस्तासांश्च निम्नलिखिताः सप्तशाखाः प्रजातीः मन्यतेः—

---

1. H. H. Risley, People of India, A. P. 227-301, ( 1969 ).
2. Mr. O' Malley.

(१) द्राविडः—द्राविडा मूलनिवासिनः, एतेषां शरीरसंस्थानं लघुः, त्वचो वर्णः मन्दगौरः, यदाकदा कृष्णोऽपि, केशा यदा कदा भ्रमरायताः, कृष्णानि अक्षीणि, दीर्घकपालं शिरः, चतुरस्रनासिका अथवा समोन्नता नासिका भवति। किन्तु कदाचित् समोन्नता नासिका नाऽपि भवति। इयं प्रजातेर्दक्षिणपर्वतीयदेशं व्याप्य तिष्ठति। अस्य अत्यधिकः प्रतिनिधिः मालावारस्य पनियरजातिस्तथा 'छोटानागपुर' इत्यस्य 'सन्थाल' जातिरस्ति। इयं प्रजातिरुत्तरदिशायामपि प्राप्यते। पश्चिमदिशायामरावल्याः पूर्वदिशायां राजमहलस्य पर्वतीयप्रदेशं यावदियं जातिर्विस्तृता वर्तते। मिश्रणेनेयं जातिरन्यासां जातीनां जन्मदात्री अभवत्। यस्याः क्षेत्रं दक्षिणपर्वतीयप्रदेशस्योत्तरभागतः शेषभारतस्य सम्पूर्णभागं यावद् विस्तृतमस्ति।

(२) शकी—द्राविडीजातिः, यस्यां विशेषतो 'मराठा' जातयो लोकाः सम्मिलिताः सन्तु। इयं प्रजातिर्वृत्तकपालप्रजातेर्द्राविडाख्यायाः 'तुर्की', 'ईरानी' जातीनां मध्यवर्त्तिनी वर्तते।

(३) गङ्गाक्षेत्रीयार्यद्राविडाख्या जातिरथवा भारतीयाकारवती इयं प्रजातिर्यस्यां दीर्घकपालविशेषता नात्यन्तं स्पष्टा, सा कपिशवर्णा, मध्यनासिका भवति। समस्ता जातयः परस्परं सम्मिश्रिताः सत्य आर्यावर्त्तस्य वास्तविकजनसङ्ख्यानिर्माणं कुर्वन्ति। ता जातयो निम्नलिखितेभ्य आर्येभ्यो भिन्नाः सन्ति।

(४) मङ्गोलद्राविडाख्याया जातेराकारः, अस्या जातेर्व्यक्तिर्वृत्तकपाला, मध्यनासिका, श्यामत्वक् च भवति। अधिकांशतो वङ्गदेशे इयं जातिर्लभ्यते।

(५) भारतस्योत्तरभागे पूर्वस्यां दिशि तथा मध्यभागे वृत्तकपालाकारवती जातिरस्ति। यस्याः स्वल्पकेशास्तथास्थूलोष्ठा च भवति। अस्या मङ्गोलप्रजातेस्तुल्यता गङ्गाक्षेत्रीयब्राह्मणजातिभिर्जायते।

(६) भारतीयार्याः कश्मीरस्य तथा पञ्चनदस्य च ये सामान्यजनाः सन्ति, पूर्णरूपेण चात्यन्तं न्यूनसङ्ख्याश्च सन्ति। एते पूर्वस्मिन् भागे सप्तसप्ततितमाक्षान्तरं यावद् विस्तृताः सन्तिः। एते विशालकायाः, सुन्दरत्वचः, दीर्घकपालाः, सूक्ष्मोन्नतनासिका भवन्ति।

(७) 'तुर्की ईरानी' इत्याख्या जातयो या भारतस्योत्तरपश्चिमान्तभागे तथा सिन्धुनद्याः दक्षिणतटे लभ्यन्ते। एताः स्वल्पाकृतयो वृत्तकपालाः सुन्दरत्वचश्च भवन्ति। एतासां नासिका सामान्यत उत्तुङ्गा भवति।

एवंप्रकारेण भारतस्य प्रजातयः स्पष्टरूपेणैवमस्तु—सामान्योच्चता, दीर्घकपालता, उन्नता कपालभित्तिः, उन्नतं मस्तकम्, यस्मिन् प्रायो ग्रन्थयः प्रतीयन्ते। येन कारणेन नेत्रकोष्ठः काठिन्येन दृष्टिगतं जायते। स्वल्पं मुखं कपोलेषु कानिचिच्चिह्नानि,

स्वल्पा तीक्ष्णा च हनुः, किञ्चिल्लम्बायमाना चतुरस्रा च नासिका, मध्यनासस्याधारे स्थूल ओष्ठः, लम्बायमानाकृतिर्मुखञ्च। किञ्च, त्वचो वर्णः गोधूमसदृशतः (तैलङ्ग-ब्राह्मणाः) प्रगाढकपिशवर्णं यावद् गभीराणि नेत्राणि, केशाः कृष्णास्तथा ऋजवः, येषां प्रवृत्तिराकर्षकरूपं प्रति, केशसंस्थितिः सङ्कीर्णा च। एवंभूतानां व्यक्तीनां प्रभुत्वं दक्षिणभारतस्य उत्तरभारतस्य च निम्नजातिषु च वर्तते। इमा व्यक्तयो गङ्गाक्षेत्रस्थ जातीनां मध्येऽपि लभ्यन्ते। यद्यपि इमा अन्ततः मिश्रितरूपैः "मूलास्ट्रेलाइड" इत्याख्यानां जातीनामाकारैः सम्बन्धिता वर्तन्ते तथापि पूर्वस्यां दिशि ताभ्यो भिन्नाः सन्ति। वास्तविकसमानतोपेताश्च जातयः केवलम् 'इलियटस्मिथ' इत्याभ्यां प्राप्तकङ्का-लाध्ययनेनाऽपि प्राप्यन्ते। या मिश्रदेशस्योत्तरभागे राजवंशकालात् पूर्वसमाधिषु प्राप्यन्ते।

रिज्लेमहोदयस्य समग्रमपि विषयं समालोच्यमस्ति। जातेराधुनिकं रूपं प्राचीनं नास्ति। जातीयगतिशीलता अनुलोमप्रतिलोमनियोगापद्धर्मादिकारणैः क्रियान्विता आसीत्। राजा कस्याऽपि वंशस्य कन्या ग्रहीतुं शक्नोति स्म।[१] वन्यप्रजातयोऽपि जातिषु परिगण्यते स्म।[२] यया एवं मन्यते यद् ब्राह्मणराजपूतविल्लालनायर इत्यादि-जातिषु विभिन्नसमुदायस्य सम्मिश्रणमभूत् तदा तासां जातीनां प्रतिव्यक्त्यध्ययनेन सामान्यप्रजातीयनिष्कर्षः कथं प्रस्तोतुं शक्यते? यदा जातीयगतिशीलता विद्यमाना विद्यते उपजातीनां निर्माणञ्च जायते, जातीयपरिष्कारस्य व्यवहारो भवति तदा परिणामो निर्णेतुं न शक्यते। सर्वतो महत्त्वपूर्णा इयं वार्ता वर्तते यत् सहस्राब्दीतो विकासक्रमे वातावरणेन जलवायुतः शरीरस्य निर्माणादिषु जायमानो भेदो मन्तुं न शक्यते। एवंविधं भेदं प्रोफेसर फ्रेंज बोआस[३] महोदयः अमेरिकायां प्रोफेसर डब्लूरिज्ले महोदयश्च भारतवर्षे चानुमन्यते।[४] समस्ते भारतवर्षे जलवायु, भोजन-

1. E. A Gait in Hasting's Encyclopaedia of Religion and Ethics, Vol. iii, 1910, P. 234; H. A. Rose, Glassary of the Tribes and Castes of Punjab and Northwest Frontier Provinces, Vol. II, 1911, PP. 130, 256; Census Report, Punjab, 1911, Vol. I, P. 270; Census Report, Punjab, 1911, Vol I. P. 293; United Provinces, 1911, Vol. I. P. 273.

2. General Indifinit Characteristics of the Tribes of Burma 1906, P. Vi. Census Report, Kashmir, 1911, Vol. I. P. 204; Sir G. Grierson, Linguistic Survey of India, Vol. IX, Part II, 19 8, P. 324.

3. Mr. Gait. Census Report, India 1911, Vol. I. P. 381; Man, Xiv, 1914, P, 207.

4. The American Anthropologist, N. S., Vol. Xix. N-3, July-Sept., 1912, P. 530; Man, xiv, 1914, 206, et. Seque.

सामग्रीः नदीनामाक्रमणभूमिश्चैकरूपेण न सन्ति। एतत्प्रभावोऽस्त्यवश्यम्भावी। एतत्प्रयोज्य आकृत्यादिभेद. प्रजातीयभेदरूपेण मन्यते चेत्तर्हि भ्रम एव भवति।

यस्मिन् समये रिज्लेमहोदयः पुस्तकं लिखितवान् तदनु तदीया आर्याणां द्रविडानां सम्बन्धे या धारणा आसीत् तस्याः खण्डनं पूर्वरूपेण समपद्यत। पञ्जाब-जनपदः पश्चिमोत्तरसीमायाः प्रजातीयसम्मिश्रणस्य केन्द्रभूत आसीत्। तत्राऽपि नवीन-प्रभाराः शोधपरिणामाः प्रस्तुता अभवन्। दक्षिणभारतीया विद्वान्सोऽप्यधुना इदं सिद्धान्तं प्रस्तुवन्ति यद् आर्याः द्रविडा दस्युप्रभृतयश्च प्रजातयो न सन्ति, अपि तु समुदायविशेषरूपेण प्रवर्त्तमाना आयान्ति।[१] आरण्यकजनाः कतिपयजनपदीयजनाश्च अद्यत्वे द्रविडा एते इत्येवं रूपेण स्वीकर्त्तुं न शक्यन्ते।[२] द्रविडभाषाविषयेऽपि अयं सिद्धान्तः स्वीकृतोऽभूत् यत् 'मानख्मेर' भाषायाः प्रभावो भारतवर्षेऽसमप्रदेशं यावद् विकसितोऽभवत्। राजपूतजाटमराठाप्रभृतिजातय आकृतिमाधारीकृत्य शकहूणप्रभृति-जातिभिः सह योज्यन्ते, इयं रीतिरङ्गीकर्त्तुं न युज्यते। स्वयं तेषु एकरूपतैव नास्ति। हिन्दुजातिभिः पराजितजनेभ्यः समाजे एवंरूपेण सम्मानपूर्णं स्थानं दातुं न शक्यते।[३] नृवंशस्याधारेणाऽपि इदं सिध्यति यच्छकहूणप्रभृतिजातयः स्वस्वमूल-स्थानेष्वपि एकस्यामाकृतौ न सन्ति।[४] वास्तविकरूपं त्वेतदस्ति यच्छकहूणप्रभृति-जातीनां भारतीयत्वं कृतम्।[५] कार्यमेतदनेन हेतुना शीघ्रतया सम्भूतं यत्तेषु भारतीयप्रजातिषु च लेशतोऽपि भेदो नासीत्। मराठाजातीयपूर्वपुरुषाः सीथिन इत्याख्याः कदाचित् डकनक्षेत्रे समागच्छन्। एतत्त्वनैतिहासिकम्।

## अन्यत्परिगणनम्

ए० सी० हडनमहोदयो रिज्ले महोदयस्य परिगणनं न स्वीकरोति। तदीय मतेन ज्ञायते यद् द्रविडेभ्योऽपि पूर्ववर्त्तिप्रजातयो भारतवर्षे समागताः। सम्भाविते

1. Report, British Association, 1905, P. 832, et. Seque.
2. P. T. Sri Niwas Iyngar, Life in Ancient India in the Age of the Mantras, 1912, P. I, et. Seque; Mr. E. Thurston, The Castes and Tribes of Southern India, 1909, Vol. I. Introduction, P. xxxvi, et. Sequ.
3. Census Report, India, Vol. I. P. 257.
4. E. H. Minns, Seythians and Greeks, 1913, P. 35; T. A. Joyce, Journal Royal Anthropological Institute, Vol. Xlii, 1912, P. 450.
5. V. A. Smith, Early History of India, 3rd ed., 1614, P. 322; Journal Royal Asiatic Society, January-April, 1909; D. R. Bhandarkar, Journal Asiatic Society, Bengal, 1909, P. 167.

यत् पश्चिमवङ्गप्रदेशे गङ्गायास्तटप्रान्ते मूलनिवासिनो द्रविडा भवेयुः। किन्तु परिभ्रमन्तस्तेऽन्ततः 'छोटानागपुर' इत्याख्ये स्थाने स्थिरा अभवन्। खीष्टीयवत्सरतः सहस्रद्वयवर्षेभ्यः पूर्वमार्या भारतवर्षे प्रवेशञ्चक्रुः। अल्पाइनसंज्ञकप्रदेशाल्लघुकापालिकवंशीया जना भारतवर्षे प्राविशत्। सर्वप्रथममुत्तरदिशातः पूर्वोत्तरदिशातश्च चीनप्रदेशान्तर्गततिब्बतीयवर्मिवंश आक्रमणञ्चकार। शानजातीया जना ईरावदीनद्यास्तदीयक्षेत्रेषु असमप्रदेशे विजयं प्राप्नुवन्। अनया रीत्या द्रविडजातीयेभ्योऽपि प्राग्वर्त्तिन आर्यजातीया अल्पाईनमङ्गोलप्रजातीया मिलित्वा भारतीयसमाजस्य मूलं स्थापयामासुः।

जे० एच० हुडनमहोदयः सम्मनुते यदस्मिन् भारतवर्षे नीग्रो वंशीयाः प्रथमं प्रविविशुः। तत्रापीदमवश्यमवधारणीयं यत्तेषां प्रभावो नाममात्रतोऽभूत्। एतदनन्तरं प्रोटो आस्ट्रेलियनजातीयानां प्रवेशो बभूव। एतदीयपूर्वजानां चिह्नानि फिलिस्तीनदेशे प्राप्तानि सन्ति। एतदनु मेडिटेरियनवंशीयानामस्मिन्देशे विस्तारोऽभवत्। एतेषां भाषा संश्लिष्टा आसीत्, यत आस्ट्रेलियामहाद्वीपस्य एशियामहाद्वीपस्य समस्ता भाषाः प्रादुरभवन्। युरोपदेशस्य पूर्वभागतः मेडिटेरियनवंशीया जनाः पुनरस्मिन्देशे आजग्मुः। अस्मिन्नवसरे ते पूर्वापेक्षया सभ्याः सुसंस्कृताश्च आसन्। धातुज्ञानवन्तो लौहताम्रादिधातूनां समीचीनं ज्ञानं तेष्वासीत्। नगरस्य राज्यस्य च कल्पनाऽपि तैः कृताः। अनुमीयत इमे एव जनाः सिन्धुसभ्यताया जनकाः सन्ति। एतेन सुस्पष्टं भवति यद् भारतवर्षमूलतः जनसंख्यातः शून्यमेवासीत्। अत एव वाह्यप्रजातिभिरेवायं देशः पूरितः। हट्टनमहोदयस्य परिगणनमेवमस्ति—

१—**नीग्रोवंशीया :**—लघुकपालीया नीग्रोजातीया अफ्रीकाद् आगत्य अन्दमानमलयनागभूमिदक्षिणभारतेषु कतिपयारण्यकजातीयेषु विभक्ता अभवन्।

२—**प्रोटो आस्ट्रेलाइडवंशीया :**—कृष्णवर्णा दीर्घकपालीया अवनतनासिका आसन्। एवद्वंशीयजनानां सम्बन्धो भूमध्यसागरीयवंशेन सह आसीत्।

३—**प्रारम्भिकभूमध्यसागरीया:**—एतद्वंशीया आर्यजना दीर्घकपालीया बभूवुः।

४—सामान्यरूपेण विकसिता मेडिटेरियनवंशीया एव द्रविडा आसन्।

५—अर्मिनायडवंशीयाः—एते लघुकपालीया आसन्। एतदुद्गम अल्पाईनप्रजातिष्वासीत्। सम्भाव्यते यदेतेऽपि द्रविडैरेव सहागच्छन्। यत एतदीयामेव भाषाम् ते व्यवाहरन्।

६—अल्पाईनवंशीयाः—एतेऽपि लघुकपालीया आसन् । गुर्जरदेशे वङ्गदेशे चैषां निवासोऽभूत् । आर्येभ्योऽपि पूर्वमिमे भारतवर्षमाजग्मुः । सम्भवत आर्यभाषयैवैतेऽपि व्यवहरन्ति स्म ।

७—वैदिकार्यवंशीयाः ।

८—मङ्गोलवंशीयाः ।

डॉ० बी० एस० गुह महोदयस्य परिगणनमाधुनिकं प्रामाणिकं च सम्मान्यते । एतस्मिन् भाषाविज्ञानसम्बन्धिन्या उत्पत्तेर्नाम श्रूयते, यथा द्रविडभाषाविषये । अथ च द्वयर्थकं नामाऽपि अभिधीयते, यथा शकार्यशब्दौ भाषाया जातेश्च बोधकत्वेन द्वयर्थकौ स्तः । अत्र नृवंशविज्ञानस्य दृष्टिकोणेषु विशेषतोभारः प्रदत्तोऽस्ति । एतैर्मूलतः षट्संख्याकानां शाखोपशाखायोगेन नवसंख्याकानाञ्च प्रजातीनां योगफलभारतीयसमाजरूपेण प्रतिपादितम् । गुहमहोदयेन एतासां प्रजातीनां परिगणनमेवं रूपेण कृतमस्ति—निग्रोवंशीय, मूल आस्ट्रेलियाइड, मङ्गोलवंशीय ( दीर्घकपालीयलघुकपालीयतिब्बतीय मङ्गोलः ) भूमध्यसागरीय ( पुराभूमध्यसागरीय, भूमध्यसागरीय तथाकथितपूर्वीयः ) पश्चिमीलघुकपालीय ( अल्पाइनाइड, दिनारिक, अर्मेनाइड, ) नार्दिक इत्येताः प्रजातयः परिगणिताः ।

निग्रोवंशीयाः अन्दमान, कोचीन, ट्रावनकोर राजमहलप्रभृतिप्रदेशेषु प्राप्यन्ते । मूलभूता आस्ट्रेलिया निवासिनः हिन्देसिया, मलेनेसिया, पेलीवेसिया प्रदेशेषु च प्राप्यन्ते । मङ्गोलदेशीया भागद्वये विभक्ताः सन्ति । तत्र वृत्तकपालीया असमप्रदेशेऽधिकमात्रायां लभ्यन्ते । तिब्बतप्रदेशीया इमे सिक्किमभूटानप्रदेशेषु प्राप्यन्ते । पुरा मध्यसागरीया जना कृष्णवर्णा आसन् । एते कन्नडमलयालमप्रदेशेष्वाधिक्येन प्राप्यन्ते । वास्तविकभूमध्यसागरीयजनाः पञ्जाबप्रदेशे गङ्गाया उत्तरीयतटप्रान्तेषु च प्राप्यन्ते । इमे तु सभ्या आसन् । आर्येभ्यः पूर्वं ते द्रविडरूपेणागमन् । उत्तरप्रदेशे तदीया भाषा आर्यभाषया सह सम्मिलिताः । तृतीया भूमध्यसागरीयजनाः पञ्जाबसिन्धराजपूताना उत्तरप्रदेशप्रभृतिप्रान्तेषु लभ्यन्ते । लघुकपालीयेषु अल्पाईनवंशीया दिनारिकवंशीया च सन्ति । बंगालउडीसाकाठियावाडकन्नडतामिलकुर्ग प्रभृतिप्रदेशेषु दिनारिकजातीयाः सन्ति । गुजरातपश्चिमीघाटमलयालमतेलगू प्रभृतिप्रदेशेषु च दिनारिकजातीया जनाः सन्ति । प्रारम्भिकलघुकपालीयप्रजातयश्च गङ्गायातो दक्षिणस्याम् मध्यप्रदेशे उत्तरप्रदेशस्य पूर्वभागे बिहारप्रदेशे च प्राप्यन्ते । चित्रालगिलगिटनेपालपश्चिमभागेषु च तदीया वंशजा अद्यापि सन्ति । बम्बईनगरीयाः पारसीका जना अपिलघुकपालीयशाखायामेवान्तर्भवन्ति नार्दिकवंशीया आर्यवंशीयाश्च दीर्घकाया गौरवर्णाः, पीतताम्रवर्णकेशाः, नीलनेत्राः सन्ति ।

डॉ० बी० एस० गुहमहोदयसम्मतया शारीरिकविशेषतया उदाहरणानि :—

| १ | २ | ३ | ४ |
|---|---|---|---|
| | मिली मीटर इत्यभिधाने अनुपातमाने | मि. मी. इत्यभिधाने अनुपातमाने | अनुपातमाने मि. मी. इत्यभिधाने |
| | दीर्घकापालिकः आधारः (तेलगू-ब्राह्मणः) | अल्पेडिनारिकः अथवा सिन्धुना (अनुपातः) गुजरातकनाड़ा-बंगाल | मूलर्नार्डिकः गङ्गा-नद्याः समीपवर्ती (सिक्खः तथा ब्राह्मणः) |
| शरीरपरिमाणः | १·६३४२३ | १.६५८०२ | १.६८६३९ |
| कपालः | | | |
| १–दीर्घव्यासः | १८९,६८ | १८३,२५ | १९३,८० |
| २–ह्रस्वव्यासः | १४०, ९२ | १४९,६० | १४१,७३ |
| ३–मानम् १०० डा / ३ | ७४, ५४ | ८१,७६ | ७३,०१ |
| कपोलास्थिमध्य-भागस्य विस्तारः | १३१, १८ | १३४,४९ | १३४,५८ |
| मुख्यस्य विस्तारः | ११५, ४० | ११६,३४ | १२०६१ |
| मुखमानम् | ८८०५ | ८६५८ | ८९८८ |
| नासिकामानम् | ७३,०० | ६९,८५ सुनासः | ६७,१३ सुनासः |
| त्वग्वर्णः | स्वच्छगोधूमसदृशः | जैतून इत्येदपेक्षया गोधूम सदृशः | दुग्धमिश्रितकहवा सदृशः स्वच्छः |

## सिन्धुवंशपरम्परा

अद्यत्वे इयं परम्परा पञ्जाबप्रदेशेऽवशिष्टाऽस्ति। अस्या द्वितीया शाखा ह्रस्व-कपालपरम्परा अस्ति। एनान् च डॉ० गुहमहोदयः चैलकौलोथिकयुगीया उपलब्धि-रित्येवं मन्यते। अस्याः वंशजा मध्यमकायाः सद्व्य‌ङ्नासिकाः सुलक्षणा आसन्। एतेषां तुलना भूमध्यसागरीयवंशपरम्परया सह विधीयते। अनेन विवेचनेनेदं स्पष्टं भवति यत्परिगणनकार्ये सीमाया नियता रेखा कर्त्तुं न शक्यते। एषु परस्पर पुनरावृत्तिः स्वभावतो भवति। पश्चिमोत्तरभारते निवसन् शीलनार्मदिकवंशपरम्परायाः सम्मिश्रणं भूमध्यसागरीयैः पूर्वीयैर्वा सह अभूत्। इमे जनाः फिशरमहोदयमतेन हिमालयस्याधित्यकायां निवसन्ति। एषां द्वयोर्भागयोराल्पोदिनारिकपरम्परा विराजते। येन सम्मिश्रणमवश्यम्भावि प्रतीयते। आदिमकृष्णवर्णा ये जनास्तेषां सम्मिश्रणं प्रायशः समस्तासु वंशपरम्परासु अभवत्। भूमध्यसागरीयरक्तमिश्रणस्येदं फलमेतदभूद्, यन्निम्न-

वर्गीयपरम्परायाः प्रादुर्भावोऽभवत्। मङ्गोलपरम्परा उत्तरस्यां पूर्वस्याञ्च दिशि विराजते। मध्यप्रदेशीयजनेष्वपि तदीयं मिश्रणमनुभूयते। फलतः प्रजातीयविषये साऽपि सीमारेखा निश्चेतुं न शक्यते।

## भाषा-प्रजातिः संस्कृतिश्च

प्रजीलस्कीमहोदयेन भाषाविषयकमीदृशं किमपि तथ्यं न प्रस्तुतमस्ति यदाधारणेदं स्वीक्रियते यद् वर्तमानायामार्यभाषां संस्कृतौ चानार्यतत्त्वं विद्यमानमस्ति। भारतवर्षे कोलमुण्डापरिवारस्य भाषा बाहुल्यमस्ति। असमदेशे मानख्मेरइत्याख्यपरिवारस्य भाषा दृश्यते। किन्तु एतन्मतं सर्वमान्यं नास्ति। उच्यते यदार्याणामागमनकालं यावत् कोलवंशीयानां मानख्मे वंशीयानाञ्च परस्परं मिश्रणं समभवत्। आर्यवंशीयानाम् ईरानदेशागमनात्प्रागेव द्रविडपरिवारस्य पूर्वकालिकीभाषा व्यवहारपथमागताऽऽसीत्। संस्कृतभाषायाः 'यव' शब्दः इण्डोयुरोपियनभाषीय 'ईव' शब्दस्य परिणतिरस्ति। गोधूमशब्द अनार्यभाषीयोऽस्ति (संस्कृते गोधूमः, पारसीके गन्दुम इति, ईरान्याम् गन्धम इति)। इण्डोयुरोपियनभाषीयव्रिहिशब्दस्य प्रातिनिध्युत्तरवर्त्तिनि आर्यवंशे चावलशब्दः करोति, यश्च मध्ययुगीनार्यभाषायां 'चामल' शब्दस्य परवर्त्तिस्वरूपमस्ति। एतस्य मूलं मुण्डाभाषीयो जाम इति शब्दो भवितुमर्हति। कदली, नारिकेल, ताम्बूल, कार्पास, जम्बू, शाल्मली इत्यादीनि फलनामानि अनार्यभाषा सम्बन्धीनि सन्ति। एवमेव वाण, लकुट, लगुड शब्दा अपि मूलत आर्याणां प्रयुक्ता न सन्ति।[1] व्रीहयः, इक्षवः, ताम्बूलकृषिः, एकत आरभ्य विंशतिसंख्यां यावत् काचन एका संज्ञा (कोड़ी) इत्येवंभूता व्यवहारशब्दा अनार्याणां प्रभावेण आगताः सन्ति। पुनर्जन्म, स्वर्गनरकयोः कल्पना स्यूतवस्त्रनिर्माणकला आर्यैर्ज्ञाता नासीत्। दृष्टिदोषशमनक्रिया न्युत्सवनम् (न्योछावर), वरणसदृशं कर्मकाण्डमनार्यप्रभावत आगतमस्ति। विश्वनिर्माणकल्पना प्राग्वैदिकी अस्ति, या च ऋग्वेदस्य दशमे मण्डले नासदीयसूक्ते विशदीकृता अस्ति। चान्द्रमसि तिथिगणना अपि अनार्यमण्डलादेव आगतः। संस्कृतभाषीयौ राकाकुहूशब्दौ बहिस्थौ स्तः।[2] अवतारवादकल्पना, नागपूजनम् मत्स्यगन्धाकथा अनार्यप्रभावतः आगच्छन्। हिन्दुजनानां परमपवित्रा गङ्गा अपि आर्याणान्नैवास्ति। अयं शब्द आस्ट्रिकभाषीयोऽस्ति। शब्दस्य संस्कृतेश्च विकासो येन प्रकारेण येषु दृष्टिगोचरो भवति तेनेदं स्पष्टं मन्यते यदार्याणामागमनात्पूर्वं पञ्जाबदेशे पश्चिमोत्तरक्षेत्रे च द्रविडप्रजातेर्व्यापकः प्रसार आसीत्। एतेषां समेषां तत्त्वानां

1. P. C. Bagchi, Pre-Aryan Pre-Dravidian in India; S.K.Chattergee, Non-Aryan Elements in Indian Aryan, ( J. G. I. S., III, 42 ).
2. P. Mitra, "A Vedic Night of the Moon in Polynesia." Calcutta Journal, Vol, 1, July, P, 1934.

रूपान्तराणि पुराणेषु सम्पादितानि। कतिपयविदुषामेतदंशे मतभेदोऽस्ति यदार्येषु व्यवहृताः शब्दाः सांस्कृतिकः प्रभावश्च कस्माच्चित्स्रोतस आगतौ स्तः, किन्तु अस्मिन्नंशे समेषामैकमत्यमस्ति यदिमे भावा आर्येषु स्वयं नैव विकसिताः सन्ति।[1]

यस्मिन् समये आर्या भारतवर्षे आजग्मुस्तस्मिन् समये मानवानां द्वौ समूहावास्ताम्। एको दस्यूनाम् (दासानां वा) अपरश्च निषादानाम्। दासा दस्यवो वा निश्चप्रचम् ईरानदेशं निवासं कृतवन्त आसन्। यूनानदेशीया एतेषां दहारप्रजातीयानां भूमध्यसागराद्दक्षिणप्रदेशे निवासोल्लेखं कृतवन्तः। आधुनिकपारसीकभाषायां दिह इति शब्दः ईरान भाषीयो दह्यु इति शब्दोऽस्ति। यश्च मूलनिवासिनां कृते प्रयुक्तोऽस्ति। आर्यैरेषां प्रयोगो दस्यूनां सेवकानां वा कृते कृतोऽस्ति। यश्च स्पष्टं शत्रुताया द्योतकोऽस्ति। एवमेव स्लाव शब्दो यश्च पुरा श्रेष्ठरूपेऽर्थे प्रयुक्त आसीत्, स शत्रुतावशात् 'स्लेव' दासरूपेऽर्थे प्रयुक्तोऽभवत्। आर्याणां यो रङ्गो वर्णो वा आसीत् सः शुभः। दासानां दस्यूनां वा यो रङ्गो वर्णश्चासीत् सोऽशुभः सममन्यत।

मोहन-जो-दरो, हरप्पा इत्यनयोः प्रदेशयोर्भूम्युत्खननेन यन्नूतनं सांस्कृतिकः स्वरूपः समक्षं समायातं तेनेदं मन्यते यदार्याणां संस्कृतिर्द्रविडसंस्कृतेस्तत्पूर्ववर्तिन्याः संस्कृतेश्च योगफलमस्ति। तदीयानि प्रमाणानि आर्यसंस्कृतौ स्वरूपत उपलब्धानि सन्ति। शिवपूजनम्, योगः, पृथिवीमाकाशञ्च प्रति मातृपितृबुद्धिर्देवीभावना वा आर्येषु मौलिकी नैवास्ति। ते प्रकृतितत्त्वे देवत्वस्थापनां कर्तुं नैव जानन्ति स्म। स्वयं द्रविडशब्दः डमिल, डामिज, ट्रामिलशब्दानां रूपान्तरमस्ति, नैवार्यभाषीयः। १८५६ ख्रिष्टीयेऽब्दे विशपकाल्डवेलमहोदयो द्रविडभाषाया व्यापकं विश्लेषणं प्रास्तौषीत्। यश्च सांस्कृतिकसम्मिश्रणस्य समर्थनं कुरुते।[2] द्रविडाः सभ्या आसन्। तेषु राजतन्त्रमासीत्।[3] महन्तः प्रसादा दुर्गाश्चासन्। मन्त्रिमण्डलस्य सङ्घटनं भवति स्म। सङ्गीतकलायां ज्ञानमासीत्। लेखनकलायाः प्रयोगो भवति स्म। ईश्वरास्तित्त्वमवतारः कर्मकाण्डकल्पना च प्रचलितान्यासन्। ईश्वराय नृपाय च समानं महत्त्वं दीयते स्म। तयोः सम्माने मन्दिरनिर्माणक्रिया विशेषता आसीत्तेषाम्। तेषु न्यायाधीशः, नियुक्तः (वकील) वा नैवासीत् तथापि विधेर्न्यायस्य ज्ञानं तेषु पर्याप्तमासीत्। आचाराःपरम्पराश्च पर्याप्तं महत्त्वं प्राप्नुवन्। तेषु धातुज्ञानमासीत्। ओषधिप्रयोगोऽपि क्रियते स्म। नगरमायुधं नौः, द्वीपज्ञानम्, युद्धमित्यादिकं तदीयसंस्कृते-

---

1. W. G. Archer, "The Bleu Grove, Poetry of the Oraons London, 1940 ), Vol. 19.
2. Comparative Grammer of the Dravidian Language, 3rd, ed. ( 1613 ) P. 113.
3. K. P. Jaysawal, Hindu Polity.

रङ्गतामभूत् । वस्त्रनिर्माणप्रभृतिकार्याणां कौशलं तेष्वासीत् । आसां सर्वासां विशेषतानामुल्लेखो वेदेष्वप्यस्ति । भारतीया अपि निगमागमयोर्धाराद्वयं मन्यते । यत्रागमस्वरूपतोऽवैदिकोऽस्ति ।

भारतीयसंस्कृतेः एतस्य धाराद्वयस्य सामासिकता अत्यन्तं प्रत्यक्षा अस्ति । पूजायाः कर्मकाण्डं वैदिकदर्शने नास्ति । तेषु यज्ञहवनयोः प्रथा प्रचलिताऽऽसीत् । पूजायाः षोडशोपचारस्वरूपमवैदिकतत्त्वानां प्रसारभूतमस्ति । यत्र धूपो दीपः पुष्पं नैवेद्यमित्यादिसमर्प्यते । पूजायाः हवनस्य चाभिन्नता संस्कृतिद्वयस्य मिश्रितः परिणामोऽस्ति । पूजाशब्दस्य व्युत्पत्तिरपि द्रविडीया अस्ति । प्रोफेसरमार्ककालिन्समहोदयानुसारं पूजा द्रविडानाम् पू = पुष्पम् + जे = कर्म इत्यनयोर्विकसितं स्वरूपमस्ति । यत् पुष्पाणामधिकं महत्त्वमिदानीमप्यस्ति । इदं पुष्पकर्मपदेनाप्याख्यायते । अनेनैव प्रकारेण होमः पशुकर्मपदेनोच्यते [1] अस्य दार्शनिकं रूपं श्रीमद्भगवद्गीतायां पूर्णतां याति । काकवलिस्तत्सदृशमन्यच्च कर्मगृह्यसूत्रेषु विकासमलभत ।

प्राग्वैदिककर्मकाण्डस्वीकृतेरिदं तात्पर्यमस्ति यत्तदीयास्य दैवसिद्धान्तस्य स्वीकरणम् । फलतो देवानां देवतानाञ्च कल्पना कार्येषु विकसिताऽभूत् । शिवेन सहोमाया विष्णुना सह श्रियश्च योगोऽभूत् । अन्तिमे चरणे तु हनुमतः शीतलाया भैरवादिदेवानाञ्चापि पूजनं प्रारब्धम् । येषामुत्पत्तिपूजनादिकं संस्कृतिद्वयस्य सामासिकतायाः प्रत्यक्षं प्रमाणमस्ति । शिवो द्रविडदेवता अस्ति । तमिलभाषायां शिवन् (चिवन्) इत्यस्य तात्पर्यमस्ति रक्तवर्णः । देवत्वं तैर्ज्ञातमासीत् । फलतः सः शिवः प्रारम्भकाले आर्येषु नीललोहितः, उत्तरकाले नीलकण्ठश्चाभूत् । शिवस्यैकं नाम शम्भुरप्यस्ति । अयं शब्दस्तामिलभाषीयस्य चिम्पुशब्दस्य चेम्बुशब्दस्य रूपान्तरमस्ति, यस्यार्थोऽस्ति ताम्रः । वैदिकस्य रुद्रस्येदमेव स्वरूपमस्ति ।[2] विष्णुरर्द्धवैदिकोऽस्ति, अर्धांशे वैदिकोऽर्धांशे चावैदिकश्च । तदीयो रङ्गः श्यामोऽस्ति यश्चाकाशस्यापि रङ्गः । तामिलभाषीयो विण् शब्द आकाशवाचकोऽस्ति । एवं विष्णोर्वैदिकावैदिकमुभयं सिद्धम् । गजलक्ष्मीशब्दावनार्यीयौ स्तः ।[3] कृष्णः (तामिलभाषीयः कण्णाण, प्राकृतभाषीयः कन्हः) द्रविडेषु नवयुवकानां देवताया वैदिकस्वरूपमस्ति । अनेनैव प्रकारेण मुरुकणस्य विकसितं स्वरूपं कुमारः स्कन्दो वाऽस्ति । शिवपुत्रत्वे तदीया प्रसिद्धिरस्ति । स्कन्दस्य गणेशस्वरूपं वैदिकं भवितुं नार्हति । शिवस्य लिङ्गपूजनमार्यसंस्कृतेर्विरुद्धं प्रतिभाति । शिवस्यानेकेषु स्वरूपेषु पशुपतिः विरूपाक्षः, ऊर्ध्वलिङ्ग ईदृशमस्ति, यदीयः सम्बन्धः हरप्पा संस्कृतौ प्राप्यते ।[4]

---

1. Dravidic Studies, No. iii, ( University of Madras ), No. 59 ff.
2. P. T. Sri Niwas Iyangar, op. cit., P. 125.
3. तदेव पृ० १२६ ।
4. Dravidian Studies, op. cit.

हनुमान् विकासशीला देवता अस्ति । प्रथमतः सः स्वयं भक्तोऽस्ति । द्रविडेषु प्रसिद्धा अण्मन्तिनामिका प्राग्वेदिकी देवतैव हिन्दुसमाजे हनुमद्रूपेण प्रसिद्धा, या च वेदेषु वृषाकपिरिति ख्यातिम् लभमाना सती अद्यावधिरागता ।[1] गरुडस्यैकं नाम सुपर्ण इत्यस्ति । सः विष्णोर्वाहनमस्ति । अस्मिन्नपि अर्द्धोऽशो द्रविडानामस्ति । गोपूजनमपि दासानां विशेषता अस्ति न तु आर्याणाम् । फलतः प्रारम्भिकवैदिकसमाजे गोमेधयज्ञो भवतिस्म । आर्यजातीयसंस्कृतावनार्याणां वेशो भूषा आचारश्च प्रत्यक्षमनुभूयन्ते । अद्यत्वे दुग्धं दधिघृतमित्यादिकमार्याणामस्माकं पवित्रं प्रधानञ्च भोज्यं वस्त्वस्ति । किन्त्वेतत्सर्वं भोज्यं वस्त्ववैदिकमस्ति । अस्यूतं वस्त्रम्, धौतवस्त्रम्, शाटिका, उत्तरीयम्, उष्णीषम्, आच्छादनवस्त्रम् (शाल) आर्येषु व्यवह्रियन्ते स्म । एवं भूतानि पर्याप्तानि प्रमाणानि प्राप्यन्ते यानि आर्यानार्ययोर्भाषायाः प्रजातेः संस्कृतेश्च सम्मिश्रणं प्रस्तुवन्ति । स्पष्टं भवति यदद्यत्वे यत्किञ्चिदुपलब्धमस्ति तत्सर्वं केवलं वैदिकं नास्ति, अपितु विभिन्नानां प्रजातीनां संस्कृतीनाञ्च योगफलमस्ति ।

## मूल्याङ्कनम्

रिज्ले महोदयस्य समकालिको भारतीयो विद्वान् श्रीबालगङ्गाधरतिलको मन्यते यदार्या औत्तराध्रुवत आगताः सन्ति । ईदृशा एव विचाराः कतिपयैरन्यैरपि भारतीयविद्वद्भिरभिव्यञ्जिताः । प्रतिवादेऽस्य विषयस्य उमेशचन्द्रदत्तः, अविनाशचन्द्रदासः, श्रीनानापावगीमहोदयप्रभृतयो विद्वान्स आर्याणामुत्पत्तिस्थानं भारतीयसप्तसिन्धुप्रदेशेऽमन्यन्त । परञ्च भारतवर्षे प्रजातीयसम्मिश्रणस्य समर्थकाः कोऽपि विद्वान् ईदृशमुदाहरणं न प्रास्तौत, यत्रार्यैर्द्रविडैर्वा स्वसाहित्येषु स्वीयलोककथासु वा कुत्राऽपि बहिर्देशात् स्वागमनस्य सङ्केतः कृतः स्यात् । द्रविडजातिविषये लेखका आधुनिका विद्वान्सोऽपि नैतादृशं प्रमाणमुपस्थापयामासुः । विश्वस्य कस्याश्चिदपि जातेः साहित्ये ईदृश उल्लेखो नैव प्राप्यते यत्रार्याणां भारतवर्षे तेभ्यः पृथग्भूय आगमनस्योल्लेखः स्यात् । किन्तु वैदिकजातीयाः स्वीयोत्पत्तिः, वंशविस्तारम्, धार्मिकप्रसारादिकं व्यवस्थितरूपेण प्रस्तुवन्ति । एषां वर्णनपरम्परा वेदेभ्य आरभ्य समस्ते संस्कृतसाहित्ये यथावद्रूपेण कश्चिदपि प्रक्षेपं विना प्रचलन्ती अस्ति । प्रत्येकं भारतीयाः प्रतिदिनं स्वीयसङ्कल्पे प्रातःकाले इदं मूलं स्मरन्ति ।

कथ्यते यद् द्रविडा आर्येभ्यः सभ्या आसन् । आर्याः पशुचारका आसन्, द्रविडास्तु नगरदुर्गयोः संस्कृतिं जनयन्ति स्म । आर्याः बहिर्देशतो भारते जीवनयात्रां शान्तिपूर्वकं विधातुं स्वपशुभिः पारिवारिकजनैश्च साकमागच्छन् । ते आक्रामका नैवासन् । इदन्तु तर्कशक्तेः परमस्ति यत्पशुचारकाः शान्तिप्रिया आर्या नगरदुर्गशक्तिसम्पन्नानां

1. F. E. Pargiter, JRAS, 1913, P. 400.

द्रविडानां ध्वंसं चक्रुः। आश्चर्यमेतदस्ति यद्विजयशीलाः पराजितशत्रूणां देवानां नैतिकतां कर्मकाण्डस्य तत्सदृशस्य चान्यस्य विषयस्य च मान्यतां स्वीचक्रुः, तथा आत्मीयं यत्किञ्चिदप्यासीत्सर्वं तत्यजुः, अथवा शत्रुषु समादधुः।

दस्यव आरण्यका मूलनिवासिनश्चामन्यन्त,[1] किन्तु वैदिकसाहित्ये तेषां यद् वर्णनमस्ति तदनुसारन्ते आरण्यका नैव सन्ति, प्रत्युत ते नगरवासिन आसन्। 'असुरः पुरः प्रकुर्वीत्।" ते व्यापारिणोऽप्यासन्। वस्तुतस्तेषां सम्बन्धः प्रजात्या सह नैवापि त्वाचारेण सहासीत्। श्रीमद्भगवद्गीतायामिदमेव सत्यापितं श्रीकृष्णेन अर्जुनं प्रति— **अनार्यजुष्टचमस्वर्ग्यम्** इत्यादिना। वायुपुराणेऽसुरा वैदिकानां जामातरो बान्धवाश्च कथिताः सन्ति—**"असुरा ये तदासन् तेषां दायादबान्धवाः।"** महाभारते शान्तिपर्वणि श्लोको व्यक्तीकृतोऽस्ति यत् सर्वेषु वर्णेष्वस्मिन् समये दस्युसदृशमाचरणं दृश्यते— **"दृश्यन्ते मानुषे लोके सर्व वर्णेषु दस्यवः।"** यदि दस्यूनां सम्बन्धो रूपेण रङ्गेण च सह स्यात् तर्हि ते सर्वेषु वर्णेषु कथं दृष्टिपथमागच्छेयुः। वेदेषु दस्युवधो दुष्टवधश्च तुल्य एव सम्मतोऽस्ति ( ऋ० ६। ३३। ३ )। अयमेव विषयः नैस्फील्डमहोदयेनैवमुक्तोऽस्ति। भारतीयेषु आर्यः, विजेता, मूलनिवासी चेत्येवंरूपेण कोऽपि विभागो नास्ति। इमे विभागा निश्चप्रचमाधुनिका एव सन्ति। अत्र तु समस्तभारतीयजातीयानां रूपरङ्गयोरत्यन्तमैक्यमस्ति। ब्राह्मणात्प्रभृति आचाण्डालं रूपरङ्गयोः रक्तस्य च साम्यं दृश्यते। वेदेषु प्रसिद्धं दस्युशब्दमुद्दिश्य म्यूरमहोदयो लिखति यद् ऋग्वेदे मया दस्युः असुरशब्दानामध्ययनमस्माद्धेतोः कृतं यत्ते शब्दा अनार्याणां सन्ति मूलनिवासिनां वा। मया किमपि नाम नैव मिलितं यदेतादृशं स्यात्। एवमेव मैक्समूलरमहोदयोऽपि वदति दस्युशब्दस्यार्थः केवलं शत्रुरस्ति। योरागोजिन महोदयस्य मतेन ईरानदेशीया दस्युशब्दार्थे दह्युशब्दं प्रयुञ्जते। स्वकीयस्यैव समाजस्य कतिपयसदस्यान् दस्युशब्देन सङ्केतयन्ति। स्पष्टमेतदस्ति यदत्र कुत्राऽपि कस्यचिद्रूपस्य रङ्गस्य भाषाया वा दस्युभिः सह सम्बन्धो नाऽस्ति। अविनाशचन्द्रदासमहोदयः कथयति यद्यथा आङ्ग्लाः कञ्चन साहसिकमाङ्गं "ब्लैकगार्ड" शब्देन सम्बोधयन्ति तथैव वयमप्याचरणहीनं जनं दस्युशब्देन सङ्केतयामः।

विश्लेषणेनैतेनैतत्स्पष्टं भवति यत् श्वेतवर्णाः पीतवर्णाः कृष्णवर्णा रक्तवर्णा मनुष्या भारतवर्षं आययुः। तथैतेषाञ्चतुर्णां सम्मिश्रणेन पञ्चमोऽपि वर्ण उत्पन्नोऽभूत्, यश्च भारते एवाऽस्ति। इदं परिगणनं रङ्गाणां मानववंशशास्त्रस्य च निष्कर्षभूतमस्ति। अस्य सम्बन्धः ख्रीष्टीयधर्मस्य मान्यताया वैज्ञानिकीकरणमस्ति। श्वेतपीतादिवर्णचतुष्टये विभक्ता जना काकेशिकविभागस्य हेमेटिक—शेमेटिक शाखयोरुपलब्धि-

1. K. M. Pannikar, op. et. PP. 4-5.

भूताः सन्ति । इमे द्वेऽपि शाखे नूह इत्यस्य हेमशेमनामकौ यौ पुत्रौ तयोः सन्ततिभूते स्तः । परन्तु नूहः स्वयं प्रलयकाले तस्य मत्स्यस्य प्रतीकभूतोऽस्ति यदीया कथा समस्त-धर्मेषु तथा समस्तजातिषु प्राप्यते । तदीयं स्रोतः मनोस्तस्यां नावि विद्यते या तेन हिमशृङ्गे बद्धा आसीत् । हेमशेमौ सूर्यचन्द्रयोः पर्यायभूतौ स्तः । सूर्यश्चन्द्रवंशीय-भारतीयानामुत्पत्तिः सर्वविदिता अस्ति । वस्तुतो भारतीयानामुत्पत्तिस्तत एकवर्णा-दभवत्, यत्र चतुर्णां वर्णानां विकासशक्तय आसन् । तेषामेका भाषा, एकमेव रूपञ्चासीद्— **"एकवर्णा समाभाषा एकरूपाश्च सर्वशः"** । बाल्मीकिरामायणस्य महाभारतस्य चैषां वचनानामयं निश्चितोऽनुवादः बाइबिलग्रन्थेऽप्यस्ति सर्वेषां भाषा एका आसीत्, आदि पुरुषः पूर्वत आगतश्च । मनुष्येऽर्थे प्रयुक्तानां सर्वभाषीयशब्दानां मूलं मनुशब्दे एवास्ति अस्मादेवैकवर्णाद् यश्च हंसवर्ण इति कीर्तित आसीत् । चतुर्णां वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणामुत्पत्तिरभूत् । देशस्य, कालस्य, परिस्थितेश्चानुसारेणैतेषां विस्तारोऽभवत् । ऐतेभ्य एव विश्वस्य समस्ता जातय उदपद्यत । रूपवैचित्र्यं कामं भवतु नाम किन्तु मनुष्याणामेकैव जातिरस्ति । नेपालदेशीया टट्टूपदवाच्या आस्ट्रेलिया देशीयाश्च घोटका आकारेण प्रकारेण भिन्ना भवन्तुनाम परन्तु तेषां मूलजाति-रेकैवास्ति ।

उत्तरध्रुवप्रदेशे आदिसृष्टिर्नैव भवितुं शक्नोति यत्र केन्द्रच्युतेर्हिमपातस्य च परम्परा प्रचलति । मानवीयशरीरे यदावरकं चर्म भवति, रोमकूपः बालश्च भवति, तेषां तत्र देशीयप्राणिषु सम्भवो नास्ति । अफ्रीकादेशीयकृष्णजातीयेभ्योऽन्यवर्णीयजना-नामुत्पत्तिर्नैव सम्भवति, यतो हि कृष्णवर्णः सर्ववर्णानामभावरूपोऽस्ति । युरोपदेशीय-विद्वान्स आर्याणां रूपं प्रास्तुवन् । तदुल्लेखो युरोपीयभाषासु क्वाऽपि नास्ति । भारते आर्यशब्दस्य प्रयोगः क्वाऽपि नास्ति । स तु श्रेष्ठमर्थमभिव्यनक्ति । तदीयः सम्बन्धो गौरवर्णेन लम्बनासिकया, प्रशस्तललाटेन सह च क्वापि नास्ति । एवमेवानार्य-शब्दस्य प्रयोगः कुत्राऽपि न कृतोऽस्ति । येन कृष्णवर्णस्य ह्रस्वनासिकाया लघ्वाकार-पुरुषस्य चोल्लेखः स्यात् । यश्चानार्यशब्दोऽसभ्यानामवैदिकानां वा विचाराणाम-भिव्यक्तिं करोति ।

एतदपि अन्यूनं मनोरञ्जकं नास्ति यत् जर्मनदेशीया विद्वान्सः आर्यजातीयं मानवं गौरवर्णं दीर्घशरीरं प्रशस्तललाटं च मन्यन्ते । फ्रेञ्चविद्वान्सस्तु तं लघुशरीरं लघुशिरकं च मन्यन्ते । आङ्ग्ला विद्वान्स एतयोर्मध्यतोऽनार्याणां दीर्घसूचिकां प्रस्तुतां कृत्वा कथयन्ति, यत् ते आर्यापेक्षया अधिकसभ्या आसन् । जर्मनदेशीयो विद्वान् मैक्समूलरमहोदयो विश्वस्य समस्तभाषाणां साम्यमाधारीकृत्येदं विवादं प्रास्तौत् यत् मूलभाषा आर्याणा-मासीत्, ये मध्येशियादेशे उत्पन्ना अभवन् । किन्तु अन्ततः तेन मध्यशब्दो निस्सारितः, तथा एशिया मात्रमन्यत । पाश्चात्त्या एवमाधुनिका विद्वान्स आर्याणां जातिम्, उत्पत्तिम्,

बहिर्देशात्तेषामागमनम्, यां भारतीयजातिमुद्दिश्य कथयन्ति तत् समर्थनं तज्जातीय-साहित्ये कुत्राऽपि नोपलभ्यते । इयं न्यूनाश्चर्यमयी वार्ता नास्ति ।

**भारतीयो दृष्टिकोणः**

प्रायशो विश्वस्य समस्तजातीनां भाषाणां संस्कृतीनाञ्च मिश्रितं रूपं भारतीयाः संस्कृतिरनेन हेतुना मन्यन्ते यदस्या विशेषता एवं समताः प्रायशो विश्वस्य समस्तासु संस्कृतिषु प्रजातिषु च प्राप्यन्ते । वस्तुत एवंविधस्य विषयस्य प्राचीनसम्बन्धे तिस्रो वार्त्ताः सम्भवन्ति । प्रथमा, विभिन्नदेशेषु स्वतन्त्ररीत्या ता विशेषता जनताया विचारे व्यवहारे चागताः स्युः । द्वितीया, ता विशेषता भारतदेशात् तेषु देशेषु गता भवेयुः । अत्रेदं भवितुमर्हति यद् भारतीयास्तत्र गत्वा प्रचारमकुर्वन् अथवा तत्रत्या जना भारतमागत्यात्रत्या विशेषता आत्मना साकमनयत् । तृतीया, इदं सभाव्यते यद् विभिन्नदेशेभ्यस्ता विशेषता भारतदेश एव नीतवान् । एषु विवेचनेषु पाश्चात्त्या विद्वान्सस्तृतीयां वार्तामेव साधयितुं प्रयतन्ते । एतादृशविषयस्य साधने तदीयः साम्राज्य-वादी दृष्टिकोणः स्पष्टमस्ति । तेन सहैव स्वयं तेषां देशेऽपि तत्रत्याः प्रजातयः संस्कृतयश्च मूलतस्तदीया नैव सन्ति अपि तु बहिर्देशत एव समागताः सन्ति । तादृशं प्रजातीय-साङ्कर्यं तेषां बुद्धौ सरलतया आगन्तुं शक्नोति । वस्तुतस्तेषां दृष्टौ एतत् कथमपि सिद्धं न भवेत् यत् पराधीनो भारतदेश एव विश्वसंस्कृतीनामुद्गमस्थानमस्ति ।

संस्कृतिविषयक इतिहासकारः प्रथमं मतं न विजानाति । नृतत्त्वविज्ञानमपि अद्यत्वे एतत् मानयितुं जागरूकमस्ति यत् संस्कृतेः समानता परस्परसम्बन्धाधीना अस्ति । स्वतन्त्ररूपेण सर्वेषु देशेषु समानो भावो नैव विकसितोऽभूत् । अन्तत इदानीं द्वितीयं मतमेव विचारणीयमस्ति । एतदर्थं वयं पाश्चात्त्यसमाजशास्त्रिभ्यः पृथग् भूय भारतीयं पक्षं प्रस्तोतुमावश्यकं मन्यावहे ।

एतदनुसारं पृथिव्यां मानवसृष्टिः एकस्मिन् स्थाने समपद्यत । सा च शनैः शनैः समग्रपृथ्वीतले प्रसृताऽभवत् । पुराणानुसारं प्रथमतो मानवसृष्टिर्भारतवर्षे एवाऽभूत् । एतदीयो विस्तारश्च समस्ते जगतीतलेऽभवत् । प्रथमतः सृष्टिरमैथुनी आसीत् । ब्रह्मणो दशमानसपुत्रा अभूवन् । किन्तु तैः वंशविस्तारो न कृतः । सृष्टिविकासार्थं ब्रह्मा स्व-शरीरं भागद्वये विभक्तवान् । ततः स्त्रीपुरुषयोर्युगलमुदपद्यत । यश्च पुरुषः स मनुः, या च स्त्री सा च शतरूपा इति प्रसिद्धिमगात् । ताभ्यां पञ्च सन्ततयोऽजायन्त । प्रियव्रत उत्तानपादश्च द्वौ पुत्रौ, आकूतिः, देवहूतिः, प्रसूतिश्चेति तिस्रः कन्याः । एतासु आकूतिनामिकां कन्यां प्रजापतिमरीचये, देवहूतिं प्रजापतिकर्दमाय, प्रसूतिञ्च दक्ष-प्रजापतये पत्नीत्वेऽदात् राजर्षिर्मनुः । पृथुः प्रथमः पुरुष आसीत्, येन यत्र तत्र ग्रामस्य, नगरस्य, दुर्गस्य, वीरजनानां निवासयोग्यस्थानस्य, पशुशालायाः, शिविरस्थानस्य, आकरस्थानस्य, कृषियोग्यभूमेः, अधित्यकायाम्, जननिवासस्थानस्य च रचना कृता । एतन्नाम्नैव पृथ्वी इति भूमेर्नामधेयमभूत् ।

यस्मिन् यस्मिन् भूप्रदेशे हिन्दवो निवासस्थानं चक्रुः तत्र तत्र वैदिकसंस्कृतिरपि प्रसृताऽभवत् । विश्वस्य केन्द्रभूतं भारतवर्षमासीत् । अयं देशः कर्मभूमिरिति ख्यातिमलभत् । अन्ये देशा भोगभूमयः सन्ति । कालान्तरे विभिन्नप्रदेशीयजलवायुभेदतस्तत्र गत्वा निवसतां भारतीयानां वर्णा आकृतयश्चाऽपि भिन्नतां प्राप्नुवन् । आचारे विचारे च जलवायुप्रभाव आगतः । गमनागमनयोः सौविध्याभावेन कस्मिंश्चिद्देशे भारतवर्षस्य सम्बन्धो विच्छिन्नोऽभवत् । फलतः पवित्राचार-विचारयोः पोषणमवरुद्धमभूत् । रूपरङ्गयोः, वसनप्रसाधनयोर्विषये एतावत् परिवर्तनमभूत् यद् यत्र प्रवासिनो भारतीयाः भारते यदा आगच्छन्ति तदा ते वैदेशिका एव भिन्नजातीयाः प्रतीयन्ते । भारतीया अग्रजन्मान आसन् । तेषां प्रथमं दायित्वमासीत् यत्ते स्वीयचरित्रेण पृथिव्यां सर्वमानवाञ् शिक्षेरन् । यावत् कालमीदृशमाचरणं प्रचलति स्म, तावत् कालं भारतवर्षं स्वीयविदेशगतभ्रातृभिः सह सम्पृक्तमेव आसीत् ।

एषा स्थितिः कतिपयैर्दृष्टादृष्टकारणैः स्थिरीभवितुं नाऽशक्नोत् । यदा मूलभारतीयविचारधारया सह बाह्यजनानां सधर्मस्त्रुटितोऽभवत्, तदा तत्रत्यप्रवासिनां पतनं प्रारब्धमभूत् । अनुलोमप्रतिलोमरूपेण विवाहप्रथा प्राचलत् । अनेकाः सङ्करजातय उदपद्यत । तासु विभिन्ना आचारविचारा विकसिता अभवन् । तत्र अभारतीयप्रकारकमतानामपि स्थापना प्रारभत । मनुस्मृतेर्दशमाध्याये एवंविधजातीयविकासस्य वर्णनं लभ्यते । तदनुसारं भारताद् बहिर्गतानां क्षत्रियाणामुपनयनादिसंस्कारा विलुप्ता अभवन् । यजनयाजनप्रायश्चित्तादिक्रियाणां सम्पादनार्थं ब्राह्मणास्तत्र नोपलब्धाः । फलतः शनैः शनैः विश्वस्मिन् बहिर्गताः क्षत्रिया अधमा अन्ततश्च शूद्रा अभवन् । पौण्ड्र-चौण्ड्र-द्रविड-काम्बोज-यवन-शक-पारद-पह्लव-चीन-किरात-दरद-खशप्रभृतिजातयः क्रियालोपात् शूद्रतामभजन् । क्रियालोपादेव इमा बाह्यजातयो म्लेच्छभाषया अनार्यभाषया वा युक्ता भूत्वा दस्युपदेन व्यवहार्यतामगच्छन् ।

शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥
पौण्ड्रकाश्चौण्ड्रद्रविडाः काम्बोजा यवनाः शकाः ।
पारदाः पह्लवाश्चीनाः किराता दरदाः खशाः ॥
मुखबाहूरुपज्जानां या लोके जातयो बहिः ।
म्लेच्छवाचश्चार्यवाचः सर्वे ते दस्यवः स्मृताः ॥

( मनु० १०।४३-४५ )

एवंविधो जातिविस्तारोऽद्याऽपि दृश्यते । इदानीं ब्रिटिशसाम्राज्यकाले एव भारतीया अफ्रीका-दक्षिणपूर्वेशिया-दक्षिणअमेरिका-युरोपदेशेषु न्यवसन् । तेषु पूर्वोक्तहेतुभिर्यत् सांस्कृतिकं परिवर्तनमायाति तदनुपातेन सहस्रवर्षेभ्यः पूर्वं प्रवासिभारतीयेषु अभारतीयसंस्कृतेः रूपरङ्गप्रभृतीनां च समावेशोऽवश्यम्भावी अस्ति ।

अस्मिन् विश्लेषणे आर्यानार्यप्रश्न एव नोपतिष्ठति। स्वयं मैक्समूलरमहोदयोऽपि आरम्भकाले आर्यजातिनामकं किमपि वस्तु न मन्यते स्म। विभिन्नभाषासु एवं भूताः शब्दास्तेन दृष्टा ये संस्कृतभाषीया अथवा संस्कृतधातुभिर्निर्मिता अन्वभूयन्त। एतस्मिन् विषये तेन इदमनुमितं यत् काऽपि एतादृशी प्राचीना भाषा अवश्यमासीत् यदीयशब्द-कोशतो विश्वस्य विभिन्नभाषाभिः किञ्चित् किञ्चिद् अवश्यमुद्धृतम्। एतदर्थं तेन तस्या भाषाया आर्यभाषा इति नामकल्पितम्। अस्मिन् विषये जर्मनराष्ट्रस्याऽपि बीजारोपण-मासीत्। तस्या भाषायाः प्रवक्तॄणां जनानामपि नामकरण आर्यजातिशब्देन विहितम्। यस्या जातेः किमपि अस्तित्वमेव नासीत् तस्या उत्पत्तिप्रसारादिविषयकं शोधकार्यं प्रारब्धमभूत्।

वस्तुतो वेदविहितनियमानां पालनम् वैदिकानामाधारः, तेषां नियमानामुल्लंघनम-वैदिकानामाधार आसीत्। समृद्धिकाले आलस्येन ईर्ष्यया, आसक्त्या, प्रमादेन च समाजे नियमानामुल्लङ्घनं प्रारभत। उल्लङ्घनकर्त्तॄणां कृते दण्डविधानं निश्चिताभूत्। दण्डविधाने जातेर्बहिष्कारः समाजाद् बहिष्कारः सर्वतोभावेर्न प्रमुख आसीत्। वैदिका-चरणत्यागस्य तात्पर्यमासीत् 'अपव्रतम्' अथवा 'अव्रतम्'। 'अव्रती' 'अपव्रती' वा दस्यु-दास-प्रभृतिशब्दैर्व्यवहृतोऽभूत्। लुब्धाः पणयः (वणिक्जनाः) अपि समाजात् निष्कासिता अभवन्। ते यत्र विदेशेषु व्यापारार्थं जग्मुः तत्रैव वासस्थानमपि चक्रुः। क्षत्रियाणां ब्राह्मणानामपि चाऽपि धर्मच्युते मूलकं निष्कासनमभूत्। विश्वामित्रेण कर्त्तव्य-हीनपुत्राणां निष्कासनं कृतम्। एवंविधानां बहिर्निष्कासितानाम् समाजः कालान्तरे विकसितोऽभूत्। तैर्विभिन्नमतानां स्थापना कृता। फलतः विभिन्नधर्माणामुत्पत्ति-रभूत्। वैदिकधर्मस्य निन्दा तं प्रति प्रतिक्रिया चैतेषु आसीत्। अत एव विश्वस्य सर्वे धर्मा वैदिकधर्मस्यैव क्रिया-प्रतिक्रियारूपेषु वर्तमानाः सन्ति। तेषु वैदिकदर्शनस्याचारस्य नियमस्य परम्पराया भाषाशब्दादेश्च प्रभावः सुस्पष्टं विद्यते। स्पष्टमस्ति यत् मनोः सन्ततय एव भारतवर्षात् समस्ते जगतितले प्रसृता अभवन्, तथा मनोः सन्ततय एव भारतवर्षस्य, धर्मस्य, मानवतायाश्च मूलपात्रं सन्ति।



अध्यायः ४

# विधिः, समाजः राज्यञ्च

प्रारम्भिके वैदिके काले विधिः ऋतरूममिद्यत। तस्य शक्तिः सर्वोच्चाऽऽसीत्। अस्यैवाश्रयणेन समाजस्य सङ्घटनस्य प्रयासोऽनुष्ठितः। ऋतस्य समाजीकरणे ब्राह्मणग्रन्थान् यावत् तस्य धर्मरूपेण विकासोऽभवत्। मध्ये यावत् समाजस्य विध्यनुसरणेन राज्योत्पत्तिरजायत। विधिः समाजस्यादर्श आसीत्, कल्याणसाधनमपि। ऋतस्य यतिभ्यश्च न शाश्वतेभ्यस्तत्त्वेभ्यः ऋतेऽन्यान्यङ्गानि समाजो नैव विकासमापुः, तानि सामाजिकविधेरूपं जगृहुः। शिष्टैरङ्गानि तु समाजं द्वारीकृत्यैव प्रयुक्तान्यभूवन्। तेषां कार्यान्वितिर्यदा राज्येन जाता, तदा तानि राज्यविधेः रूपं दध्रुः। अस्मिन् विकासावसरेऽपि विधेस्सम्बन्धः समाजकल्याणमेवासीत्।

विविधैः कारणैः समाजघटकेषु तत्त्वेषु परिवर्तनमबोभूयत। अस्य परिवर्तनस्य प्रभावो विधिराज्ययोः प्रसृतवान्। यदि वैदिककालाद् विज्ञानेश्वरजीमूतवाहनपर्यन्तकालस्य विशेषता काचनैका नासीत् तदाऽस्या दीर्घपरम्पराया विधिरपि स एव नावर्तत। समाजकल्याणस्य कृते सोऽपि पर्यवर्तत। तस्य सम्बन्धः समाजेन समयभेदेष्वेवासीत्। अस्य परिवर्तनस्येयं न मूलम्, किन्तु स्वव्यावहारिकत्वाय वाह्यरूपमेव परिवर्तयन्ती बभूव। आवैदिककालं स्मृतिकालं यावत्, भारतीये समाजेऽनेका जातयः समाविविशुः, अनेके सम्प्रदाया अजायन्त। विधौ परिवर्तनमप्यबोभूयत; किन्तु वेदेभ्यः स्मृतिपर्यन्तमित्थं तारतम्यमासीत् यत्तेषु भेदः परिलक्षितो न जातः। राज्यशक्तेर्विकासेन सह विधिः सम्प्रभोरिच्छात्वेन आज्ञात्वेन वाऽभिमतमासीत्। परन्तु भारतीयां न्यायपालिकायां राजशक्तिः स्वयं विधेः सम्प्रभुतया सञ्चालिता बभूव। राज्यं तु सामाजिकीभ्यः शक्तिभ्यः उच्चैर्नासीत्, अपितु ताभिर्नियन्त्रितमेव। समाजस्य कस्यचिदप्यङ्गस्य वर्णरूपस्य व्यावहारिकसङ्ज्ञा रूपादेर्विधौ न तत्संशोधनपरिवर्धनमकुर्वत् केवलं कार्यान्वयनमेव कुर्वदासीत्। तदेवं राज्यं केवलं साधनमेवासीत्। एतस्य स्पष्टतायै विधिराज्यसमाजानां सम्बन्धविकासादेरध्ययनं करणीयं भवति।

## व्याख्या

आधुनिके विधिशास्त्रे कर्त्तव्याधिकारौ शक्तिविशेषावदत्तमवसरमपेक्षमाणौ स्तः। विधयोऽपि पौरुषेया भवन्ति। राज्याद् बहिस्तेषामस्तित्वं नास्ति। ऑस्टिनमहोद-

यस्य सम्प्रभुर्विधौ परिवर्तनसंशोधन एव न करोति, अपि तु तदिच्छैव विधिः[१] । एतदाधारेणैव नेल्सनमहोदयेन कथितम् "भारते विधेरस्तित्वमेव नाविद्यत" इति । नेल्सनमहोदयोपरि उपहसता मेनसेमहोदयेन लिखितम् "नेल्सनमहोदयः प्रथम व्यक्तेरस्ति येन भारतीयायाः परम्पराया विधेश्च शक्तिमनवगत्यैवेत्थंभूत उपहासः कृतः" । वस्तुतो विधेश्शक्तिर्विधिनैव सञ्चाल्यते । सा मध्यस्थताय आवरणे व्यज्यते । यं विधिं द्वारीकृत्य शासकः शास्ति न स एवविधिः शासनपरिणामो भवितुमर्हति[२] । गुरुदासबनर्जीमते आस्टिनमहोदयस्य विधिः "राज्यसम्प्रभोराज्ञा वर्त्तते, हिन्दुविधिस्तु विश्वसम्प्रभोराज्ञा भवति"[३] । रोमसम्राजा इदं वक्तुं शक्यते यद् विधिर्नास्माकं बन्धनाय कल्पते[४] किन्तु "भारतीयस्सम्राट् नैवं वक्तुमर्हति[५] । यस्य गृहेऽग्न्युपद्रवो भवेत् तेन वनाय गंतव्यम्" इत्याज्ञापयतो विम्बसारस्य प्रासादे यदाग्नेर्दाहोऽभवत् स मन्त्रिमण्डलं वनगमनानुमतिदानाय प्रार्थयामास[६] । बृहदारण्यकोपनिषदि विधिं क्षत्रस्य क्षत्रमिति वर्णयित्वा तस्य सर्वोच्चतया सह सम्प्रभोरपि तदाधीन्येन विधिव्याख्याया आधार एव परिवर्तितो[७] यो हि पश्चिमे नास्ति ।

विधेः परिभाषायां तद्विचारकस्य तत् सामाजिक्याः धारणायाश्च भावो व्यनक्ति । केचन तं व्यक्त्या सामाजिकसंघटनव्यापारेण च सम्बद्धायाः सामाजिकसहास्तित्वस्य स्थितेः योगत्वेनापगच्छति । पल्की तु "अनया धारणया सदाचारस्य, राज्यस्य, सम्प्रभोः, अन्येषाञ्च तथा विधिनिषेधानां समन्वयो विधिना समं भवति" इत्याह[८] । राज्येच्छाभिव्यक्तयेऽनेके माध्यमा भवन्ति । केल्सनमहोदयस्य तु विधिर्मानवव्यवहारव्यवस्थात्वेनाभिमतः[९] । संहिता हि नियमस्यैका व्यवस्था पूर्वोक्तप्रकारेण

1. Austin, jurisprudence, ii, p. 535.
2. Watt, Legal philosophy, p. 18.
3. Quoted by D. N. Mitter in the position of Women in Hindu Law, Calcutta unuiversity, 1913, Introduction.
4. Moley's translation of justinian, p. 78.
५. इदं शास्त्रं तु कृत्वासौ मामेव स्वयमादितः ।
विधिवद् ग्राहयामास मरीच्यादींस्त्वहं मुनीन् ॥
(मनु० १.५८)

इह शास्त्रशब्देन स्मार्तोविधिप्रतिषेधसमूह उच्यते, न तु ग्रन्थस्तस्य मनुना कृतत्वात् इति मेधातिथिः ।

6. Budhist Rocord, ix.
७. बृ० उप० १।४।१४; ऐ० ब्रा० १४।४।२।२३; शत० ब्रा० १४।४।२।२३।
8. Pulszkey, theory of law and Civil Society, p. 312.
9. Kelson, General theory of Law and State, p. 1.

विधिर्नियमो नास्ति। स तु नियमस्य तादृक् सङ्ग्रहोऽस्ति यो हि व्यवस्थया विशिष्टां सम्बद्धतां गृह्णाति। काण्टमहोदयस्य प्रत्ययवादिपरम्परायां तु विधिः स्थितीनां योगो यस्मिन् व्यक्तेर्मध्यस्था इच्छा अन्येषां स्वतन्त्रतापरेण सामान्येन विधिना समं समन्वितश्चेत्। एर्लिचमतानुसारेण वैधानिकविकासविधाने, विधिशास्त्रे, नैयायिको वा निर्णये न सन्निहितो भवति, किन्तु तस्य केन्द्रविन्दुस्समाज एव भवति[१]। एर्लिचमहोदयस्य परिभाषोपरि टिप्पणीं कुर्वता फ्रेडमेनमहोदयेन लिखितम्, "एर्लिच इत्यस्य परिभाषाया सामाजिकविध्युद्देश्यौ सन्तुलनाय प्रयान्तौ यतश्च विधेः पृष्ठे राज्यशक्त्यपेक्षया सामाजिकोद्देश्यः समधिकां क्रियाशीलतामावहति। विदुषा लेखकेन पुरस्ताच्च लिखितं यद् "विधिर्वैधानिकसंहितातो नूनमधिकं बिभर्ति। विकसितायां सामाजिक्यां व्यवस्थायामपि बहुशो विधेर्लक्ष्या आलेखे नाभिव्यज्यन्ते। विधेस्तत्त्वं सामाजिकतत्त्वेषु स्थैर्यमाप्नोति। विधेरुद्देश्याः सामाजिकेभ्यस्तथ्येभ्यः प्राप्यन्ते[२]। डॉ० रुडाल्फशबसिंगरस्तु विधिर्व्यवहारस्य सामान्यनियमानां योगः, यः राज्येन शक्तिमान् भवति इति विधिव्याख्यां मनुते[३]।

वेदेषु विधेः कृते ऋतशब्द उपलभ्यते। तस्य सम्बन्धः सत्येन साकमस्ति। तस्योत्पत्तिस्तु तपसो भवति[४]। ऋतसत्याभ्यां सह रात्रिसमुद्रसंवत्सरसूर्यचन्द्राणां कः सम्बन्धः, कथञ्च ते ताभ्यामुत्पद्यन्ते इत्यादिप्रश्नाः विधिशास्त्रापेक्षया दर्शनविज्ञानाभ्यां सार्थमाधिक्येन सम्बद्धाः सन्ति। अघमर्षणे प्रस्तुतेन ऋतस्वरूपेण ज्ञातं भवति यत्तस्यास्तित्वं सृष्टेः पूर्वमपि विद्यते। उषामित्रवरुणाः सर्वे ऋतस्य मर्यादायां बद्धाः[५]। ऋतस्य तत्पालितयोः मित्रावरुणयोरपि उद्देश्यं मानवकल्याणमस्ति[६]। ऋतं प्रकृतिनियमेषु जगत्सम्बन्धेषु मानवीयवातावरणेषु च स्वसद्भावेन स्वक्षेत्रमेव ततान। तद् वाह्याद् आन्तरत्वमथ शारीरिकाद् दैविकत्वं जगाम। तन्नैसर्गिकोणां दैविकीनाञ्च शक्तीनां नियन्त्रणस्य प्रतीकान्नैतिकादीनामपि निर्देशको बभूव[७]। स विश्वस्य सर्वेष्वङ्गेषु प्रकृतेर्घटनास्वन्तवर्ती भूत्वा यज्ञीयनियमानां मानवीयनियमानामपि विधाय-

1. Prof. E. Ehrlich, Fundamental Principles of the Sociology of Law.
2. Dr. W. Friedmann, Legal Theory, p. 178.
3. Dr. Rudalf Sehbsinger, Social Legal Theory, p. 2.
४. ऋ० १०।१९०।१; १०।१९०।२; १०।१९०।३।
५. ऋ० १।२।
६. ऋ० १।९०।
7. Radhakrishnan, Indian Philosophy, Vol. i, p. 79.
May Muller, Hibbert lectures, 1878, pp-244-45.

कोऽभवत्[१]। ब्राह्मणग्रन्थेषु ऋतस्य स्थानं धर्मशब्दो जग्राह, यस्य धर्मस्य संरक्षको राजा बभूव[२]।

वेदेषु विधिन्याययोः प्रशासयिता मित्रावरुणो मतः[३]। स विधौ स्वसहयोगमपि प्रदत्ते। विधेः प्रकाशने शक्तेर्भानं भवति। अमुमेव द्वारीकृत्य कृषेः, व्यापारस्य तथा च समग्रस्यापि मानवकल्याणस्य विकासः सम्पद्यते। दीर्घतमा विधिं दैवशक्तेरप्युच्चं मन्यते[४]। तदनुसारेण दैव्यो हि शक्तयः मानवकल्याणाय सन्ति[५]। समाजो मानवीय-विधिव्यवस्थायाः संघटनं नैव करोति। सामाजिकेषु संघटनेषु तादात्म्यं मानवविधि-माश्रित्य न प्रवर्तते। सामाजिकसंघटनेषु तारतम्यं विधेर्लक्ष्यात्मिकायां व्याख्यायाम्, नैतिकतायाम्, सामाजिकेषु घटकेषु च विकसन्त्याः समवायाः समन्वयेन संभवति। सामान्यतया विधेर्लक्ष्यः कर्त्तव्यस्य नैतिकतार्किकविचाराभ्यां सह विविधासु च परिस्थितिषु क्रियाशीलायाः नैतिकतायाः सामञ्जस्यं स्थापयति। सामाजिकचैतन्य-साधनानि वैधानिकनियमाः सन्ति ये शक्तिमत्याः ध्वंसात्मिकायाः शक्तेरसकाशान्मानवहि-तस्य विकासस्य हेतून् प्रस्तुवन्ति।

मानवसङ्घटना येन केनचिद्रूपेण मानवीयायाः शक्तेः सन्तुलनं स्वीकुर्व-न्ति। तेषां सञ्चालनं शक्त्या भवति। किन्तु सा शक्तिः सर्वप्रकारस्य अन्येषां वा केषाञ्चित् प्रतिबन्धानामभिव्यक्तीकरणं नास्ति किमुत सा समाजस्य घटकानां क्षमतैव। इमां क्षमतां मानवीयस्वभावोऽपि प्रभावितां कुरुते। अस्या द्वे विशेषते भवतः—(१) आत्मशरीरयोः क्षमतायाः प्रतिभायाश्च सामञ्जस्यम्, (२) अधोगामिन्यः प्रवृत्तयश्चेति। द्वितीयया विशेषतायाः प्रभावो नैतिकबौद्धिकक्षमते प्रभाविते भवेतामिति प्रयासरूपः। व्यक्तिः समुदायो वा यदि द्वितीयस्य नियन्त्रणं कुरुते चेत् तदैव प्रथमानां विशेषतानां विकासो भवति किञ्च व्यक्तिः स्वसमुदाये स्व स्व लक्ष्यं प्राप्तुमर्हति। वैदिकाः ऋषयः सामाजिक्यः प्रवृत्तीः समाजविरोधिन्यः शक्तीर्विरोधसफलीकर्त्तुं सर्वसम्मतान् सामाजिकान् प्रयासान् आद्रियन्ते।

ऋतं सत्यधर्मयोः रूपधारणप्रयत्ने कर्त्तव्यापरपर्यायं जातम्। तन्नूनं सत्यं कल्याणं धर्मश्चास्ति किन्तु सर्वोच्चाभिशशक्तिभिर्निर्मितं नास्ति। तदेव खलु सर्वोच्चा शक्तिः

---

1. Religion and Philosoply of Veda, p. 249.

२. शत० ब्रा० ५।३ ३।९; ५।४।४।५।

३. ऋ० १।१५१।३,४,६,८; १।१५२।१,३।

४. १।१६४।१,३०,३१; १।२४।१९।

५. १।१६४।४१,४२।

स्वयम्[१] । एतेनैव द्यौर्दिवौ नियन्त्रिते भवतः[२] । एवं विधिस्तादृशां नियमानां सङ्ग्रहो ये सृष्टिनिर्माणादेव विश्वं सञ्चालयन्तः सन्तः । इत उर्ध्वं न काऽपि व्यक्तिः भवितुमर्हति । नङ्क्ष्यति एवान्यथाभूतं यत्किञ्चिद् वस्तुजातम् । एवं विधिर्दैवरूपं धृत्वा स्वयं सर्वोच्च-रूपेणाविर्भवति । ईश्वरस्य सृष्टेर्निर्देशनं विध्यनुसारेणैव भवति । सामाजिककर्त्तव्यस्य वैयक्तिकव्यवहाराणां च निर्देशनियन्त्रणे सर्वोच्चशक्तिरूपस्य विधेराधार एव भवति । दण्डदाने न तस्येच्छा किन्तु विधिरेवाधारो वर्तते ।

ऋतस्य व्याख्यायां सत्यस्यैव केवलस्य समन्वयो नास्ति, अपि तु दृढताया अपि सम्बन्धस्तेन विद्यते । विधिर्हि अपरिवर्तनीयो दृढश्चापि भवति । वामदेवकृत-ऋतव्याख्यायां विभिन्नाः पक्षाः समक्षं निक्षिप्ताः । ऋतस्य वाणी वधिरेणाऽपि श्रोतुं शक्या[३] । वैदिकाः ऋषयो विधेः परिवर्तनीयायाः शक्तेः स्वीकारं नैव कुर्वन्ति । वस्तुत ईदृशी सामाजिकस्तरे यदा सामाजिक्याः शक्ते विकासो न जातश्चेत् तासां समस्यानां गुरुत्वं नाऽनुभूतश्चेत्, नैतिकता धर्म एव यदा विधेराधारौ चेत्, तदा परिवर्तनचर्चा खपुष्पायते एव । तदानीं तु वर्तमानस्य सुरक्षाया एव प्रश्नस्सन्तिष्ठते । सुरक्षायां यथास्थितिर्निहिता भवति, न च परिवर्तनं स्वीकरणीयं भवति । किञ्च तदानीं विधिनैतिकता धर्माणां खलु अन्योन्यैस्तादात्म्यं भवति । समाजस्यैतेष्वङ्गेषु यथाशीघ्रं परिवर्तनमपि न भवति ।

## आधारः

विधेः परिभाषाभिर्द्वावाधारौ परिस्फुरतः—दैवप्रकाशनम्, कल्याणमूलिका समृद्धिश्च । मानवीयं व्यवहारं नियन्त्रयितुर्विधेः प्रामाण्यं संशयात्मकेन तर्केण नैव भाव्यते । एतेषां साध्यसाधनयोः साध्यस्य सम्बन्धोऽपि भौतिकज्ञानेऽपूर्णस्तिष्ठति । दैविक-प्रकाशनावृत इत्थंभूतो विधिः राज्यादपि परो भवति तथापि मूलं तु तस्य समाज एव भवति । अत एव कारणाद् राज्याभावेऽपि विधिं द्वारीकृत्य समाजस्य सञ्चालनं भवति; अथ च निर्बलसबलयोः सुरक्षायाः स्थितिः संवर्तते[४] । भारतीयो विधिर्न दैविमीच्छां किन्तु दैविकं विवेकं समाश्रयति । देवता द्वारीकृत्य व्यज्यमानो विधिर्न तासामिच्छा भवति । विधेर्दैविकाधारावगमेन तं मानवीयदुर्गुणमहत्त्वाकाङ्क्षास्वार्थादीनां प्रभावो न

---

१. यतश्चोदेति सूर्योऽस्तं यत्र च गच्छतीति प्राणाद् वा एष उदेति प्राणेऽस्तमेति तं दिवाश्चक्रिरे धर्मं स एव अद्य स उ श्व इति—( बृ० उ० १।५।२३ )

२. ऋ० १।१५।२।

३. ऋ० ४।२३।८९।

४. अथोऽबलीयान् बलीयासमाशंसन्ते धर्मेण यथा राज्ञैव ।

( बृ० उ० १।४।१४ )

स्पृशति अत एव स समाजराज्याभ्यामुभाभ्यामुच्चैर्भवितुमर्हति स्म । मानवकल्याणेन साकं तस्य सम्बन्धः सद्भावात् समाजेन सह तस्य सहास्तित्वमस्मिन् रूपे जातं यत् सः समाजादपि पूर्वमसिध्यत् ।

विधेराधारो न समानता किन्तूपयोगिता कल्याणञ्च भवतः । कल्याणोपयोगितयोर्मिथो वैलक्षण्यं भवति । कल्याणस्य महत्त्वमुपयोगितायाः अधिकं भवति । कल्याणस्य व्याख्या सारल्येन कर्त्तुं शक्या किन्तु उपयोगितायाः अंशाधारौ स्पष्टौ न स्तः । कल्याणस्य सम्बन्धोऽध्यात्मेन समं यावान् भवति उपयोगिता न तावद्दूरं गन्तुं प्रभवति । मनुष्यस्य सुखम्, सांसारिकी सुविधा चोपयोगितायाः विवेक्तुं शक्येते । उभे स्वतःसिद्धे उपयोगितायाः परे भवितुमर्हतः । कल्याणस्य रूपं व्यापकं भवति । धर्मसूत्राणां कल्याणं धर्मस्य रूपं दधाति । तस्मिन् प्रेयः श्रेयसः पूरकं जातम्[१] । भारतीयविधेराधारो मूलतः कल्याणमेवाऽस्ति । तस्मादुपयोगिता न दूरीकृता । अतश्च तस्मिन् लौकिकपारलौकिकयोरुभयोरप्यंशयोस्समावेशो भवति[२] ।

विधेः साक्षात्कारः शक्तेर्माध्यमेन भवति । पास्कलमहोदयेन लिखितम्—"न्यायो विवादास्पदो विषयः शक्तिस्तु निर्विवादा । अत एव वयं न्यायेन समं शक्तेः स्थापनं न चिकीर्षामो यतः शक्तिर्न्यायमस्वीकरिष्यति, अन्ते चोद्घोषयति यत् सैव साक्षात् न्याय-"रूपाऽस्ति । अत्रतो न्यायशक्तेः स्थाने शक्तिन्यायस्य स्थापनं भविष्यति ।" नैसर्गिकोऽपि विधिरपि इदमेव तथ्यं स्वीकरोति । प्रोफेसर कॉनमतानुसारेण द्वादशशताब्द्यां विधिदार्शनिकाः पूजायाः पुरतो मस्तकं नमयाञ्चक्रुः । धार्मिके न्याये तर्कजिज्ञासयोस्स्थाने श्रद्धैव मुख्या मतासीत् अत एव तार्किकोऽयं नास्तिकोऽयमित्यादिविशेषणानां प्रादुर्भावोऽभवत् । फलतोऽनुत्तरदायिनी शक्तिः संरक्षकस्थानं जग्राह ।" नीत्शे इत्यादयो दार्शनिकाः मनुं शक्तेर्दार्शनिकं कथयामासुः, किन्तु यावद्धि शक्त्या सह विधेः सम्बन्धो विद्यते, सा शक्तिरेव स्वयं विधिनोत्पाद्यते । तस्याः प्रयोगो विधेर्नियन्त्रणे भवति । सा आधारभावं भजन्ती विधेरभिव्यक्तिसाधनं भवितुं शक्नोति[३] । विधेस्सम्बन्धः प्रकृत्या, मानवकल्याणेन, उपयोगितया च सममस्ति[४] । वैदिकविधिरिदं सामाजिकं तथ्यं स्वीकरोति ।

---

१. वर्णा आश्रमाश्च स्व स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुः श्रुतवृत्तवित्तसुखमेधसोजन्म प्रतिपद्यन्ते । विष्वञ्चो प्रेत्य वा विहितो धर्मः ( गौ० ध० ११।२९, ३० ) ।

२. लोके प्रेत्य वा विहितो धर्मः ( वसिष्ठ० १।१-२ ) ।
यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः (कणाद० १।२) ।

३. डॉ० हरिहरनाथ त्रिपाठी, प्राचीन भारत में अपराध और दण्ड, अत्र दण्डविषये अध्यायो द्रष्टव्यः ।

4. Miraglia, Camparative legal Philosophy, pp. 93-96.

ऋतं हि सा परिशुद्धा शक्तिः यस्यां सामाजिकाः प्राकृताः शक्तयो नियमबद्धाः सन्ति[१]।

वस्तुतो विधिर्नैसर्गिकसिद्धान्तोऽस्ति यस्मिन् भौतिकी सन्तुष्टिरन्तर्निहिताऽस्ति। ग्रीकदेशीयाः साधवः, रोमदेशीया विधिशास्त्रिणस्तथा मध्ययुगीया नैसर्गिकविधिचिन्तका विधिं तर्काश्रितं मेनिरे, यस्तर्को बौद्धिक्या प्रवृत्त्या उपलब्धुं शक्यः। आधुनिका विधिशास्त्रिणोऽपि तर्कमेव विध्याधारेणाभ्युपगच्छन्ति। किन्तु विधेर्भौतिकी सन्तुष्टिः प्राणिमात्रस्योपयोगिता अपेक्षा च वर्तते। ऋतस्य व्याख्यायां प्राचीनैर्विचारकैस्तस्मिन् काले नैतिकतायाः संभाविताः सर्वा एव स्थितयः स्वीकृताः। तस्यां भौतिक्याः सन्तुष्टेरपि पक्षोऽन्तस्सन्निविष्टोऽस्ति। भौतिक्याः सन्तुष्टेः पक्षे तस्य सम्बन्धो मानवीयोद्देश्यकल्याणाभ्यां सार्धं भवति। ऋताय नद्यः, वायुः, सूर्यः, देवमण्डलम्, पशवस्तथा समग्रं ब्रह्माण्डं मानवीयकल्याणस्य सन्तुष्टेरुद्देश्यस्य च सफलतायां योगं ददति।

कल्याणोद्देश्याभ्यां सहविधिस्तर्कस्याधारे प्रतिष्ठापितोऽस्ति। ऋषयस्तथ्यग्रहणेऽन्धश्रद्धायाः स्थाने तर्कमुपयुञ्जन्ति। तमेव प्रमाणत्वेनावबुध्यन्ते[२]। सेयं परम्परा मनुपर्यन्तं विकसन्ती आसीत्[३]। इह मूलभूते आधारे लक्ष्यपात आवश्यकोऽस्ति। विधिस्थानीयानां देवतानामुत आर्थिकवर्गस्येच्छात्वेन मन्यमानेभ्यो वैदिकदृष्टिकोणस्य महान् एवान्तरो भवति। आद्ययोर्द्वयोः पक्षयोर्विधिः प्रायोगिक्याः शक्तेः प्रकाशनमस्ति। वैदिक्यां विचारधारायां प्रायोगिक्याः स्थाने विधिर्दैविकविवेकत्वेनार्थमतोऽस्ति।

---

१. ऋतस्य हि वर्तनयः सुजातमिषो वाजाय प्रदिवः सचन्ते।
(ऋ० १०।५।४)

२. विदन्ती यत्र नरो धियन्धा हृदा यत्तष्टान्मन्त्राँ अशंसन्।
(ऋ० १।६७।३-४)

३. विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत॥
(मनु० २।१)

हारीतः—"अथातो धर्मं व्याख्यास्यामः। श्रुतिप्रमाणको धर्मः।"
भविष्यपुराणे—

धर्मः श्रेयः समुद्दिष्टं श्रेयोऽभ्युदयलक्षणम्।
स तु पञ्चविधः प्रोक्तो वेदमूलः सनातनः॥

गोविन्दराजस्तु हृदयेनाऽभ्यनुज्ञात इत्यन्तःकरणविचिकित्सां शून्य इति व्याख्यातवान्। तन्मते वेदविद्भिरनुष्ठितः संशयरहितश्च धर्म इति धर्मलक्षणं स्यात्। एवं च दृष्टार्थग्रामगमनादिसाधारणं धर्मलक्षणं विचक्षणा न श्रद्दधते। मेधातिथिस्तु हृदयेनाऽभ्यनुज्ञात इति यत्र चित्तं प्रवर्तयतीति व्याख्याय, अथवा हृदयं वेदः स ह्यधीतो भावनारूपेण हृदयस्थितो हृदयमित्युचत इत्युक्तवान्। कुल्लूकभट्टः—श्रेयः साधनमित्याह तत्र ह्याभिमुखं मनः।

## विकासस्तस्य प्रकृतिश्च

कस्मिंश्चित्समाजे समग्ररूपेण परिवर्तनं न भवति, भवति तु आवरणे । आधारस्तु प्रायः स्थिरो भवति । विधावपि परिवर्तनं जलवायूभ्याम्, स्थानीयविशेषताभिः, आकस्मिकीभिः परिस्थितिभिरित्येतावन्मात्रेणैव न भवति । भारतीयविधेर्विकासं समाजः, व्यक्तिजीवनोद्देश्यम्, धार्मिकसामाजिकमान्यते, आर्थिकी परिस्थितिश्चेत्यादय ईदृशः पदार्था मूलभूताः सन्ति यत्ते तस्मै एकं विशिष्टं रूपं प्रयच्छन्ति । आभिरेव विशेषताभिर्भारतीयस्य विधेर्विकासे 'विकासप्रतिक्रिये' इत्युभयोर्दर्शनं भवति । एतस्य कृते वातावरणम्, विशेषता अथ च स्थितेः सन्दर्भ इति सर्व एवैते ध्यातव्या भवन्ति । न च भारतीयविधिः केवलं विध्यालेखमवैति, स हि सामाजिकव्यवस्थात्वेनाप्यवगन्तव्यः । आधुनिकाः विधिशास्त्रिणस्तु परं भारतीयविधिमालेखमात्रं मन्यन्ते । भारतीयविधेर्विकासार्थं सामाजिक्यः संस्थाः, विवाहः, उत्तराधिकारः, कुटुम्ब इत्येवमादयस्तदीयवातावरणस्थितिविशेषताभिः सह स्थापयितव्या भवन्ति । एतेषु घटकेषु परिवर्तितेषु सत्सु विधौ तत् संस्था न्यायालयादिषु चापि परिवर्तनं जातम् । रक्तं राजनीतिक्यः स्थितिश्चेत्येतयोरपेक्षया एतेषां घटकानां महत्त्वं विशिष्टमेव भवति ।

विधेरस्तित्वं न वैज्ञानिके प्रारूपे किमुत वैधानिकीषु संस्थासु विद्यते[1] । वैदिकसमाजेन, तत्कालीनराजनीतिसङ्घटनेन, विवाहेन, उत्तराधिकारेण, सम्पत्या च सह सम्बन्धस्य मूलेऽपि प्रकाशः प्रसरति । समाजो व्यक्तिश्चेत्युभौ विधेर्नियन्त्रणं स्वीकुरुतः । व्यक्तिः स्वस्मादधिकशक्तिशालिनामीश्वरसमाजराज्यसङ्घटनादीनां विधौ भृशं विश्वसिति । समाजस्तु व्यक्त्यर्थमस्ति, व्यक्तिस्तु समाजे निवसति । फलतः समाजो विधिं विना न स्थातुं शक्नोति । एतासु स्थितिषु सतीषु विधावपि विकासोऽवश्यम्भावी भवति । भारतीयविधेर्मूलं वेदेभ्य एवारभ्यते । वैदिकसमाजो यावत्सु खल्वंशेषु आमनुस्मृतिकालं विकसन् अवर्तत, तदनुपातेनैव विधेरपि विकासः समजनि । समाजः, व्यक्तिः, राज्यञ्चैतेषां परस्परसम्बन्धस्तेषाञ्च घटकैस्सह विधिरपि विकासं प्राप[2] ।

प्रकृतानां समस्यानां सम्बद्धप्रश्नानाञ्च समाधानस्थाने सृष्टये आदर्शात्मकबौद्धिकयोः रूपयोर्दानं सामाजिक्या अक्षमताया एव परिचायकः । वैदिकविधेः स्मृतिकालं यावज्जाते विकासे दृष्टिक्षेपेणेदं स्पष्टायते यद् विधिः स्वकीयानां सामाजिकीनां समस्यानां समाधाने क्रियाशीलो ववृते । स्मृतिकालोत्तरवर्त्तिनो निबन्धग्रन्थादयो नूनमस्मिन् विषयेऽसाफल्यं प्रापुः । फलतो विधेर्विकासधाराऽप्यवरुद्धा । अन्यथा वेदेभ्यः स्मृतिपर्यन्तं जातानि

---

1. Ehrlich, op. cit. cn. x.
2. Weber, Histoy of Indian Literature, p. 20.

सङ्कलनानि स्वसमाजसमस्यासमाधानप्रयोजनपराणि बभूवुः। आवेदम् आच धर्मसूत्रं सदाचारस्य परम्पराया.. अवैदिकसमाजसम्बन्धस्य, सामाजिकविकासपरिवर्तनयोश्च प्रभावः संहितारण्यकब्राह्मणधर्मसूत्रेषु स्पष्टं व्यज्यते। स्मृतिषूक्तप्रभावातिरिक्तस्य क्षेत्रीयस्य विधेरपि प्रभाव एतस्मिन् रूपे स्वीकृतः, यदेक एव व्यवहारः, एकत्र विधिरितरत्र तु निषेधोऽपि भवति। सुस्पष्टमिदं यदेतादृशी विकासे समाजस्य समस्यानां शक्तिः क्रियाशीला आसीदिति।

विधेः सम्पर्को नियमनिर्देशापेक्षया मानवीयव्यवहारेण समं समाधिको भवति। सामवेदस्यापि ऋचः शाश्वतविधिं तत्परम्परां च व्यञ्जयन्ति। आधुनिकविधिशास्त्रिणोऽपि सदाचारं वैधानिकतथ्यस्थाने घोषणात्मकमेव मन्यन्ते। अस्मात् पूर्वस्यां स्थितौ विधेः सम्प्रभुताया अस्तित्वमुपलभ्यते। विधिसम्प्रभुता यं कञ्चिदीश्वरम्, प्रकृतिम् समाजं द्वारीकृत्य समागच्छतु नाम, इयांस्तु व्यज्यत एव यद्विधिर्न निर्मीयते किन्तु सामाजिकीं चेतनां द्वारीकृत्याभिव्यक्तिमात्रं तस्य भवति। तदेवं सदाचारो न विधेः कारणं किन्तु अस्तित्वमस्तीति वक्तुं शक्यते। आधुनिकः फ्रान्सदेशीयविधिसिद्धान्तो "जडचेतनायाः" स्थाने सामाजिक्या दृढतायाः प्रतिपादनं करोति। स किमपि वैधानिकं तथ्यं न विधेर्निर्माणमपि तु सामाजिक्या दृढतया प्रसूतं विधिसम्प्रभुताया उद्घोषणं मनुते। दैविकप्रकाशननाम्ना सामाजिक्या दृढताया विधिसम्प्रभुतैव स्मृत्यादिषूपलभ्यते या आचारादेः सामाजिकं प्रभावमभ्युपैति। विधेरपौरुषेयतायाः 'सनातन'सिद्धान्तो यथा च मीमांसकैरुपपादितस्तस्मिन्तु सामाजिकतायाः लोपः समजनि। वस्तुतो विधिशास्त्रदृष्ट्या "अपौरुषेय" इत्यस्य "निर्वैयक्तिकः" ( impersonal ) इत्यर्थो भवति।

युरोपे षोडशे शतके प्रतिक्रियावशाद् विधिशास्त्रे विभिन्नानां सम्प्रदायानां स्थापनाऽभवत्। तेषां सिद्धान्तप्रकारादयो विभिन्ना आसन्। वैदिकादिभिः प्रस्तुतस्य विधेः प्रयोगस्य प्रकारेण यदि कश्चन तात्पर्यश्चेत् तदा प्राचीनकालेऽनेकेषां सम्प्रदायानामस्तित्वं दृष्टिगोचरं भवति। किन्तु तेषां स्वरूपं मिताक्षरादायभागवन्नैव भवति। यत्किमपि वैलक्षण्यं तेष्वासीत् न तत् प्रतिक्रियावशादपि तु अन्येभ्य एव कारणेभ्यो जातम्। प्रारम्भिके समाजे उद्देश्याधारयोर्मिथः समानता सम्भवति यत आवश्यकता अपि समाना एव वर्तन्ते। सामाजिकाः प्रगत्या सह रुचिस्वभावाकाङ्क्षासु परिवर्तनं तनुते। तदैकरूपतायै प्राचीनभारतीये समाजे धर्मो विधिना सम्बद्धः कृतः। तदेवमुत्तरकाले विधिरूपेण स्वकीयमैतिहासिकमस्तित्वं वेदापेक्षया समधिकं व्यक्तीक्रियते।

समाजः पूर्णरूपे न कदाप्युपलभ्यते। तत्र परिवर्तनविकासयोः स्थितिर्निरन्तरा भवति। परिवर्तनसाधनान्यपि समाजस्य प्रत्येकेन सदस्येन सञ्चालितानि भवन्ति। तन्निर्देशनदायित्वं बुद्धिशक्तिं यद् वा अर्थशक्तिं द्वारीकृत्य कतीनाञ्चित् पुरुषाणां हस्तेषु निपतति। इहैव कतिपयव्यक्तिसञ्चालितसमाजस्याधारशिलायाः समारोपणं भवति।

विजयिन्यो जातयः पराभूतस्य समाजस्याधिकारानपहरन्ति । विजितजेतृसमाजस्यैकीभावेऽपि कतिचन प्रभेदास्तथैव सन्तिष्ठन्ते कालान्तरे च तद्वैषम्यस्य मूलमपि स्मृतिपथे नैवारोहति । ब्राह्मणाः स्वचरित्रेण समाजे विशिष्टं स्थानं भावयामासुः । तस्य प्रभावः श्रुतिषु परिलक्ष्यते । ब्राह्मणग्रन्थानन्तरनुपनिषदां कालस्समागच्छति । सूत्राणि तु वैदिककालस्यान्तिमं चरणं भवन्ति । एतस्मिन् काले यज्ञीयविधयः सामाजिकाचाराश्च व्यवस्थितं रूपं जगृहुः । श्रौतसूत्राणां श्रुतिप्रतिपादकत्वमासीत् । गृह्यसूत्रेषु तु पारिवारिकसामाजिकविधीनां चित्रणं जातम् । स्मार्तसूत्राणि दृष्टस्य ( सामाजिकस्य लौकिकस्य वा पदार्थस्य ) प्रतिपादिकानि भवन्ति, श्रौतसूत्राणामिव श्रुतिप्रतिपादकत्वञ्च न प्रापुः । तथापि सामाजिकस्याध्ययनस्य हेतोः स्मार्तसूत्राण्यनेकान्यधिकान्युपयोगीनि सन्ति ।

बौद्धसंस्कृतेरुदयात् परम्पराया नूतनं रूपं प्रादुरभवत् । समाजस्य यत्किमपि तत्त्वमासीत् तस्य सुरक्षायाः कृते नूतनादाक्रमणात् त्राणाय च नियमाः प्रत्यक्षा अबोभूयन्त । प्राचीनपरम्परया नूतनेन विद्रोहेण समुत्पन्नायाः स्थितेः स्वरक्षादिस्थितेश्च दुर्गं मनुस्मृतिरूपेण दृढायितमभूत् । अस्यां स्मृतौ श्रुतिप्रतिपादिता अपि बौद्धनीत्या समालोच्या आचारा अस्वीकृताः । यथा पशुबलिनियोगादयः । या जातयो बौद्धसंस्कृतिं प्रति चक्रयुस्ताभ्योऽसामाजिकरूपप्रदानेन तासां कृते सामाजिकविधेः बहिर्भावनप्रयासोऽभवद् येन ता राज्यविधौ स्थानं न प्रापुः ।

विभिन्नेषु युगेषु दार्शनिकानामिदं कर्त्तव्यपतितमासीत् यत्ते स्थायित्वपरिवर्तनावश्यकतापेक्षासु पारस्परिकं सन्तुलनं निर्वाहयन्तस्तिष्ठेयुः[१] । भारतीयो विधिरित्थंभूतं सन्तुलनं स्वदार्शनिकपृष्ठभूमौ कर्त्तुमर्हति । यस्या बीजारोपणं वेदेभ्य एव जातम् । स तां दार्शनिकीं पृष्ठभूमिं भवति तदीयावरणञ्च विकासपरिवर्तने प्रवर्त्तमाने स्तः । विधौ परिवर्तनेन सममार्थिकीनां शक्तीनाम्, कौटुम्बिकसम्बन्धानाञ्च सम्पर्कः संतस्थौ । विधेर्व्यावहारिकपरिवर्तनकारणं राज्यमेव भवति किन्तु राज्याद् राजनीतिकसङ्घटनेभ्यश्च पूर्वमपि विधेरस्तित्वमासीत् । राजनीतिकसङ्घटनेषु सत्स्वपि शक्तेः परं राज्यविधेः क्षेत्रं क्रियाशीलं विद्यते यथा हि सदाचारिको विधिः (customory law) तदुपरि च राज्यस्य प्रभावो नैव निपतति । इयांस्तु परं भवति यत् सदाचारिकविधयोऽपि अन्ततः राज्यक्षेत्रे समागच्छन्ति । सत्यामेवं स्थितावन्योऽप्येको विचारणीयः प्रश्न उत्तिष्ठति यत् समाजेन यदा सदाचारानुसारेण विधयः स्थाप्यन्ते राज्यं तदाचारविषयेऽपि प्रशासनं परित्यज्य कुतो विधिं निर्मिमीते ? प्रश्नस्यास्योत्तररूपेण समाजराज्यसम्बन्धोद्देश्ययोः प्रकाशः निपतति । प्राचीने काले भारते राज्यायेतादृशोऽधिकारा नोपलब्धा आसन् । अशोकेन त्ववश्यं तथा प्रयतितम् ।

---

1. Ruscoe Pound, Interpretation of legal History, p. 1.

'रोमन लॉ' इत्येतस्य स्रोतस्तु सन्धिः संवादो वाऽस्ति, भारतीयविधेः स्रोतस्तु श्रुतिरस्ति या सामाजिकीभ्यः शक्तिभ्यः स्वक्षेत्रं पृथक्करोति। धर्मज्ञसमयस्य प्रमाणेन नामनि आगते वेदानां नामानि अन्ते स्थाप्यन्ते।[१] श्रुतिव्यतिरिक्ताः स्मृतिसदाचारादयो विधेः स्रोतांसि प्रत्यक्षतः सामाजिकं महत्त्वं स्वीकृत्य प्रवहन्ति। श्रुतयो मन्त्रदर्शनं सामाजिकं प्रदेयं भवन्ति किन्तु तावन्मात्रेण समाजस्य कार्यं न प्रचलति स्म। सामाजिक-सम्बन्धादिषु परिवर्तने जाते तेषां विधीनां क्षेत्रे विस्तारो जातः। श्रुतौ यस्याः पूर्णतायाः समग्रतायाश्च दर्शनं जातमासीत् तस्याः सुरक्षार्थमेव प्रयासोऽनुष्ठितः। तस्या देशकालपरिस्थित्यनुसारेण व्याख्या जाता। अन्तं यावत् प्रयासः कृतो यत् सदाचारोऽपि श्रुत्यावृत एव तिष्ठेत्। किन्तु व्यवहारेऽयं सिद्धान्तः स्थैर्यं न प्राप। सामाजिकेषु सम्बन्धेषु एतादृशी तत्त्वानां समावेशः प्रारभत यानि तत्त्वानि श्रुतिबहिर्भूतान्यासन्। अन्ततः सामाजिकविधीनां क्षेत्रं विकसितमभवत्। फलतः श्रुतेर्धर्ममोक्षावेव मान्यौ जातौ। अर्थकामयोः सामाजिक्यः शक्तयः स्वीकृताः। धर्मस्यार्थो यज्ञीया विधयः संस्कारा इत्येवमादिषु सङ्कुचितोऽभवत्। युगादिभेदेन धर्मभेद इति मन्वाना अपि मीमांसका विधिं वेदाधिष्ठितं कर्त्तुं प्राणपणेन प्रयतन्ते। तैरिदं न ध्यायते यद् युगधर्मस्य यां व्याख्यां तेऽङ्गीकुर्वन्ति तस्याः मूलं वेदे नास्ति, अथ च ये वैदिकविधिषु क्रान्तिकारिपरिवर्तन-मनुतिष्ठन्ति। एतादृशां परिवर्तनानां कृते सामाजिक्यः शक्तयो बलवन्त्यो जाताः, अथ तासामस्वीकारोऽपि शक्यो नासीत्। श्रुतेरारभ्य कलिवर्ज्यसङ्ग्रहपर्यन्तस्येतिहास एक एव न मन्तव्यः केनाऽपि। समाजोद्देश्येषु परिवर्तनमवश्यम्भावी भवति।[२]

## स्वभावः

वेबरमतानुसारेण यदा वयं विधिना, तन्नियमेन, तच्छासनेन च समं सम्बन्धं स्थापयामस्तदा न्यायविदः समाजशास्त्रस्य च दृष्टिकोणे वैलक्षण्यं ज्ञातव्यं भवति। न्यायशास्त्रेण ( jurisprudene ) आदर्शभूतलक्ष्यस्यापेक्षा क्रियते तथा समाजशास्त्रिणा तु मानवीयव्यवहारस्य सामाजिके आधारे आनयनस्य अपेक्षा क्रियते।[१] विधिना सह

---

१. धर्मज्ञ समयः प्रमाणम्। वेदाश्च—आप० १।१-३; २।२।२९।

२. वेदेनैवाभ्यनुज्ञाता येषामेव प्रवक्तृता। नित्यानामभिधेयानां मन्वन्तरयुगादिषु॥ तेषां विपरिवर्त्तेषु कुर्वतां धर्मसंहिताम्। वचनानि प्रमाणानि नान्येषामिति निश्चयः। तन्त्रवार्त्ति० ३।७।

तथा च—धर्मत्वेन प्रपन्नानि शिष्टैर्यानि तु कानिचित्।
वैदिकैः कर्तृसामान्यात्तेषां धर्मत्वमिष्यते॥

3. Karkunov, General thery of Law, Translated by Hasting, p. 76.

समाजशास्त्रीयदृष्टिकोणसद्भावाद् विधेः स्वभाव एव ।[१] श्रुत्यारभ्य स्मृतिकालपर्यन्तं कलिवर्ज्यसूचीस्वीकारेण विधौ महदेव परिवर्तनं कृतम् ।[२] अधिकतमा विधयः श्रुतिषु विहिता आसन् त एव स्मृतिषु निषिद्धा अभूवन् ।[३] स्पष्टं हि इदं देशकालप्रभावहेतुकं परिवर्तनं भवदपि मूलं सुरक्षितमेवासीत् ।[४] वैदिकविधेः सम्बन्धो विभिन्नाभिः शाखाभिः सहासीत् । किन्तु तत्राभिव्यज्यमानो विधिर्मानवमात्रस्य सामान्यं निर्देशमददात् । शाखाविशेषस्य कृते विशिष्टविधयो ह्यासन् । एभिः समाजैक्ये वैधानिकी व्यस्तता अस्मादेव कारणान्न जाता यदिमे मानवकल्याणस्य सामान्यविधितो पृथक् कृता आसन् ।

क्षेत्रीया अपि विधय एवं सङ्कलिता यत्तेषां मान्यता अक्षुण्णा संतस्थौ ।[५] कदाचित्तु ते सार्वभौमा अभूवन् ।[६] क्षेत्रीयेण विधिनैव सह स्थानीयस्य विधेरपि मान्यता आसीत् । तेषां व्यवहारविकासौ प्रतिबद्धौ न जातौ । ते स्वक्षेत्रे सार्वभौमा आसन् । किन्तु आर्थिकविकासजातानां सामाजिक्यां परिस्थितौ इयं स्थायिनी न बभूव ।[७] आचार्याः रक्तस्य व्यवसायस्य चोभयोः समन्वयं चक्रुः, येन क्षेत्रीयजातीयार्थिकनियमानां समन्वयोऽपि जातः, तथा च सार्वभौमैक्यविधयोः रक्षणमपि । देशजातिकुलान् ते सार्वभौमविधेः ( आम्नायस्य ) आधारे स्थापयामासुः स्वीचक्रुर्वा । आर्थिकसङ्घटनात् तथैवं जातीयकान् अन्यानपि विधीन् ते यथारूपं विकसितान् भावयामासुः । आचार्यकृतेन विधिसंहितानां क्षेत्रीयासु मान्यतासु समन्वयेन मतभेदाः प्रस्तूयन्ते । बौद्धायनेन स्पष्टं स्वीकृतं यद् दक्षिणोत्तरयोः पञ्चप्रतिपत्तयः सन्ति ।[८] आपस्तम्बो यानाचारानङ्गीकरोति ते

---

1. Max Weber, Essays in Sociology, Translated and edited by H. H. Gerth and C. W. Mills, New york. 1916

२. यः कश्चित् कस्यचिद् धर्मो मनुना परिकीर्तितः ।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥
( मनु० २।७ )

३ योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः ।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ॥
( मनु० २।११ )

4. SBE. 26, p. 57.

५. मिथिलास्थः स योगीन्द्रः क्षणं ध्यात्वाऽब्रवीन्मुनीन् ।
यस्मिन् देशे मृगः कृष्णस्तस्मिन् धर्मान्निबोधत ॥
( याज्ञ० १।२ )

६. दक्षिणेन हिमवत उत्तरेण विन्ध्यस्य ये धर्मा ये चाचारास्ते सर्वे प्रत्येतव्याः—वसिष्ठ० १।८-९ ।

७. गौ० ध० सू० २।२।१९-२१ ।
बौधायन० १।१।२-५ ।

सार्वभौमा अभवन्तोऽप्यस्वीकृता नैव जाताः। तेषामाधारः क्षेत्रीयतैव केवला भवति। दक्षिणभारतं समुद्रतटवर्त्ती क्षेत्रं भवति। तत्रत्या जनाः सदा समुद्रयात्रां कुर्वन्तः सन्ति। तैर्विश्वेन समं व्यापारः, दक्षिणपूर्वस्मिन् एशियाखण्डे चोपनिवेशविस्तारः, प्रशान्त-महासागरीयेषु देशेषु संस्कृतिप्रचारः प्रसारश्च अजायन्त। किन्तूत्तरदेशीयब्राह्मणानां कृते इदं प्रायश्चित्तरहितं पापमासीत्।[१] एतादृशो मतभेदाः क्षेत्रीयाः सन्तो न कदापि राष्ट्रस्य सार्वभौमविधिना सह विरोधिभावापन्ना भवितुं प्राभवन्।

वैदिको विधिः सत्यस्य समग्रं रूपं गृह्णाति। तस्मिन् मानवस्य कल्याणस्य दृढतायाः लक्ष्यात्मकतायाश्च समावेशोऽभवत्। स हि कयाचित् सर्वोच्चया शक्त्या निर्मित इति न कथ्यते स्म, अपि तु तस्मादेव सर्वे स्वव्यवहारं गृह्णन्ति।[२] अत एवास्मिन् रूपे स शाश्वतो भवति। सेयं शक्तिः ऋतस्याऽस्ति यत् समग्रस्य विश्वस्य, समाजस्य, दैविकायाः शक्तेश्चाधारः।[३] विधेरिदं रूपं चिरनवीनं विद्यते।[४] अस्मिन् परिवर्तनं न स्वीकार्यमस्ति।[५] इमां मान्यतामङ्गीकुर्वाणो दण्ड्यो भवति, पालयिता च संरक्षितः। किन्त्वर्थकामाभ्यां सम्बद्धानां सामाजिकानां सङ्घटनानामिदं रूपं न भवितुमर्हति। ते हि मानवीयाः परिवर्तनीयाश्चापि भवन्ति। इयांस्तु विशेषो यत् ऋतस्य मूलभूता धारणा जीवनस्याभिव्यक्तौ अनिवार्यरूपेण स्वीकर्तुं प्रयुक्ताः। तदेवं भारतीयविधौ शाश्वतानि तत्त्वानि परिवर्तमानानि चेत्युभयविधानि सन्ति।

## स्वतन्त्रता

विधिः स्वतन्त्रतामपहरति, तस्य प्रथमः सम्बन्धोऽधिकारेण, कर्त्तव्येन वा साकं भवति, इत्यादि प्रश्नानां विश्लेषणे व्यक्तिसमाजयोस्सम्बन्धेषु विचारः कर्त्तव्यो भवति। एतेनानुसारेण वैधानिकाधिकारेण व्यक्तेः स्वतन्त्रतायाः क्षेत्रं व्यापकं भवति। वैधानिक-कर्त्तव्येन स्वस्य सन्तुष्टेः स्थाने परहितमाध्यमेन प्रतिबन्धाः स्थाप्यन्ते।[६] व्यक्तेर्व्या-वहारिक्या स्वतन्त्रतया समं तस्याः नैतिकतायाः महत्त्वाकाङ्क्षायाश्चाऽपि प्रश्नो विद्यते।

---

१. बौधा० २।१।२।१-२।

२. बृ० आ० उ० १।५।२३।

३. ऋतेन ऋतं धरुणं धारयन्त यज्ञस्य शाके परमे व्योमन्।
दिवो धर्मन्धरुणे सेदुषो नॄञ्जातैरजाताँ अभि ये ननक्षुः॥
(ऋ० ५।१५।२)

4. George Buhler, S B E. vol. xiv. p. 12.

५. ऋ० ७।८९।५।

6. Prof Allen, Legal Duties, p. 156.

स्वतन्त्रताया अभावात्मकस्य भावात्मकस्य च पक्षयोरतः सह समन्वयः कर्त्तव्यो भवति। सामाजिककल्याणेन सहाभावात्मकं स्वातन्त्र्यं सहाववस्थानाय नाऽलम्। तदुपरि प्रतिबन्धा अवश्यं भवितव्याः। अत एव भारतीयैर्विचारकैः 'यथेष्टव्यवहारस्वातन्त्र्यम्' विधिनिषेधयोः सीम्नि स्थापितम्। तेषां मते तु व्यक्तेरभीष्टं सापेक्षमस्ति न खलु निरपेक्षम्। श्रेयः प्रेययोरेवं समन्वयः कृतो यत् तस्मिन् व्यक्तिविकासेन साकं सामाजिककल्याणसुरक्षा भवेत्। मानवेऽसत्तत्त्वान्यपि अधिगतान्यासन् किन्तु असामाजिकानि समाजविरोधीनि तत्त्वानि न कदाऽपि दत्तमान्यतारूपेण आसन्। वातावरणं प्रशिक्षणं च द्वारीकृत्य व्यक्तेर्गुणानाम् विस्तारः कृतः। डॉ डुनाव अनुसारेण व्यक्तेः स्वातन्त्र्यस्येदमपेक्षितं यत् तस्मिन् सम्बद्धपाशविकभावाभिभूता शारीरिकी इच्छा प्राधान्यं भजतु उत सामाजिकहितेन समम् उच्चादर्शोन्मुख्यं वा।[1] भारतीयैर्मनुष्ये दैवी पाशविकी-चेत्युभे अपि वृत्ती स्वीकृत्यैव स्वतन्त्रताया निर्धारणं कृतम्। व्यक्त्या वातावरणप्रशिक्षणेन स्ववृत्तिपरिवर्त्तनं कर्त्तुं शक्यते। अत एवाधिकारापेक्षया कर्त्तव्येऽधिकोऽभिनिवेशो दर्शितः। कर्त्तव्यपालनाय प्रस्तुतो भावो मूलतः सामाजिकविचाराणां प्रतिच्छन्निरस्ति, ये विचाराः सदाचारेण नैतिकतया, सामाजिकघटकधारणाभिः प्राप्यन्ते। परन्तु नेदमस्य तात्पर्यम् भवितुमर्हति यद् व्यक्तौ कर्तव्यो निरङ्कुशतया धारितः। स हि प्रकृतेर्वाह्यसम्बन्धैः सामाजिककल्याणेन च सह व्यक्तिविकासस्य समन्वयविन्दुर्भवति।

कर्त्तव्यव्याख्या न चैवं कृता यत्तस्यामधिकारा लुप्ता भवेयुः। पापम् ( evil ) सदा शारीरिकीनां वासनानाम्, आवश्यकतातिरेकस्य, रागस्य ( passion ) च परिणामोऽस्ति, तदा पुण्यम् ( good ) तु सत्यस्योचितव्यवहाराणां मुख्यं स्वरूपम्। भारतीयाः पुण्यस्य समर्थनं कुर्वन्ति। फलतः मनुष्यस्वभावो मूलतः पवित्रः, सामाजिकश्चास्ति, इति तैरभ्युपगन्तव्यम्। तेषां मते तु सत्योचितव्यवहारयुक्तस्य कर्त्तव्यस्य गर्भे स्वपरेषामधिकाराणां सन्निवेशोऽस्ति। सत्यामेवं स्थितौ "इह करणाकरणयोरधिकारो ममास्ति" इत्यसौ सिद्धान्तो न स्वीकृतः। अस्मिन्नभीष्टः खलु अनियन्त्रिताभीष्टः उत "अन्येष्टविमुक्ताभीष्टः" इत्यन्यतरस्मिन् रूपे समागच्छति, यः समाजविरोधिनि असामाजिके वाऽधिकारे नियन्त्रणं करोति।

उपनिषत्सु स्वतन्त्रताया आध्यात्मिकं दर्शनं प्रस्तुतम्। महीदासानुसारेण प्रकृतिः सोद्देश्या अस्ति। जीवनस्य लक्ष्यं पूर्णतायां विद्यते। पूर्णताया आधारः प्रज्ञा (knowdedge ) नन्दनम् ( bless ) अमृतत्त्वम् (immortality ) चाऽस्ति। विकासक्रमः प्राणात् प्रज्ञां प्रति, अर्थात् बन्धनान्मुक्तिं प्रति संसरति। अस्य लक्षणानि तु १. शारीरिकबन्धनैरुत्थानम्, २. संयोगभावनायाः ( मैथुनात् ) स्वस्य दमनम्, ३. क्षुधावृत्तौ

1. Prof. Dr. Du Nouy, Haman Destiny, p. 48.

ग्राह्यवस्तुविवेकपरिपाकौ, ४. व्यक्तिप्रतिभाहृदययोगयोस्समन्वय इति सन्ति। एवं स्वतन्त्रता महीदासस्य समग्रभौतिकैन्द्रियकसुखसाधनेभ्य उच्चैरुत्थाने संस्थिता। किन्तु नास्य तात्पर्यमर्थकामयोर्वैध्रभोगादपि ताटस्थ्येन मनुष्येण भवितव्यमिति वर्तते। तदनुसारेण "व्यक्तौ तर्कबुद्धिचिन्तनकर्त्तव्यनिर्धारणानां क्षमता विद्यते। अनया उच्चजीवनक्षुद्रजीवनयोः भेदावगमे स शक्नोति। एतदाधारोपर्येव तेन स्वकीयस्वातन्त्र्ये प्रकृतिसमाजयोः समन्वयेन भाव्यम्।" महीदासस्य निष्कर्षं इहापि सङ्केतं करोति यद् विधिनिषेधयोः कार्यान्वितौ राज्यस्यावश्यकता विद्यते इति। व्यक्तेर्महत्त्वाकाङ्क्षाया अनेन सह पूरकत्वस्वीकृतौ राज्यस्य स्थितिरुच्चैर्भवति। बृहदारण्यकोपनिषदि याज्ञवल्क्यः "प्रियस्याधारो वाह्यापेक्षो नास्ति किमुत अन्तरापेक्ष एव।" '**न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति, आत्मनस्तु कामाय सर्वं प्रियं भवति।**"[१] स्वस्य किं प्रियं भवति, एतदनुभवे जातेऽन्येषां किं प्रियं भवन्ति इत्यस्यापि ज्ञानं भवति। स परेभ्यो न तदाचरति यत् स्वस्याप्रियं स्यात्।[२] अस्यां स्थितौ समाजकल्याणेन समं स्वकल्याणभावः समुदेति।[३] कठोपनिषदि श्रेयः ( good ) प्रेयः ( pleaserable ) पृथक् कथिते। श्रेयोग्रहणेन प्रेयसः च नियन्त्रणेनैव स्वातन्त्र्यमाप्नोति।[४] एवं स्वातन्त्र्यं सामाजिककल्याणविधिनिषेधे एव वास्तविकं भवितुं शक्नोति।

## समानता

भारतीयविधिशास्त्रे विधेः समानता विवादास्पदं आलोचनाविषयश्चाऽस्ति। भारतीयसमाजशास्त्रिभिर्ये विचारा व्यक्तीकृतास्तेषां निष्कर्षं आधुनिक्यां भाषायामेवं ज्ञातुं शक्यते—व्यक्तिविभेदवैशिष्ट्यभावने व्यक्तौ प्रमुखताया भावमुत्पादयतः, सा अन्येषां व्यवहारं प्रभावयितुमिच्छति। कदाचिदस्मिन् शुद्धमनोभावो विद्यते, कदाचिच्चावाञ्छितमनोभावा ये स्वार्थपूर्त्तये क्रियाशीलास्तिष्ठन्ति। कदाचिच्छक्तिविस्तारस्य

---

१. बृ० आ० उ० २।४।५।

२. नाश्रमः कारणं धर्मे क्रियमाणो भवेद्धि सः।
अतो यदात्मनोऽपथ्यं परेषां न तदाचरेत्॥
( याज्ञ० ३।६५ )

३. कामात्मता न प्रशस्ता न चैवेहास्त्यकामता।
कामो हि वेदाधिगमः कर्मयोगश्च वैदिकः॥
संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः।
व्रतानि यमधर्माश्च सर्वे संकल्पजाः स्मृताः॥
अकामस्य क्रिया काचिद्दृश्यते नेह कर्हिचित्।
यद्यपि कुरुते किंचित्तत्तत्कामस्य चेष्टितम्॥
( मनु० २।२-५ )

४. अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषमसिणीतः। ततः श्रेय आददानस्य साधुः भवति हीयतेऽर्थाद् य उ प्रेयो वृणीते॥ ( कठो० १।२।१ )

केवलस्य भावनाक्रियाशीलतामावहति। एभिर्विभिन्नैः कारणैः समाजे विषमतायाा उदयो भवति। आनन्दकष्टोद्देश्यानां व्यवहारैर्व्यक्तिः क्रियायां प्रवर्त्तते। वाह्याभिप्रेतप्रभावः ( persuasive influence ) वर्तमानभविष्ययोर्हितकामना च मानवव्यवहाराणां कृते दिङ्निर्देशनं कुर्वाते । स्थितेरसमानतया एताभिर्धारणाभिर्बलं लभ्यते। मानवीये समाजे शक्तिप्रतिभागुणक्षमतासम्पत्तीनां शक्तये विद्यमानाः सन्ति। ताः स्त्रीपुरुषयोः, शक्तिनिर्बलतयोः, प्रतिभामूर्खतयोः, अनुभवाननुभवयोः, गुणदोषयोः, सम्पत्तिनिर्धनतयोः, सहयोगासहयोगयोर्वैषम्यं जनयन्ति। एताभ्य उत्पन्नायाः स्थितेर्मार्जनं शक्यमेव किन्तु एताः समापयितुं न शक्याः। व्यावहारिके समाजेऽसमानता तु अचिकित्स्यैव।

भारतीयसमाजस्य सङ्घटनमस्मिन्नेवाधारे जातम्। मनोः समये समानतायाः क्रान्तिर्भवन्ती आसीत् किन्तु वर्णानां स्वत्वमपि स्थापितमभूत्। मनुना आवश्यकतायाः समानतायाश्चानुभवः कृतः, अथ च तत्समन्वयमपि अध्यायत। किन्तु तस्य स्वरूपमाधुनिकं नासीत्। व्यक्तित्वानां प्रतिष्ठा मनवे कर्त्तव्यत्वेन सामाजिककार्यक्षेत्रे आपतिता। सामाजिकीषु मान्यतासु सामाजिकताया यद्रूपमासीत् तस्मै मनुना संरक्षणं प्रदत्तम्, यतः स समाजस्य यथास्थितेर्विचारकोऽस्ति। तदनुसारेण मानवसमानतातात्पर्यम्, मानवान्तर्निहितक्षमतायाः सामाजप्रतिष्ठितव्यक्तेः संरक्षणमेवाऽस्ति। स हि व्यक्तेरन्तर्वाह्यक्षमताया विषमतां जन्मजातवर्णाधारे स्वीकृतवान्। वर्णेष्वानुवंशिक्यां वातावरणस्य च समानतायां समानगुणक्षमतानां विकासे स व्यक्ति समाजविशेषस्य विभागानामधिकतमानां व्यक्तीनामिवावगच्छत्। एवं स समानवर्गो विधेः समानतां विदन्नासीत्। अन्यैर्वर्णैः सार्धं तेषां ये सम्बन्धा आसन् तेषां रक्षणे विधेः समानता अविद्यत। तेषां पुरतो व्यक्तिर्न व्यष्टिरूपेणापितु तस्याः सामाजिकास्तित्वमपि विधिविश्लेषणसम्बद्धमासीत्।

जनसङ्ख्यायाः क्षेत्रीयेण विकासेन सह नगराणां स्थापनस्य, यातायातसाधनविकासेन सहैव श्रमविभागस्यापि प्रभावो निपतत्येव। मनुबौद्धक्रान्तेः प्रतिक्रियायां श्रममपि वंशानुगं कृत्वा तं विधिना सम्बद्धं चकार। नूनमद्यतनस्य कालस्योपलब्धिरियं यद् वैयक्तिक्यः क्षमताः योग्यताश्च वंशं नानुगच्छन्ति। अद्यत्वे वयस्कः सामाजिकार्थिकधार्मिकजातीयसङ्घटनेभ्य उपरि स्वतन्त्रव्यष्टिरूपेण विधेः पुरतस्तिष्ठति। यद्युक्तसङ्घटनेभ्यो व्यक्तिः पृथक् क्रियते तर्हि मानवमात्रस्य समानता अपरिहार्या भवति। अस्मिन् रूपे स्त्री, पुत्रः, कुलदासः, भृत्यादयः स्वतन्त्रव्यष्टेः रूपं लभन्ते। प्राचीने भारते व्यक्तिः सामाजिकेन स्तरेण समं प्रस्तुता भवति स्म। दासादीनां वैधानिकोत्तरदायित्वमस्माद्धेतोर्नासीत्, यत्ते सामाजिकसङ्घटने निर्भरा आसन्। फलतो विधेः पुरतस्तेषां समानता न विद्यते स्म।

## विधौ परिवर्तनं तच्छक्तयश्च

विधेस्सत्ता न वैधानिके प्रारूपेऽपितु वैधानिकीषु संस्थासु अवतिष्ठते ।[1] भारतीयविधेः परिवर्तनस्य मूल्याङ्कनार्थं तदीयानां सामाजिकीनां संस्थानामध्ययनमपेक्ष्यते । सहैव तान्यपि तत्त्वान्यन्वेष्येयानि यानि परिवर्तनस्य मूलानि । विधेः स्वरूपं न तथा संहितायां प्रकाशं याति यथा सामाजिकेषु नियमेषु, व्यवहारेषु च । समाजस्य मुख्यानि संघटनानि मानवीयसमाजस्य तथ्यानि च न परस्परस्माद् भिद्यन्ते । विवाहोत्तराधिकारसम्पत्त्यादिवैधानिकसंघटनविषयका नियमा देशकालपरिस्थित्याद्यनुसारं परिवर्तन्ते, तेषु विकाशोऽवश्यम्भावी । वैदिककालादारभ्य मनुं यावद् अनुवर्तमानाया विधिसंहितायाः सामाजिकसंघटनानाञ्चालोचने कथनस्यास्य वास्तविकता नापलपितुं शक्या ।

विधीयोपबन्धेषु सामाजिकनियमेषु च विधेः किं स्वरूपं स्यादित्यत्राधुनिका विधिशास्त्रिणो विधीयोपबन्धमेवाद्रियन्ते परं सुव्यवस्थितसमाजे विधिर्न सामाजिकेभ्यो घटकेभ्यः पृथक् स्थातुं शक्नोति । सामाजिकसंस्थानां सामाजिकनियमानाञ्च सम्मिश्रणमेव विकाशस्य मूलम् । व्यक्तिसंघटनात्मके समाजे यत्परिवर्तनं न तद्वाह्यकारणकृतम् अपितु समाजान्तरभूतान्येव संघटनानि परिवर्तनमिदं प्रयोजयन्ति । तस्मिन् परिवर्तिते विधिस्तस्य संस्थानभूतं न्यायालयादिकमपि च परिवर्तनमायाति । परिवर्तने न तथा महत्त्वपूर्णं स्थानं रक्तादीनां यथा अस्याः शक्तेः । यावत् सुदृढ आधारो नासाद्यते विधिना तावत् परिवर्तनकारिण्यः शक्तयश्चेष्टन्ते । तस्मिन्नासादिते तु विधिः शनैः-शनैः स्थायित्वमायाति, परं परिवर्त्तनकारिण्यः शक्तयो न तदापि विरमन्ति । एवं स्थिते प्राचीनानामादर्शानां नूतनस्थित्यनुसारं समन्वयने प्रयास आरब्धो विचारकैः ।[2] विभिन्नेषु, युगेषु (तदा तदा) विचारकैः स्थायित्वस्य, वैशिष्ट्यस्य, परिवर्तनस्य, आवश्यकतानाञ्च यथाशक्तिसन्तुलने प्रयतितम् । भारतीयो विधिरादर्शविशेषमनुवर्तते इति न तत्र परिवर्तनप्रक्रिया स्फुटं परिलक्ष्यते ।

मानवीयजीवनं न न्यायालयस्य विषय इत्येषा धारणा भारतीयानाम् । व्यक्तिः स्वयमेव स्वीयान् वैधानिकान् सम्बन्धाननुवर्तते । मानवीयः समाजो धारणामिमाम् अनुवर्तते तथ्यञ्चेदं सम्मन्यते यद् वैधानिकानि कर्त्तव्यानि स्वयं सम्पद्यन्ते, न तु कर्त्तव्यानां परिपालने जायमानेन असाफल्येन येऽनुभवा भवन्ति, तदनुरोधेन क्रियाः परिव-

1. John Dewey, The Influence of Darwin on Philosophy, p. 8. Ehrlich, op. cit.
2. Ruscoe Pound, op. cit p. 1.

र्तनीयाः ।[१] विधिर्वैधानिकेषु संस्थानेष्ववतिष्ठते । मानवीयानां सामाजिकीनां वा संस्थानामालोचने क्रियमाणे भवति विधेः सामान्यं स्वरूपं परिज्ञातम् । मूलतः समेषामपि समाजानां विवरणं समानम् । वैवाहिकानां नियमानाम्, उत्तराधिकारप्रकाराणाम्, चलाचलसम्पद्विषयकाणां विधानानाम् सन्धिविषयिकाणाम्, विभाजनादिविषयिकाणाञ्च व्यवस्थानामनुशीलने व्यक्तेः समाजस्य च वैधानिकाः सम्बन्धा भवन्ति सुबोधाः । विधेः परिवर्तने बीजभूतानि तत्त्वानि विमृशन् लिखति कार्लरेनरः "शाश्वतस्य विधेरुद्देश्याः किं सामाजिकानामार्थिकानाञ्च संघटनानामामुद्देश्यैः सह न परिवर्तनमायाताः ? किं १७५० ख्रीष्टीयवर्षतः एकोनविंशतितमशताब्दीं यावदुत्तराधिकारादिविषयकैर्निर्णयैः सह तदीयान्युद्देश्यान्यपि न परिवर्तितानि ? किं धनवादात् प्रागुदयकाले उच्चतमकाले च विधेरुद्देश्यं स्वरूपम्, व्याख्या च न परिवर्तनमापुः" ।[२] निर्विवादमेतद् यद् यदा सम्पत्तिरेव शक्तेराधाराङ्गता सम्पत्तिरेव वा शक्तेर्मानदण्डः स्वीकृतस्तदा सामाजिकानि संघटनानि शक्तयश्च सहैव विधिना परिवर्तनमापुः ।

रेनरो वैधानिकीनां संस्थानामार्थिकानि सामाजिकानि च निदर्शयन् निष्कर्षमिमं प्रतिपद्यते यदुभयमपीदं परस्परमुपकरोति परस्परस्य वा पूरकम् । वैधानिक्यः संस्था, आर्थिकानि संघटनानि प्रभावयन्ति, आर्थिकानि च परिवर्तनानि वैधानिकेषूद्देश्येषु परिवर्तनमुद्भावयन्ति । धनवादिसमाजे नियुक्ति-श्रम-सन्ध्यादिविषयकेषु नियमेषु परिवर्तनमाहितमार्थिकैः कारणैः किं बहुना उत्तराधिकारविषयका नियमा अपि एतैरस्यां परिवर्तनधारायां प्रवाहिताः । समाजेऽस्मिन् अर्थेन समाजस्य शक्तेश्चाधारता आसादिता । प्राचीनाः सामाजिक्यः संस्थाः विच्छेदमानुवत्योऽन्ततः विलोपमेव ययुः । एतदवश्यं यद् आर्थिक्यः परिस्थितयो झटिति परिवर्तन्ते परं सामाजिकेषूद्देश्येषु परिवर्तनमेतच्छनैः शनैः पदं निधत्ते । सामाजिकानि संघटनानि हि भवन्ति जटिलानि । तत्र भवन्ति परिवर्तनस्य सोपानानि । यद्यपि कदा-कदाचित् क्रान्तिषु परिवर्तनं झटिति परिलक्ष्यते तथापि तत्र परिवर्तनाधायकानि बीजानि पूर्वपरम्परात एव प्ररोहन्ति ।

आर्थिक्यो नैकान्तिकतया द्रष्टव्याः । ता हि सामाजिकेषु घटकेषु सामाजिकानां व्यवहाराणामङ्गानि । सामाजिकस्योत्पादनस्य पुनरुत्पादनस्य च भवति ताभिः सम्बन्धः । यद्यार्थिक्यः क्रियाः समाजस्य सर्वैरप्यङ्गैः सम्बद्धास्तदा ता वैधानिकीनां संस्थानां ये सामाजिका व्यवहाराः कार्याणि च तेषां कारणभावं यातुं शक्नुवन्ति । यदि चेतिहासपदवीमारुह्यार्थिक्याः प्रक्रियाया वैधानिकस्य लक्ष्यस्य च समन्वयात्मकदृष्ट्या आलोचने क्रियेते तदा परिवर्तनस्य विकाशस्य चैकाङ्गिता दुर्वचैव स्यात् । स्फुटमेव परिवर्तनानां सापेक्षता परस्परपूरकता च भवेत् परिज्ञाता । मेनमतानुसारं विकाशः स्तरतोऽ-

1. Ehrlich, op. cit.
2. Dr. Friedmann, op. cit. ch. 2.

नुबन्धोन्मुखी विद्यते। परं मतमिदं अधिक्षिपन् रेनरमहोदयो लिखति यद् विषमतामूलके समाजे सन्धिविषयकस्य सैद्धान्तिकस्य स्वातन्त्र्यस्य समानतायाश्च न किमपि महत्त्वम्, यत्रोत्पादनाऽधिकादधिकं मूल्यं संगृह्य श्रमिकाणां शोषणमेव भवद्युद्योगपतीनां लक्ष्यम्, यत्र चोद्योगपतिभिः सामाजिक्या श्रमप्रक्रियया न नियन्त्रणं स्थाप्यतेऽपितु सामाजिकः श्रमः शोषणस्य परिणामो, धनवादिसमाजीयस्य श्रमस्य धनसंजिघृक्षायाश्च एषोऽनिवार्यः परिणामः समाजेऽस्मिन् श्रमिकाणां सम्बन्धो न सहकारित्वभावनामाश्रयति, अपितु धनस्थापनाया आवश्यकः परिणामः। श्रमिकाणां पारस्परिकः सम्बन्धः यदा उद्योगपतेः पूर्वकल्पितां योजनामतिवर्तते तदा उद्योगपतिः श्रमिकसंघटनानां नियमान् व्यवस्थामुद्देश्यांश्च स्वनिर्देशानुसारं संचिचालयिषति।

सम्पत्तेर्धनराशितया परिणमने मानवीयश्रमस्य कारणता नापलपितुं शक्यते। धनराशौ स्वत्वोद्भावनार्थं सम्पत्स्वामी अन्ये च धननिर्मातारो यथा तदादेशानुवर्त्तिनः स्युस्तथा यतन्ते। सम्पदा धनेन चेत्युभयेनापि विधेस्सम्बन्धः। परं सम्बन्धेऽस्मिन् परिवर्तते विधेः स्वरूपेऽपि परिवर्तनं सम्भाव्यते। अत्र हि विधेर्नैकरूपतावतिष्ठते, अपितु द्विविधानि रूपाणि तेनाश्रयतव्यानि। प्रथमतः सम्पत्तेः पूर्वं विधिषु, सम्पत्ति धनतया परिणमयतां सम्बन्धेषु च, धननिर्मातॄणां तत्र स्वत्वं तिष्ठापयिषता च यदि-विरोधस्तदा विधिः परिवर्तनौन्मुख्यं व्रजति; अथ च तस्य स्थायित्वमुक्तस्य विरोधस्य यः परिणामस्तमेवाश्रयति अर्थादुक्तविरोधपरिणामानुसारेणैव विधिरस्थायित्वं याति। अस्मिन् परिवर्तनक्रमे ईदृशान्यपि परिवर्तनानि येषामाधारो न विधिः अपितु शक्तिः। धनपतिस्तथ्यं दूरतः प्रक्षिप्य आज्ञया, नियन्त्रणेन, कूटनीत्या च विधिं परिवर्तयितुमीहते। एतेन स्फुटमेव यच्छोषणार्थं लाभार्थञ्च सामाजिके स्थायित्वे प्रयत्यते धनपतिना। फलतः साम्पत्तिक्यः संस्था राज्यस्येव स्वस्यापि स्वतन्त्रमस्तित्वं संघटनं वा प्रतिष्ठापयितुं चेष्टन्ते, आयाति च वैयक्तिकी शक्तिर्विकाशम्।

निर्विवादमिदं यद् विधिना सह अवस्था, स्वभावः, लक्ष्यम्, त्रयमेतत् परिवर्तनमायाति। अद्यत्वे यथा सौविध्यानां लब्धिः स्यात् तथैव चेष्टमाना दृश्यते प्रत्येकं व्यक्तिः। आगमिष्यन्त्याः परिस्थितेर्नूतनस्य जगतः आयतेश्चोत्तरदायी सर्व एव जनः। वर्तमानसमस्यानां समाधित्सा अविरतमनुवर्तमाना दृश्यते मानवे। नेयं मनोवृत्तिरद्यतनी अपितु चिरन्तनी एव, युगाद्युगमतिक्रममाणा अद्यत्वेऽपि परिलक्ष्यते, एषैव च परिवर्तनस्य मूलं द्योतिका वा परिवर्तनप्रवृत्तेः। औद्योगिकी क्रान्तिः, जनतन्त्रञ्च द्वयमेतद् अद्यत्वे परमं साधनम् येन समग्रापि सामाजिकी चेतना सञ्चाल्यते।[१] वैयक्तिकमात्मनियन्त्रणम्, पारस्परिकी सहिष्णुता, जनचैतन्ययुक्तसहकारिता च त्रयमिदं यदभ्यस्तमिव दृश्यते, अद्यतने समाजे त्रयेणानेन वा यदासादिता अद्यतनस्य समाजस्यानिवार्याङ्गता सोऽपि

---

1. A Study of History, vol. i. p. 14.; vol. iii. p. 363.

एतस्यैव द्वयस्य प्रभावः। युगपरिवर्तनस्य परिणामेनानेन मानवस्य सामाजिको व्यवहारो नियन्त्रितोऽस्ति। मानवीयाः सम्बन्धा य आसन् जनपदविशेषे सीमिताः सन्ति तैर्गोलार्धं यावत् स्वीयान् चरणान् प्रसारयितुमारब्धम्। वैज्ञानिकीनां शक्तीनां विकाशेन मानव एवं प्रतिष्ठापितो यत् स यस्य सामाजिकसंघटनस्य सदस्यस्तत्र तदीयानां स्वत्त्वानां क्षमतानाञ्च संरक्षणमनिवार्यमभूत् समाजस्य कृते। नूतनेनानेन परिवर्तनेन, कुटुम्बम्, कुलम्, संघः, राष्ट्रम्, राज्यञ्चेति सर्वमेवेदमसाफल्यमानीतम्। देशकालयोः परिधिं ह्रसयितुं पारस्परिकया स्पर्धया एका ईदृशी समस्या उपस्थापिता या अशक्या नैतिकतया धर्मेण वा समाधातुम्। नूतनाधारसामाजिक्या रूपरेखाया न किमपि स्वरूपं स्थैर्यमायाति। संशोधनेन पुनर्जागर्त्या चौद्योगिकी क्रान्तिर्गत्यौन्मुख्यमानीता। अनेन हि द्वयेन व्यक्तये स्वातन्त्र्यमवसरश्च प्रदत्ते परमन्ततो अन्धकूपादन्यं न किमपि स्थानमारचितं स्वतन्त्राया व्यक्तेः कृते। आत्मिकीशून्यता, बौद्धिकः संशयः, राजनीतिकं पतनञ्चैतत् त्रयं अद्यतनस्य युगस्य मुख्यं वैशिष्ट्यम्। अखिलमपि विश्वं सुरक्षां कामयमानः शीतार्थी प्रज्वलनोपकरणानीव विनाशोपकरणानि साञ्चनोत्यद्यत्वे। एतस्या एव समस्या एव प्रभावः परिलक्ष्यते विधेराधारेषु उद्देश्येषु च।

भारतीयविधेरितिहासः सामाजिकसुरक्षादृष्ट्या स्थिरता अथ च सामाजिकीः परिस्थितिः समाधातुं परिवर्त्तनात्मकं मध्यमं मार्गमाश्रयन् समन्वयं स्थापयति। एवंविधो विकाशो विभिन्नेषु समाजेषु लक्ष्यते। प्रारम्भिकवैदिकसमाजीयस्यापि विधेः सूत्रं लभ्यते वैदिकीषु ऋचासु। वैधानिका विचारा अवश्यमेव प्रभाव्यन्ते परिस्थित्या। दार्शनिको भवति स्वीयस्य युगस्य मूर्तिमत्यभिव्यक्तिः। यदा सामान्यसुरक्षायां वैयक्तिकेषु व्यवहारेषु वा राज्यं हस्तक्षेपं करोति तदा दार्शनिकः स्वातन्त्र्यं प्रतिष्ठापयितुं "यद्भाव्य"मित्येतां नीतिं व्याख्यातुमुपक्रमते। भारतीयविधेर्विकाशे आर्थिक्याः समस्यायाः, कुटुम्बादेः, सामाजिकानां संघटनानाञ्च योगदानमस्ति।

केचन विचारका राज्यं विधिविकाशस्य मुख्यं मूलं मन्यन्ते। परं नैषा वस्तुस्थितिः, विधेः वैधानिक्याः स्थितेर्वा प्रतिष्ठा कस्यापि राजनीतिकस्य संघटनस्य न परिणामोऽपि तु राजनीतिकसंघटनानां जन्मतः प्रागेव विधेरभूत् स्थापना। किं बहुना राज्यात्मिकायाः संस्थाया आविर्भावकाले, कार्यान्वियनकाले ततः प्रागपि च सदाचारद्वारा विधिरासीत् समाजे लब्धावकाशः। राज्यसंघटनानां न सामाजिकेषु सदाचारेषु वा हस्तक्षेपेऽधिकारः प्रत्युत एतैरेव समाजोऽपेक्षणीयः, यथा समाजमेव च एतैः प्रवर्तितव्यम्। विधेः परिवर्तने आर्थिकैः साधनैः संघटनैश्चापि साहाय्यं क्रियते। सामाजिकेन परिवर्तनेन सहैव विधेराधारभूतायां नैतिकतायामपि परिवर्तनम्। आधारे च परिवर्तते विधेरुद्देश्येष्वपि एतत् सम्भाव्यते। आरम्भकाले विधिधर्मयोरासीत् संकीर्णता सम्बद्धता वा। भारतीय साहित्ये धर्म इत्येव व्यपदिश्यते विधिः, किन्तु यथा-यथा समाजो विकाशमायाति तथा-तथा विधेरपि परिवर्तते, अत्र च परिवर्तने धर्मोऽकिञ्चित्करः।

दूरतः प्रक्षिप्योद्यता जीवनपरिवर्तनविषयकेण सिद्धान्तेन सततं कर्मनिरतता प्रादुर्भाविता। अस्यां स्थितौ सामाजिकानां कौटुम्बिकानां च सम्बन्धानां परिपाल्निस्य विरोधं भजन्त्यो दृश्यन्ते। एवं स्थिते विधेरार्थिककारणानाञ्च पारस्परिके समन्वये काठिन्यं तदवस्थमेवावतिष्ठते। एवमपि कानिचिदीदृशानि तत्त्वानि यैः सामाजिकस्य विधेर्विकाशे आर्थिकाणां कारणानां योगदानं शक्यते परिज्ञातुम्।

वेदेषु ऋषिऋणमुल्लिखितम्। परं विवादे ऋणादानस्य प्राथम्यमाहुः स्मृतयः। इत्थं विधौ ऋणेन प्राथम्यमासाद्यते। मानवधर्मशास्त्रे नारदीयस्मृतौ च ऋणविषयकमेकं स्वतन्त्रं प्रकरणमेव लभ्यते। किं बहुना ऋणमप्रत्यावर्त्यैव यदि म्रियते कश्चित् तदा जन्मान्तरे ऋणदातुर्गृहे स दासो जायते, इदंमहत्त्वमृणप्रत्यावर्तनस्य। अन्याय्यं कुसीदम् आददानश्चौरोऽनैतिकश्च घोष्यते स्मृतिषु।[१] वर्णव्यवस्थामनुरुध्य समाजस्य विभिन्नानामङ्गानां श्रेणी भेदो व्यवस्थापितः। तत्तज्जात्यनुसारमृणस्य कुसीदस्य चाप्यौचित्यं निरधार्यत। ब्राह्मणाः क्षत्रियाश्चापत्कालेऽपि न कुसीदजीविकामर्हन्ति।[२] परं याज्ञवल्क्येन समये नैषा स्थितिरवातिष्ठत्। याज्ञवल्क्येन हि सामाजिकपरिवर्तनानुसारमार्थिकानियमाः संशोधिताः, अथ चापत्काले ब्राह्मणानां राजन्यानाञ्च कुसीदग्रहो विहितः।[३]

पूर्वकाले ऋणमित्येषो व्यपदेश एव आसीत् परं स्मृतिकाले कुसीदस्यानेके प्रभेदा-अपि व्यवस्थाप्यन्त, येषां विकशितायामर्थपद्धतावेव सम्भवः। तद्यथा कुसीदस्य षट् प्रभेदा मताः कायिका, कालिका, चक्रवृद्धिः, कारिता, शिखावृद्धिः, भोगलाभश्च। स्फुटं यत् सामाजिकीभिः स्थितिभिः सहैवार्थिकं जीवनमपि परिवर्तनमायात्, अनेन परिवर्तनेन विधिरपि परिवर्तनं प्रापितः। आर्थिकजीवनार्थिकदशा वाणिज्यादीनां यथा यथा विकाशस्तथा तथा कुसीदस्य प्रभेदोऽभूत्।

सामान्यतो लिखितान् अलिखितान् नियमाननुरुद्ध्य व्यवह्रियतेस्म कुसीदम्। सामाजिक्या आर्थिक्या च परिस्थित्या सह कुसीदस्य इयत्तापि परिवर्तनमायाता।

---

१. नारद० १।८; याज्ञ० १।१२३; वसि० २।४१।

२. वसिष्ठ० २।५।
ब्राह्मणं क्षत्रियो वापि वृद्धिं नैव प्रयोजयेत्।
कामं तु खलु धर्मार्थं दद्यात् पापीयसेऽल्पिकाम्॥
(मनु० १०।११७)

३. आपद्गतः संप्रगृह्णन् भुञ्जानो वा यतस्ततः।
न लिप्यतैनसा विप्रो ज्वलनार्कसमो हि सः॥
कृषिः शिल्पं भृतिर्विद्याकुसीदं शकटं गिरिः।
सेवानूप नृपो भैक्षमापत्तौ जीवनानि तु॥
(मनु० १०।४१-४२)

सामान्यतः कार्षापणविंशतेर्मासपञ्चकं मासिकं कुसीदमासीत्। कासुचित् स्मृतिषु मूलधनस्य ( ऋणस्य ) अशीतितमो भागो वृद्धिर्दिष्टः। प्रतिशतं पञ्चदशेत्येवंरीत्या वार्षिकं कुसीदं व्यवस्थापितं स्मृतिकारैः। परमेषा व्यवस्था तदैव यदि कुसीदस्येयत्ता लिखिता अस्याश्च व्यवस्थाया अनेकेऽपवादा अपि। कौटल्यसमये वाणिज्यस्य द्वारं द्वयमेवासीत्, अरण्यं सागरश्च। अत एव कुसीदस्येयत्ता संशोधनमार्हत्। कौटल्येन हि वाणिज्यीयऋणे प्रतिशतं पणपञ्चाकम्, समुद्रवणिजां ऋणे प्रतिशतं पणविंशतिः कुसीदं व्यवस्थापितम्। दीयमानस्य मूलधनस्य यावदेव विपद्ग्रस्तत्वं तावदेव कुसीदस्य इयत्तायामाधिक्यम्। सामान्यस्थितौ दीयमानमृणमपेक्ष्य वनवणिग्भ्यः समुद्रवणिग्भ्यो वा दीयमाने ऋणे भवत्यधिकमुत्तरदायित्वम्। अत एव दीयमाने ऋणे यथा विपद्ग्रस्तत्वं दायित्वं वा भवत्यधिकम्, तथा-तथैव कुसीदस्य इयत्तायामपि तारतम्यमिति सामन्यऋणापेक्षया समुद्रादिवणिग्भ्यो दीयमाने ऋणे कुसीदस्य परिमाणं वर्धते। समुद्रवणिजाम् ऋणमासीत् सर्वतोऽधिकं विपद्ग्रस्तम्। अत एव तत्र कुसीदमपि ऋणान्तरापेक्षयाधिकं व्यवस्थापितम्।

सामान्यस्थितौ प्रतिपणशतं पणद्वयं मासिकम्, पणविंशतिश्च वार्षिकं कुसीदं मन्यते स्म। अन्यत्र च सार्द्धैकपणो वृद्धिरुक्तः। अस्मिन् व्यवस्थाभेदे एतद्बीजं यदाद्या व्यवस्था अलिखितऋणविषयिणी, अस्य हि विपद्ग्रस्तत्वमधिकं सम्भाव्यते। द्वितीया व्यवस्था पुनः लिखितऋणविषयिणी लिखितऋणापेक्षया अलिखितऋणे वृद्धेराधिक्यं स्वाभाविकमेव।[1] कासुचित् स्मृतिषु प्रतिशतत्रयम्, चतुष्कम्, पञ्चकञ्चापि कुसीदं विहितम्। सामाजिकस्थितिमनुरुध्यैव विधिर्व्यवस्थापितः। सामाजिक्याः स्थितेरार्थिकाणाञ्च नियमानां समन्वयनार्थम् ऋणे कुसीदव्यवस्थायां केचनापवादा अपि अभ्युपगता, सामाजिक्या स्थित्या सहार्थिकनियमानां समन्वयमीहमानैः ऋणेऽपवादा अपि स्वीकृता। तथाहि परिस्थितिविशेषे दीयमाने ऋणे कुसीदग्रहो निषिध्यते। तद्यथा—यज्ञार्थम् शिक्षार्थम्, औषधार्थं वा पीडितेन, अनाथेन, वृद्धेन, वालेन वा गृह्यमाणे ऋणे कुसीद

---

१. ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति।
अपह्नवे तद्द्विगुणं तन्मनोरनुशासनम्॥
वसिष्ठविहितां वृद्धिं सृजेद् वित्तविवर्धिनीम्।
अशीतिभागं गृह्णीयान्मासाद्वाधुषिकः शते॥
द्विकं शतं वा गृह्णीयात् सतां धर्ममनुस्मरन्।
द्विके शतं हि गृह्णानो न भवत्यर्थकिल्विषी॥
द्विकं त्रिकं चतुष्कं च पञ्चकं च शतं समम्।
मासस्य वृद्धिं गृह्णीयाद् वर्णानामनुपूर्वशः॥
( मनु० ८।१३९-१४२ )

कौटल्य० ३।३; बृ० ११।३४; याज्ञ० २।३७; २।३८; नारद० १।१००; वसिष्ठ० २।४८।

न हि धर्मो मुख्यं कारणम्, अयं हि भवति विधेर्विकाशे सहकारी, परं विधिर्नैतस्य विकाशे प्रयोजकः। विधिराधारतयोपतिष्ठते यदाश्रयणेन सम्पद्यते धार्मिको व्यवहारः। यद्यपि विधिपरिवर्त्तिकायाः परिस्थितेरुद्भावने शिष्टानाम्, समाजस्य नेतृणाम्, पुरोहितानां च न कश्चिद्धस्तक्षेपः, अर्थान्नैते ईदृशीं परिस्थितिमुद्भावयन्ति यया विधिः परिवर्तनमानीयेत परं परिवर्तमानां परिवर्तितां वा परिस्थितिमनुरुध्य विधेः परिवर्तने भवत्येषां महत्त्वम्। विधेः परिवर्त्तकानि यानि तत्त्वानि न तानि शाश्वतानि। देशकालपरिस्थित्यनुसारमुद्भवतः सामाजिकस्य परिवर्तनस्य प्रभावोऽवश्यं परिलक्ष्यते विधौ। परिवर्तने तारतम्यमर्थात् न्यूनत्वाधिकत्वं भवेन्नाम परं परिवर्तनं सर्वथैव न भवतीति नाभिमतं कस्यापि।

सभ्यताया धर्मस्य च पारस्परिकस्य सम्बन्धस्य विवेचनेनाप्यस्माकं मुख्यो विषयः प्रकाशमायास्यति। "हिस्ट्री ऑफ दि डिक्लाइन एण्ड फॉल ऑफ दि रोमन इम्पायर" पुस्तकस्यान्तिमेऽध्याये धर्मस्य बर्बरतायाश्च विवरणमुपस्थापितं मयेति लिखति गिब्बनः। व्यंग्यमिदं स्फोरयन् स लिखति एषा एका खीष्टीयवासना आसीत् यया सा सभ्यता दूरे प्रक्षिप्ता।

लेखमिदं व्याचक्षाणः प्रोफेसरः टॉयन्बी लिखति यद् गिब्बनेन खीष्टीयधर्मप्रसारेण रोमग्रीकयोर्यः पराभवः स वस्तुतः सभ्यताया एव पराभवो मन्यते। वस्तुस्थितिर्हि एषा ईसातः पूर्वपञ्चमशताब्दीत एव तस्याः प्राचीनसभ्यतायाः पराभव आरब्धः। सभ्यतैषा नान्येन केनचिन्निहता अपितु स्वयमेवेयमात्मानं न्यहन्, नास्या पराभवे विलोपे वा खीष्टीयधर्मस्योत्तरदायित्वम्। दार्शनिकीपृष्ठभूमिर्न तस्याः सभ्यताया विलोपस्य हेतुरपि तु परिणामः। यस्यां पृष्ठभूमौ खीष्टीयधर्मस्य विलय आरब्धः[१]।

फ्रेजरमहोदयस्य 'गोल्डेनबाऊ' अस्य तथ्यमभ्युपगच्छन् टॉयन्बी अग्रे लिखति यद् ग्रीकरोमनसमाजाः व्यक्तीनां समुदायेषु अथ च नागरिकीयाणां राजकीयाणाञ्च सम्बन्धानां व्याख्यायामासन्निर्भराः। परलोकवादस्य प्रतिष्ठापनया व्यक्तिर्विधेः समाजस्य राज्यस्य वा अङ्गतामाससाद। सर्वोच्चकल्याणे जनहिते, देशसेवायाञ्चैव व्यक्तित्वस्य विनियोगः सार्थकोऽमन्यत। पूर्वीयधर्मेण सम्बन्धे समुद्भूते तत्त्वानीमानि परिवर्तनमायन्। जीवेन ईश्वरस्य सम्बन्ध इत्यनया धारणया यदैवं पदं निहितं तत एव मोक्षेण जीवनस्य परम लक्ष्यता आसादिता। फलतो राजकीयः सामाजिकश्च सम्बन्धोऽभूद् गौणः। तत्स्थाने च परलोकप्राप्तिभावनया प्रधान्यमासादितम्। राजकीयानि कौटुम्बिकानि च बन्धनानि शैथिल्यमयुः। रोमनविधेः पुनरुत्थानेन अरिस्टाटिलीयदर्शनभूमिकया च यत्र पूर्वीयमोक्षवादाद् युरोपीयसमाजो मोचितः, अर्थात् समाजाद् अनिवार्यता प्रतिष्ठा-

1. Toynbee, Civilisation on trial, p. 41.

पिता। फलतः समाजस्य, राज्यस्य विधेश्च सम्बन्धा व्यकशन् प्रकाशञ्चायन्। विधेः परिपूर्णतायामेव महतो लक्ष्यस्य लब्धिरासीच्छक्यता। समाजाद् राज्याच्चापि परः परोभूतविधिः, विधिसत्ता एका ईदृशी सत्ता अभूद् यस्याः पुरोः राज्यसत्ता समाजसत्तापि अनुमतां, समन्यत च विधिः क्षत्रस्यापि क्षत्रम्।

स्फुट यद् विधिविषयका नियमा सदासन् परिवर्तनशीलाः। सामाजिक्यां स्थितौ परिवर्तितायां नियमेष्वपि परिवर्तनमवश्यम्भावि। नियमेषु च परिवर्तनं भजत्सु विधेः स्वरूपमपि स्थैर्यं विजहाति। कालभेदे नियमा अपि भिद्यन्ते। एकयुगीया नैतिकता युगान्तरे नैतिकतया परिणमति। यानि वैशिष्ट्यान्यासन् कृतत्रेताद्वापराणां पुण्ययुगतायां प्रयोजकाणि तान्येव कलौ वर्ज्यतामयान्, यतो न तानि शक्यानि कलियुगीयया नैतिकतया सम्मन्तुम्; अर्थात् कलियुगीयाया नैतिकतयया तेषां समावेश आसीदशक्यः। एवंविधेषु परिवर्तनेष्वार्थिकानां कारणानां भवति महद्योगदानम्। भारतीयविधिविकाशे सामाजिककारणानां प्रभावः परिलक्ष्यते। धर्मशास्त्रेभ्य आरभ्य अर्थशास्त्राणि यावदेषां प्रभावः शक्यः परिद्रष्टुम्। विधेर्विकाशस्यार्थिकाणां कारणानां सम्बन्धो दुर्निर्णयो यतो भारते देशकालविषयिणी समस्या अशक्यसमाधाना। शास्त्राण्यपि स्थानीयानि परमेषां मान्यता दैशिकसीमया परिच्छिन्ना। अत एव शास्त्रीया विभिन्नाः समस्याः पारस्परिकमस्माद् अयं वादो बहिः प्रतिप्रस्तत्रैव पुनः सामाजिकानामादर्शानां स्थापना प्रारब्धा। धर्मस्य स्थाने सभ्यतया प्राथम्यम्, यद्वा सभ्यतया धर्मस्य स्थानमासादितम्।

टॉयन्बी महोदयेन बहुविचार्य निष्कर्षोऽयमासादितो यद्धर्मः सभ्यताया दासः। अयं हि न लौकिक्या सभ्यताया उद्भवे हेतुः प्रत्युत सभ्यतायाः संस्कृतेश्चोत्थानपतनानि धर्ममुद्भावयन्ति। कष्टानामनुभवेनैव यात्यध्ययनं परिपक्वताम्। सभ्यतामाश्रित्यैव यद्वा सभ्यतात्मकेन पथैव धर्मरथः स्वर्गं प्रति अग्रेसरति। सभ्यतायाश्चास्तित्वमुत्थानपतनमूलकम्। अतः सभ्यतायां प्रत्यावर्त्तनं लक्ष्यते परं धर्मोऽप्रत्यावर्त्तमान एवाग्रेसरति। भारतीयविधेराधारो धर्म एव। दत्तक-विवाहोत्तराधिकारादिविधयो धर्ममेवाश्रिताः। मेनमहोदयेन विधिनिर्माणे धर्मोऽप्याधारतया स्वीकृतः।[१] परमनेनविषयमिमं विवेचयितुमौत्तरकालिकान्येवोदाहरणान्याश्रितानि। यो बहुदेववादस्तेन चर्चितः सर्व एकस्यैव बहुधा अर्थात् बहुभिःरूपैश्चित्रणे पर्यवस्यति; अन्यथा ऋग्वेदत एवैकस्य तत्त्वस्य निर्वचनमुपाक्रान्तम्।[२] भारतीयात्मवादे निष्क्रियताया नैराश्यस्य चर्चैव नोदेति।[३] यद् दिव्यं पदं तेषां गन्तव्यमासीत् तदुपलब्धौ कर्तव्यविषयिण्या जागरूकतया एव साहाय्यमाचरितम्, यत्रासीत् मृत्योः प्रतिक्रान्तिर्निगूढा। मृत्युवाद-

1. Hindu Law and Usage, ii ch.
२. ऋ० १०।१२९।१-३।
३. ऋ० १०।८२।५।

न्यषिध्यत। उत्तमर्णाधमर्णयोः पारस्परिकेषु सम्बन्धेष्वपि ऋणमासीत् कुसीदमुक्तम्, यद्यासीदपि कुसीदं तदा सामान्यमेव न चक्रवृद्ध्यादिकम्।[1] कुसीदमधिकादधिकं कियत् स्यादित्येषा व्यवस्था आसीद् देशानुसारिणी, मूलधनाद् द्विगुणतोऽष्टगुणाधिकं यावद् देशानुसारं कुसीदस्य ग्रहो विहितः।[2]

यावति काले स्वर्णस्य वृद्धिर्द्वैगुण्यं याति तावत्येव सोमस्याष्टगुणताम्।[3] इत्थमेव वस्त्रौषधादीनामन्येषां च वस्तूनां कुसीदे व्यवस्थाभेदो लभ्यते।[4] एवं कोशसम्बद्धस्य ऋणस्य तत्रैव निधानेऽन्यत्र च नयने कुसीदे भवति तारतम्यम्।[5] अन्नस्य कुसीदं सस्ये सम्पन्न एव गृह्यते स्म। तदानीं ह्यन्नस्य मूल्ये भवति ह्रासः, येनान्नस्य कुसीदमनुपाततः (मूल्यदृष्ट्या) आधिक्यं याति। अतः सस्यनिष्पत्तेः पूर्वं न तत्सम्बन्धिकुसीदमादीयते स्म। समुद्रवणिग्भ्यः साधारणकुसीदापेक्षया अधिककुसीदग्रहणे न केवलं मूलधनस्य सम्भावितं विपद्ग्रस्तत्वमेव अपि तु लाभाधिक्यमपि, समुद्रवणिग्भिर्हि विदेशेषु वाणिज्यमाचरद्भिः स्थानीयवणिगपेक्षया अधिको लाभो लभ्यते। अतो लाभानुसारं कुसीदस्याप्याधिक्यं स्वाभाविकमेव इत्थं सामाजिक्याः स्थितेरार्थिकनियमानां चैकवाक्यता स्थापिता। सामान्यधातुविशेषवस्त्रौषधिप्रभृतीनां वस्तूनां कुसीदेषु लभ्यमानमापेक्षिकं तारतम्यं वीक्ष्य शक्यं वक्तुं यदार्थिकं जीवनं विधिसंहितापेक्षया अधिकं जटिलं शक्तिमच्चासीत्। निर्धारितेऽवधौ वृद्धेरदाने नूतनो निबन्धो लिख्यते स्म। अस्यां च स्थितौ सञ्चितं कुसीदं मूलधने समावेश्यते। स्फुटं यदीदृशी व्यवस्था आर्थिकजीवनस्यैव हेतोरुद्भूता।

कौटल्यं यावद् राज्यस्य कल्याणकारिस्वरूपं साकल्येन विकाशमायात्। कौटल्येन हि आपणमूल्यनिर्धारणं राज्यस्यैव कार्यक्षेत्रे निवेशितम्। वणिग्भिर्यत्पण्यं विदेशेषु प्रेषयितव्यं तस्यापि मूल्यनिर्धारणे आसीद् राज्यस्य हस्तक्षेपः। निर्यातायातयोर्मध्ये सन्तुलनं स्वदेशस्यार्थिककल्याणसापेक्षमासीत्।

---

१. वसिष्ठ० २।४२; नारद० १।१०८-१०९; विष्णु० ६।५; गौ० १२।३२; कौ० ३।२।
गोप्याधिभोगे नो वृद्धिः सोपकारे च ह्रापिते।
नष्टो देयो विनष्टश्च दैवराजकृतादृते॥
(याज्ञ० २।५९)
न त्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयात्।
न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः॥
(मनु० ८।१४३)

२. नारद० १।१०६।

३. कौ० ३।२।

४. बृ० ११।१३, १६; याज्ञ० २।१९; वि० ६।१३, १६; वसि० २।४४,४६-४७; नारद० १।१०७; कात्या० ५१०-५१३।

५. बृ० १३।१२।

उत्पादनस्य स एव अंशो बहिर्नियाप्यते स्म य उपभोगादवशिष्टः। यद्यपि वाणिज्य आसीद् वैयक्तिकं स्वातन्त्र्यम् तथापि सामाजिकस्य कल्याणस्य माभूदुपेक्षेति वाणिज्ये राजकीयं नियन्त्रणमप्यपेक्षितम्। वस्तूनामुत्पादने, विक्रये, मूल्यनिर्धारणे च निरीक्षणं व्यापारविभागाध्यक्षस्यासीत् कर्त्तव्यम्। पण्यवस्तूनां प्रथमतः केन्द्रीयकरणं कृत्वा ततस्तेषां मूल्यानि निर्धार्य वितीयन्ते स्म तानि। तेषु च मूल्येषु प्रसिद्धिं यातेषु आवश्यकतानुसारं नूतनानि पण्यानि घोष्यन्ते स्म। केन्द्रीयाणि स्थानीयानि पण्यानि निर्धारितमूल्यैरेव विक्रीयेरन्निति सार्वजनिकं वैयक्तिकञ्चोत्पादनं केन्द्रीकृत्यावश्यिकां पूर्त्ति च यथाजन-सामान्यहितं समीक्ष्य आपणेषु प्रेष्यते स्मैतदुत्पादनम्। तानि च वस्तूनि यथा निर्धारित-मूल्यं विक्रीयन्ते स्म। येषां वस्तूनामावश्यकता दीर्घकालिकी न तेषां विक्रये शैघ्र्यम्।[१] विदेशेषु निर्यातमाचरतां वणिजां कृते करेषु शैथिल्यमप्यासीदर्थादेतेभ्यः करविशेषा नादीयन्ते स्म।[२]

राज्यं न कदापि तादृशानि मूल्यानि न्यधारयद् यैर्जनकल्याणं व्याहन्येत। येषां वस्तूनां स्यादावश्यकता न तेषां विक्रयः कदापि न्यरुध्यत नापि केन्द्रीयकरणे न तान्य-वध्यन्त। उपभोगादवशिष्टानां वस्तूनां निर्याते नासीत् कोऽपि प्रतिबन्धः, प्रत्युत तदर्थम-पेक्षितानि सौविध्यान्येवासन्। विदेशीयेभ्योऽपि वणिग्भ्यो यथासम्भवं सौविध्यानि दीयन्ते स्म। जनकल्याणमनुरुध्यैवासीद् वस्तूनामायातनिर्यातयोः सीमाया निर्धारणम्। न तु केवले लाभ एव दृष्टिः।[३] यथानिर्धारितमूल्यं वस्तूनां क्रये-विक्रये च प्रत्यहं निरीक्ष्यते स्म राज्येन।[४] मूल्यं जानन्नप्यधिकं मूल्यमाददानो विक्रेता आर्थिकं दण्डम-

---

१. कौ० २।१६।

२. कौ० २।१६।

३. अर्घप्रक्षेपणाद्विंशं भागं नृपो हरेत्।
व्यासिद्धं राजयोग्यं च विक्रीतं राजगामि तत्॥
(याज्ञ० २।२६१)
कौ० २।१२, १६; वि० ५।१३०।

४. आगमं निर्गमं स्थानं तथा वृद्धिक्षयावुभौ।
विचार्य सर्वपण्यानां कारयेत् क्रयविक्रयौ॥
पञ्चरात्रे पञ्चरात्रे पक्षे पक्षेऽथवा गते।
(मनु० ८।४०१-२)

राजनि स्थाप्यते योऽर्घः प्रत्यहं तेन विक्रयः।
क्रयो वा निःस्रवस्तस्माद् वणिजां लाभकृत्स्मृतः॥
स्वदेशपण्ये तु शतं वणिग्गृह्णीतपञ्चकम्।
दशकं पारदेश्ये तु यः सद्यः क्रयविक्रयी॥
(याज्ञ० २।२५१-२५२)

भजत्।[१] वैदेशिकानां पण्यानामपि निर्धारितमूल्यादधिकेन न्यूनेन वा मूल्येन विक्रये ईदृश एव दण्डः।[२]

सेचनसाधनानां विकाशेन नवीनभूमौ कृष्यादीनामावश्यकतया च महन्महत्त्वमासादितं कौटल्यकाले। अत एव कूपतडागकुल्यादीनां निर्माणे यथासम्भवमपेक्षितानि सौविध्यानि दीयन्ते स्म तदानींतनेन राज्येन। अकृष्टभूमौ कृषिमाचरन्नासीत् पञ्चवर्षाणि यावत् करमुक्तः। सेचनविषयिण्याः कीदृश्या अपि योजनायाः पूर्त्यर्थमादीयमाने ऋणे नासीत् वर्षत्रयं यावत् कुसीदम्। ये भूभागा जनशून्या अनुपयुज्यमानाश्चासन् तेषु जनानां वसतेर्योजना आरब्धा कौटल्येन। ईदृशेषु च भूभागेषु, ते प्रदेशा विशेषतो विनियुज्यन्ते स्म।[३] यत्र जलस्य, आपणस्य, उत्पादनस्य, सुरक्षायाश्च सौविध्यम्। ईदृशेषु क्षेत्रेषु वसन्त आसन् करमुक्ताः। भूमिजातानां वस्तूनामापणेषु विक्रय आसीत् प्रतिबद्धो यत एतानि उपभोगार्थानि नाधिकादधिकमूल्यसंग्रहार्थानि। नूतनासु वसतिषु मार्गजलौषधिपशुपालनादिष्विव तदायामान्तरिक्यां स्थितावपि राज्यमासीत् सावहितम्।[४]

भूस्वामित्वविषयेऽपि कौटल्येन महत्परिवर्तितम्। एतन्मतानुसारं कृषौ तस्यैव स्वामित्वं यस्तामाचरति। भूमिं संगृह्य तत्र कृषिमनाचरतो भूमिराच्छिद्य तस्मै देया यः कुरुते कृषिम्। कृषिमकुर्वतः करं ददतोऽपि भूमिरादेया प्रदेया चान्यस्मै कृषिशीलाय। एतेन स्फुटं यत् न केवले शुल्कसंग्रहे राज्यस्य दृष्टिरपितु राष्ट्रिये उत्पादनेऽपि। कृषिविविकासयिषद्भ्यः पशुमुद्राबीजादीन्यन्यानि चापेक्षितानि सौविध्यानि दीयन्ते स्म राज्येन।[५] नगरग्रामयोर्भेदमनपेक्ष्यैवासीदार्थिकी सहायता। इदं विशेषतोऽवधेयं यत्कौटल्यो न करभारेण अपि तूत्पादनसाधनानां विस्तारेण राज्यकोषं विवर्धयिषति। नूतनभूमौ कृषेः प्रोत्साहनेन भूमिविषयको विधिरपि परिवर्तनमायाताः। करव्यवस्थायाः द्वयमासीदुद्देश्यम्—राज्यकोषस्य वृद्धिः, प्रजानां संवृद्धिश्च। कौटलीया करनीतिः

---

१. समवायेन वणिजां लाभार्थं कर्म कुर्वताम्।
लाभालाभौ यथाद्रव्यं यथा वा संविदा कृतौ॥
(याज्ञ० २।२५९)

कौ० २।६।

२. सम्भूय वणिजां पण्यमनर्घेणोपरुन्धताम्।
विक्रीणतां वा विहितो दण्ड उत्तमसाहसः॥
(याज्ञ० २।२५०)

३. कौ० ७।११।

४. कौ० २।१।

५. कौ० ५।२-३।

न धर्मशास्त्रीयां महाकाव्यीयां च करनीतिं संवदति। कौटल्यो हि करग्रहणे कूटनीतिमप्याद्रियते। करविषये मनोरेतद्दर्शनं प्रजाभ्यस्तथैव कर आदेयो यथा भ्रमराः पुष्पेभ्यो रसमादत्ते। गौर्यावदेवाधिकं पोषयिष्यते तावदेव दुग्धं ततः शक्यं दोग्धुम्। एवमेव प्रजाभ्यः करग्रहे स्याद्राज्ञो नीतिः। स्पष्टं यद् विधौ परिवर्तनेऽर्थशक्तेर्योगदानमपरिहार्यम्।[1]

## राज्यशक्तिन्यायपालिकयोः परस्परसम्बन्धः

### पारस्परिकसम्बन्धस्य विकासः

व्यवस्थितरूपतामापन्ने राज्ये राजशक्तेः स्वरूपमभिव्यज्यते। एकराज[2]-

---

१. यथाल्पाल्पमदन्त्याद्यं वार्योकोवत्सषट्पदाः।
तथाल्पाल्पो ग्रहीतव्यो राष्ट्राद्राज्ञाब्दिकःकरः॥
( मनु० ७।१२९ )

मधुदोहं दुहेद्राष्ट्रं भ्रमरा इव पादपम्।
वत्सापेक्षी दुहेच्चैव स्तनांश्च न विकुट्टयेत्॥
( महा० शां० ८८।४ )

प्रद्विष्टस्य कुतः श्रेयो नाप्रियो लभते फलम्।
वत्सौपम्येन दोग्धव्यं राष्ट्रमक्षीणबुद्धिना॥
भृतो वत्सो जातबलः पीडां सहति भारत।
न कर्म कुरुते वत्सो भृशं दुग्धो युधिष्ठिर॥
( महा० शां० ८७.२०-२१ )

न चास्थाने न चाकाले करांस्तेभ्यो निपातयेत्।
आनुपूर्व्येण सान्त्वेन यथाकालं यथाविधि॥
( महा० शां० ८८।१२ )

राष्ट्रमप्यतिदुग्धं हि न कर्म कुरुते महत्।
यो राष्ट्रमनुगृह्णाति परिरक्षयन् स्वयं नृपः॥
संजातमुपजीवन् स लभते सुमहत्फलम्।
आपदर्थं च निर्यातं धनं त्विह विवर्धयेत्॥
( महा० शां० ८७।२२-२३ )

मालाकारोपमो राजन् भव माऽऽङ्गारिकोपमः।
तथा युक्तश्चिरं राज्यं भोक्तुं शक्ष्यसि पालयन्॥
( महा० शां० ७१।२० )

२. एकराजस्य भुवनस्य राजसि शचीपत इन्द्र विश्वाभिरूतिभिः।
( ऋ० ८।३७।३ )

अधिराज[1] -सम्राट्[2] -स्वराट्शब्दैः[3] स्फुटं प्रतीयते यद् राजशक्तेः स्थापना तस्यां च स्तरभेदो वैदिककाले संजातः। राजकृतां ग्रामणीनां माध्यमेन राज्ञश्रयनं भवतिस्म।[4] विशां रक्षया सैनिकानामावश्यकतया च राजशक्तेर्विकासः सम्पन्नः। अस्याः सैनिकशक्तेर्विकासेन सार्धं शक्तिमद् व्यक्तीनां वर्गस्यापि विकासः सम्भवन् आसीत्। एषां राज्ञा साकं सम्बन्धः सारल्येन संजातः। एभिरभिषेके विशिष्टं सम्मानमासादितम्। वैदिककाले राजशक्तेर्दार्ढ्यसम्पादने ग्रामण्यो राजभृतश्च च अनन्तरं ब्राह्मणकालिका रत्निनश्च प्रशासकानां सहयोगिनोऽभूवन्।[5] यद्यप्येतत्कालं यावत् विशां प्रतिनिधिभिरेव राज्ञश्रयनं सम्पद्यमानमासीत् तथापि तस्य क्षेत्रं सभायाः समितेश्च परिधौ सीमितं सत् यथा तिष्ठेत् तथा प्रयासः सम्पादितः।[6] सभायां प्रभावशाली वर्गस्तथाविधा व्यक्तयश्च क्रियाशीला

---

१. ये नः सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामव बाधामहे तान्।
वसवो रुद्रा आदित्या उपरिस्पृशं मोग्रं चेत्तारमधिराजक्रन्॥
(ऋ० १०।१२८।९)
इन्द्रो जयाति न परा जयाता अधिराजो राजसु राजयातै।
(अथर्व० ६।९८।१; ९।१०।२४।)
२. साम्राज्याय सुक्रतुः ऋ० १।२५।१०; ऋ० २.२८।६; ५।८५।१; ६।६८।९; ८।९२।१।
३. इदं कवेरादित्यस्य स्वराजो विश्वानि सान्त्यभ्यस्तु मह्ना (ऋ० २।२८।१)
४. आ त्वाहार्षमन्तरेधि ध्रुवस्तिष्ठाविचाचलिः।
विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधि भ्रशत्॥
(ऋ० १०।१७३।१)
ता अस्य ज्येष्ठमिन्द्रियं सचन्ते ता ईमा क्षेति स्वधया मदन्तीः।
ता ईं विशो न राजानं वृणाना बीभत्सुवो अप वृत्रादतिष्ठन्॥
(ऋ० १०।१२४।८)
ह्वयन्तु त्वा प्रतिजनाः प्रति मित्रा अवृषत।
इन्द्राग्नी विश्वे देवास्ते विशि क्षेममदीधरन्॥
(अथर्व० ३।३।५)
त्वां विशो वृणतां राज्याय त्वामिमाः प्रदिशः पञ्च देवीः।
वर्ष्मन्राष्ट्रस्य ककुदि श्रयस्व ततो न उग्रो वि भजा वसूनि॥
(अथर्व० ३।४।२)
ये राजानो राजकृतः सूता ग्रामण्यश्च ये।
उपस्तीन्पर्ण मह्यं त्वं सर्वान् कृण्वमितो जनान्॥
५. अथर्व० ३।५।७।
६. परि सद्मेव पशुमान्ति होता राजा न सत्यः समितीरियानः।
सोमः पुनानः कलशाँ अयासीत् सीदन् मृगो न महिषो वनेषु॥
यत्रौषधीः समग्मत राजानः समिताविव।
विप्रः स उच्यते भिषग् रक्षोहामीवचातनः॥
(ऋ० ९।९२।६; १०।९७।६)
अथर्व० ७।१२।१।

आसन् । फलतो वैदिककाले राज्ञः, तस्य पार्श्ववर्त्तिनां सामाजिकसंघटनानां प्रतिनिधिनां चेदं रूपं क्रमशः स्थैर्यमाप्नुवदासीत् ।

निःसन्दिग्धं युद्धकाले राजा सेनायाः प्रधानं जनतायाः संरक्षकश्चासीत् ।[१] शान्तिकाले[२] सः स्वमर्यादाया रक्षां समृद्धौ च प्रजाभ्यः सम्मानमात्मसात्कृत्य तिष्ठति स्म ।[३] तस्मिन्नेव काले वर्णव्यवस्था समाजस्य आदर्शव्यवस्था जाता । फलतो ब्राह्मणानामारक्षणं राज्ञः कर्त्तव्यकोटौ समायातम् ।[४] एतादृश्यां स्थितावेव राजा विवादेषु निर्णायकपदं स्वायत्तीकरोति, विजानाति च तानि तत्त्वानि चराणां माध्यमेन, यानि राज्ये भवन्त्यशान्त्युत्पादकानि चराः व्यक्तेरपराधान्, राजशक्ति प्रति जनानां भावं च वेत्तुं प्रयतन्ते ।[५] इममेवाधारमाधारीकृत्य एच० एन० सिन्हामहोदयेन इदमेव निष्कृष्टं तथ्यं साधयितुं प्रयतितं यद् राज्ञा दण्डापराधविधेः प्रारम्भकर्तृत्वमधिगतं परिणामतस्तस्मिन् दण्डापराधविधिविधायकत्वमाधिकारिकरूपेण सुप्रतिष्ठितं जातम् ।[६] किन्तु राज्ञि विधिमधिकृत्य प्रशासकत्वमेवासीन्न तु विधायकत्वम् । राज्ञि तादृशाणामपराधानां प्रारम्भकर्तृत्वं विहाय राज्यं समाजस्य यस्मिन् कस्मिन्नपि सदस्ये भवितुं शक्नोति स्म । सिन्हामहोदयेन स्वकथने न किञ्चित् प्रमाणमुपन्यस्तम् । नाऽप्युपलभ्यन्ते एवंविधानि प्रमाणानि वेदेषु । स्मृतिषु एतद्विषयमधिकृत्य नूनं विचारा उपलभ्यन्ते तासु प्रत्यक्षत एव राज्ञो विधायिकायाः शक्तेः खण्डनं कृतमस्ति । एवमेव व्यवहारेऽपि राजा विधेः प्रशासक एव भवति ।[७] भूमिसम्बद्धेषु क्षेत्रसेचन[८]सम्बद्धेषु विवादेषु नूनं व्यावहारिकी काचनव्यवस्था अभ्युपेतव्या भवति तस्यां च राज्ञो महत्त्वपूर्णं स्थानमासीत् । स न्यायिकप्रशासने न्यायाधीशसाम्यमधिकुर्वन्नपि विधिनिर्माता न भवति ।[९]

तस्मिन्काले राजा ऋतस्य राष्ट्रस्य च संरक्षकः । **"ऋतस्य गोपाः"** ( upholder of law ) भवति ।[१०] सहैव विशोऽपि पालयति—**पार्युविशः** ।[११]

---

१. ऋ० ३।४३।५।

२. ऋ० १।६७।१।

३. ऋ० ४।५।८।

४. अप्रतीतो जयति सं धनानि प्रतिजन्यान्युत या सजन्या ।
अवस्यवे यो वरिवः कृणोति ब्रह्मणे राजा तमवन्ति देवाः ॥
( ऋ० ४।५०।९)

५. ऋ० ४।४।३; १।२५।१३; ८।६७।५।

6. H. N. Sinha, Sovereignty in Ancient India, P. 24.

७. ऋ० १।११०।५।

८. ऋ० ७।४९।२; अथर्व० १।६।४; १९।२।१।

9. Vedic Index, Vol. III, P. 213.

१०. ऋ० ७।६६।१३; ७।६४।२; १०।१७३।२।

११. ऋ० ४।४।३।

ऋतरूपं वैशिष्टयमधिकृत्यैव अवैदिकसमाजेभ्यो वैदिकसमाजः पृथग् भवति; अत एव 'ऋतं' वैदिकसमाजस्य आधारभूतं तत्त्वमासीत्। ततो वैपरीत्येन विद्यमानमनृतमेवावैदिकसमाजस्य विधानमासीदिति मन्तुं शक्यते। अनृतं पाल्यताम् अवैदिकानामुन्मूलनम् ऋतस्य संस्थापनं राज्ञो मुख्यं कर्त्तव्यं जातम्।[१] राजानो यतो जनसंरक्षकाः "गोपा जनस्य" अत एव तान् विश अभिलषन्ति स्म—"विशस्त्वा सर्वा वाञ्छन्तु।"[२] एषां कार्याणां सम्पादनं शक्त्यायत्तमेव भवति। अत्र राज्यस्य तत्त्वानि विधिः ( ऋतम् ), राष्ट्रम्, जनसंख्या ( विशः ), सम्प्रभुतायाः संघटनम् च भवन्ति। एषु प्रामुख्यं विधेरेव स्वीक्रियते; ऋतस्य तु संघटनं प्रति आधारत्वम्, उद्देश्यत्वञ्चाभिमतं भवति। फलतो राजशक्तेः विकासस्य मूलं स्थैर्यमाप्नुवत् प्रतीयते।

देवेषु वरुण एव धर्मसंरक्षकः। यद्यत्र पृथिव्यां ज्ञातायामज्ञातायां वाऽवस्थायां मनुष्यैः धर्मं प्रति द्रोहाभिभूतैः शान्तिभङ्गः क्रियते तदा वरुण इव राजा धर्मं रक्षति।[३] ऋग्वेदेऽपि धर्मशब्दः सदाचाररूपे परम्परारूपे वाऽर्थे प्रयुज्यते, यत्र धार्मिकाणि लौकिकानि चाङ्गानि समाविष्टानि सन्ति।[४] राजा वरुण इव धार्मिकान् समग्रानप्यंशान् रक्षति।[५] धर्मविपरीतमाचरणं 'द्रोह' इत्युच्यते, तं च द्रोहं राजा समुन्मूलयति। अस्या एव शक्तेर्मध्यमेन राजा विट्सु शक्तिमत्त्वेन परिणम्यमान आसीत्।[६] एवं सामाजिकीभिः आवश्यकताभिः राजसंस्थायाः विभिन्नानि अङ्गानि विकासं प्रापितानि।[७] त्रसदस्युना पुरुणा च दैवीशक्तिरप्यात्मना सह संयोजिता। राजशक्तेः विभिन्नेष्वङ्गेषु विभिन्नानां दैवीशक्तीनां समावेशस्तेन साकं यथाक्रमं भवति;[८] परं तस्योद्देश्यं राज्ञो लौकिक्याः तस्या आवश्यकताया विकास एव आसीत्, यस्याः प्रभावेण ऋतं सुप्रतिष्ठितं सत् साफल्यमवाप्नुयात्।

एवंविधायां स्थितौ राजशक्तेर्विकासेन साकं काश्चन सामाजिक्यः परिस्थितयोऽपि विकसन्ति। आर्थिकसाधनैः, सामाजिकसङ्घटनैः, वैयक्तिकानां सामाजिकानां च सम्बन्धानाम् अवान्तरस्थितिभिश्च साकमेव वैदिकावैदिकसमाजयोः परस्परं सङ्घर्षः सम्पर्कश्च महत्त्वपूर्णस्थितिरूपतामाभजति। एषां वैदिकसमाजैः साकं भवति सम्बन्धः।

---

१. ऋ० ७।८५।२; ७।६६।१३।

२. ऋ० ३।४३।५; १०।१३७।१।

३. ऋ० ७।८५।५।

४. ऋ० ३।१७।१; ७।८९।५; १०।५६।३; ८।९८।१।

५. ऋ० ४।४।३।

६. ऋ० ३।४३; ४।४।३; ७।१।३; १०।१७३।२।

७. ऋ० ४।१२।३।

८.

एभिः कारणैर्वैदिकसमाजे जातिभिः, वर्णैस्तत्सम्बद्धसंस्कारैः, यज्ञीयकर्मभिः, धार्मिकविधिभिश्च सम्बद्धानां नियमानां स्थापना नवीनरूपतायां पर्यवस्यति। नवीनेऽस्मिन् समाजे अवैदिकेषु समाजेषु सम्मिश्रितेषु सत्सु तेभ्यो वैदिकसमाजस्य सुरक्षा कथं स्यादिति प्रश्नोऽपि समक्षं प्रस्तुतो भवति।

सुरक्षायै सामाजिकविधेराधारस्तस्य प्रयोगाय समुपयुक्तदिशायाः नियन्त्रणं चावश्यकमासीत्। अत एव वैदिकविधिव्याख्यातॄणां ब्राह्मणानां सुरक्षा अनिवार्या जाता। अस्या नवीनस्थितेः सम्बन्धः राजसंस्थया साकमपि संजातः। यतः समाजस्य सर्वाण्यप्यङ्गानि धर्माभिभूतान्यासन् अत एव राजाऽपि धर्माधिष्ठितः सम्पन्नः। कालेऽस्मिन् राज्ञः अभिषेकस्य यद् धार्मिकरूपमभ्युदेति तत् महत्त्वपूर्णां स्थितिमादधाति। अभिषेककाले राज्ञा क्रियमाणे शपथे तस्य धर्मस्य रक्षा अनिवार्यतां जाता यस्मिन् ब्राह्मणव्याख्यानमूलको विधिः सन्निविष्ट आसीत्। अनया दिशा धर्मशक्तेरावरणे राजशक्तिः समावेशिता। राजशक्तेः पार्श्ववर्त्तिनः 'रत्तिन्' आदयो वर्गरूपेण समुदियन्ति। रत्निनां संख्या तेषां सूच्या' प्राथमिकता, राज्ञा सह सम्बन्धश्च स्पष्टयन्ति यद् राज्यसंस्था उच्चवर्गीयसंघटनमभूत्, तथा राजा तस्य प्रधानम्।[१] अत एव राजशक्तिः केन्द्रिता सती शनैः शनैः वंशानुगततामात्मसात् कृतवती।[२]

राज्ञो वंशानुगतपरम्पराया विकासे जातेऽपि ग्रामणीनामन्येषां वा स्थानीयसंघटनानां स्थितिस्तदवस्थैव तिष्ठति तेषु क्रियाशीलताऽपि समवलोक्यते; परं ते राज्ञो माध्यमेन नियन्त्रयन्ते। 'ग्रामणी' पदं राजपुरुष एवाधिकरोति।[३] यद्यपि स्थितावप्यस्यां ग्रामणीनां राजकृतामिव स्थितिर्भवति। समाजस्य विभिन्नविभागतः सेनानीः, पुरोहितः, क्षत्रियः, संग्रहीता, भागधुक् अक्षावाप इत्यादयो राज्यविभागस्य प्रधानपदमधिकुर्वन्तः समवलोक्यन्ते, परं विधिमन्त्रिणो न्यायपालिकायाः प्रधानस्य वा नामाऽपि कुत्रचित् न श्रूयते। एतेन स्फुटमिदं प्रतीयते यत् राजा स्वयमेव न्यायपालिकायाः प्रधानं भवति। यदि वरुणस्य रूपं राज्ञि विकसति तदा नूनं तथैव राजाऽपि धर्मपतिर्भवति।[४] स हि ब्राह्मणान् धर्मांश्च रक्षति; अतो 'राष्ट्रभृत्' इत्युच्यते।[५] राष्ट्रे समाजस्य प्रशासनस्य च विभिन्नाः शक्तयः समाविष्टा आसन्।[६] सेनायाः प्रशासनस्य

---

१. शत० ब्रा० ५।३।१; तै० सं० १।८।९; मै० सं० ११।६।५; तै० ब्रा० १।७।३
२. शत० ब्रा० ५।४।२।८; १२।९।३।३।
३. शत० ब्रा० ३।४।१।७।
४. शत० ब्रा० ५।३।३।९।
५. ऐ० ब्रा० ८।१७।
६. शत० ब्रा० ९।४।१।१।

न्यायस्य च प्राधान्यमात्मसात्कृत्य राजशक्तिः स्वविकासस्य तथाविधं पदमधिकरोति यस्मिन् सार्वभौमताया बीजं समारोप्यते ।

न्यायपालिकायाः प्राधान्यं विधेः संरक्षकत्वञ्चाधिकुर्वता राज्ञा यतो राज्यस्यान्येऽपि वर्गाः स्वशक्त्या नियम्यन्तेऽतस्तस्मिन् सर्वकोष्ठत्वं सुप्रतिष्ठितं तिष्ठति । परिणामतो विधेर्विभिन्नाः सुविधाः प्राप्य राजा 'असामान्य' नागरिकतां भजते । अभिषेककालेऽध्वर्युः राजसहायश्च राजानं दण्डेन स्पृष्ट्वा तं दण्डबाधात् मोचयन्तः 'अदण्डचोऽयम्' इति घोषयन्ति ।[१] एवंविधा न्यायिकसुविधाः राजा अत एव प्राप्नोति येनोचितमेव कुर्यात् कथयेच्च, परमौचित्यनिर्णयः राज्ञ इच्छया न भवत्यपि तु विधेर्माध्यमेन वा तेषां विधिव्याख्यातॄणां माध्यमेन भवति ये समाजस्य प्रातिनिध्यं कुर्वन्ति । अनयैव दिशा राजा विधिसंरक्षकत्वेन रूपेण सम्मान्यते ।[२] फलतो राजा विधिनिर्माता न भवति, विधेश्च सर्वोच्चता तदवस्थैव तिष्ठति । सदाचारपरम्परयोर्माध्यमेन समाजो विधेः स्रोतो भवति । परं कालेऽस्मिन् राजा समाजान्तःपातिषु विभिन्नघटकेषु प्रधानं सत् तिष्ठत्येव । अत एव यद्यपि राजा विधेः नियन्त्रणस्यावसरः प्राप्तुं शक्यते स्म तथापि वस्तुस्थित्या विधिनैव राजा नियम्यते स्वसीमया अबध्यते च । अनेनैव प्रकारेण विधिः सर्वकोष्ठसंरक्षकोऽपि भवति । एवंविधमनुशासनमुल्लङ्घयितुः राज्ञोऽस्तित्वं समाजशक्त्या नियम्यते वा सत्यामावश्यकतायां निःशेषयितुमपि शक्यते ।

धर्मसूत्रकालपर्यन्तं विधेः स्रोतो वेदाः, परम्परा, शिष्टानामाचरणान्येवासन् ।[३] विवादमूलकविधौ तु धर्मपरिषद् विद्वद्ब्राह्मणदशकानाञ्च निर्णय एव प्रामाण्यमासीत् ।[४] निष्कर्षस्तु अयं यद्राजा विधेर्निर्देशनं तस्मिन् स्रोतसि प्राप्नोति यस्मिन् तस्याधिकारो नियन्त्रणं च न विद्येते । जातयः समाजधर्माश्च धर्मशक्त्या सञ्चालिता अभवन् । फलतः धर्मो विधेराधारस्यैव निर्णयं न करोति, अपि तु तस्य प्रयोगमपि नियन्त्रयति । राजा न्यायिकप्रशासने स्वसहायकानां न्यायाधीशानां नियुक्तिं करोति ।[५] तस्यां नियुक्तौ सर्वप्रधानो न्यायाधीशः प्राड्विवाकोऽपि विद्यते ।[६] राजा स्वयं धनमूलविधेर्हिंसामूलविधेश्च प्रशासनस्य प्रधानो भवति ।[७] राजा न्यायाधीशो वा वर्गविशेषस्य पक्षमप-

१. शत० ब्रा० ५।४।७।७।

२. शत० ब्रा० ५।४।४।५।

३. गौ० १।१।१।२; वसिष्ठ० १।४; बौधा० १।१।१।४ ६।

४. बौधा० १।१।१।७-९।

5. Cowell No 545, Vol. V. PP. 203-4.

6. Cowell No 218, Vol. I, P. 11.

७. वसिष्ठ० १६।२।

हाय विधिमनुसृत्य व्यवहरति।[१] अपराधानां निर्णयस्याधाराः अपराधिनः स्तरः, तेषां शारीरिकशक्तिः, अपराधस्य स्वभावादयो भवन्ति।[२] इत्थं वेदाः, तेषामङ्गानि, मीमांसा, पुराणैश्च निर्दिष्टं न्यायिकप्रशासनस्य नियन्त्रणमारभते।[३] किन्तु तैः सह स्थानीयाचाराणां मान्यता अपि स्थिता आसीत्।[४] स्पष्टमिदं यद् राज्यस्य विभिन्नघटकानामुदयेऽपि राजा राज्यं नियन्त्रयितुं न पारयति, स तु स्वयमेव तस्मिन् अवयवभूतस्तिष्ठति।

राजसत्तानां विकासैः सहैव स्थानीयसंघटकानां शक्तिः सुरक्षिता अभवत्, किन्तु केन्द्रस्य निर्देशने एव। ग्रामकर्मचारिणामेवं नगरकर्मचारिणां कार्यसंचालनाय केन्द्रद्वारा विधिसंहिता प्रस्तूयते। अस्यां दशायां तेषां कर्मचारिणां नियुक्तिः राज्यद्वारा राजद्वारा वा भवति स्म।[५] रथकारक्षत्रियसूतनिषादादिजातीनां सम्मिश्रणरूपायाः सामाजिकसमस्यायाः प्रभावो न्यायपालिकायामुपर्यभवत्।[६] स तासां जातीनां नवीन आचारः आसीत्। एतासां सम्मिश्रणेन प्रश्नोऽयं विचारणीयो भवति स्म यत्तेषामाचाराणां समर्थनं मा भवतु ये परम्परया समागतानां वैदिकाचाराणां विरुद्धाः स्युः। अनया समस्यया सह राजशक्तेस्तृतीयचरणस्यापि समुदयो जातः। अत एव राज्ञामसामाजिकीनाम्, वेदविरुद्धानाम्, प्रवृत्तीनामाचाराणां च नियन्त्रणस्य पूर्णाधिकारोऽभवत्। अत एवोक्तम् यद् राजा चातुर्वर्ण्यानामेवं जातिनामाचारं विज्ञाय तान् सुपथि प्रेरयेत्।[७] समाजस्य, विधेरेवं राज्ञः सम्बन्धेऽपि परिवर्तनमजायत। लोकान् राजा अनेन प्रकारेण नियन्त्रितुमारभत यत् सामाजिकनियमानां पालनस्योत्तरदायित्वं तस्मिन्नेवापतितम्। सामाजिकविधेः सम्यक् पालनं भवतु, इदं कार्यं पूर्वं समाजस्य एवं तस्य सङ्घटनानां चासीत् पश्चात्तु तत् स्थाने राज्ञोऽभवत्। अस्मिन् विषये सः सामाजिकसङ्घटनानां साहाय्यं गृह्णाति। फलतः समाजे राज्यप्रभुतायाः प्रभावः पतितुमारभत। गणतन्त्रात्मकशक्तीनां ह्रासैः सह कुलीनतन्त्रस्य विकास्यसम्पर्को राजतन्त्रेण सह जातः। जैनबौद्धसंस्कृतीनां विकासेन राजशक्तिः सामाजिकसङ्घटनानां नियन्त्रणे समर्था जाता। एतासां संस्कृतीनां प्रसारो राजशक्तिद्वारा विशेषरूपेणाऽभवत्। राजशक्तेर्माध्यमेन बौद्धजैनादर्शाः समाजे स्वप्रतिष्ठा स्थापने समर्था अभवन्। फलतः समाजो राजशक्तिमुखापेक्षी जातः। नूतनसंस्काराणां विधीनाञ्च प्राचीनेन सह संघर्षे जाते सति राजा एव निर्णायको भवितु-

---

१. वसिष्ठ० १६।३।
२ गौ० १२।५१।
३. गौ० ११।१-७।
४. गौ० ११।२०।
५. जातक० सं० ५३४, ५३७।
६. गौ० १।१७।
७. वसिष्ठ० १९।७-८।

मारभत् । अत एव न्यायपालिकाया विकासः कार्यपालिकायाः अध्यक्षभूतस्य राज्ञ एव निर्देशने विकसितुं प्रारभत ।

अर्थशास्त्रं यावत्सामाजिकस्थितौ महत्परिवर्तनं सम्पन्नप्रायमेव भवति, राजशक्तेः केन्द्रियशक्तौ विकासश्च जातः । समाजस्य घटकाः शासने निर्भरतामुपगच्छन्ति । चत्वारो वर्णा आश्रमाश्च स्वसंयमनाय राज्ञः साहाय्यं वाञ्छन्ति । राजा एतत्सर्वं दण्डेन विदधाति ।[1] न केवलमेतावदेवापितु सर्वधर्माणां नाशे राजा सर्वधर्मप्रवर्त्तकोऽप्यभवत् ।[2] ततो धर्मप्रवर्त्तकानां शिष्टानामपेक्षया राजा धर्मप्रवर्त्तकोऽभवत् । यथा अशोको धर्मचक्रप्रवर्त्तकोऽर्थशास्त्रस्य राजा धर्मप्रवर्त्तकः । किन्तूभयोरन्तरमिदं वर्तते यदर्थशास्त्रस्य राजा शास्त्रपरतन्त्रो भवति, परन्तु अशोकस्तु स्वयं धर्मचक्रप्रवर्त्तको राज्याध्यक्षश्चाऽभवत् ।

अशोककाले "मानवोऽभ्युदयायोत्पन्नस्तथाऽभ्युदयकर्तुं स बाध्योऽस्ति" अयं सिद्धान्तो विकसति । अतः स व्यक्ति तथा समाजं स्वाज्ञापालनाय विवशीकरोति । स नैतिकनियमान् तथा आचारान् जनतायामारोपयति । जनताया नैतिकता तथा कल्याणं तदेव यत् स नैतिकं तथा कल्याणमूलकं विजानाति । वस्तुतोऽशोकस्य प्रभुशक्तौ बौद्धधर्मस्याऽपि नियमनं नासीत्; यतः स स्वयमेव धर्मचक्रप्रवर्तक आसीत् । राज्यचक्रस्य निर्देशने एव धर्मचक्रमग्रेसरी भवति तच्छासनस्य प्रधानरूपेण जनतायाः भाग्यविधायकरूपेण तथा स्वयं निर्धारितनैतिकतानिर्णायकरूपेण सम्मुखमापतति । यस्य कार्यक्षेत्रे बौद्धसंघः, जैनभिक्षवः, ब्राह्मणाः, आजीवकप्रभृतय आयान्ति । एवंविधस्य धर्ममहामात्रस्य स्थापना कौटल्यस्य देवताध्यक्षाद् भिन्नेंऽशेऽभूत्, यस्मिन् राज्यनैतिकतायाः कार्यान्वियनस्य प्रयास आसीत्, न तु विधिनैतिकताया व्यवहारस्य ।

## धर्मशास्त्रमर्थशास्त्रञ्च

धर्मसूत्रोत्तरकाले वैदिकवचने तात्कालिकसामाजिकसमस्यानामुचितस्य व्यावहारिकस्य च समाधानस्याधारत्वाप्राप्तौ स्मृतयः एतत्कार्यमपूरयन् । इत्थं जीवनस्य समग्रसामाजिकव्यवहारे स्मृतयो वेदानां स्थानापन्नतां गताः, यस्यां वैदिकाधारैः सह तत्कालस्य परम्पराणाम्, व्यवहाराचारस्य सदाचारस्य च समावेशोऽभवत् । फलतो

---

१. चतुर्वर्णाश्रमो लोको राज्ञा दण्डेन पालितः ।
स्वधर्मकर्माभिरतो वर्तते स्वेषु वर्त्मसु ॥
(अर्थशा० १।४।१६)

२. चतुर्वर्णाश्रमस्यायं लोकस्याचाररक्षणात् ।
नश्यतां सर्वधर्माणां राजा धर्मप्रवर्त्तकः ॥
(अर्थ० ३।१।५०)

धर्मशास्त्रेषु व्यवहारस्यादर्शस्य च समन्वयोऽभवत् । इदं कथनन्तु कठिनं यद् राज्यं धर्मशास्त्राणि 'संविधान' इव व्यवहाराय विवशा आसन्, किन्त्विदं तु स्पष्टमेव यद्धर्मशास्त्राण्येव न्यायिकप्रशासनस्याधारा आसन् । व्यवहारे तेषां कियन्मात्रायानुपयोगो भवन्नासीदिति तु पुरातात्त्विकप्रमाणैर्न साधयितुं शक्यते । निबन्धैः, टीकाभिः, सामान्यैतिहासिकसामग्रीभिश्च सिद्धं भवति यत्तानि जीवनस्य व्यवहारैः सहान्यतमरूपेण सम्बद्धा अभवन् । हेनरीमेनमहोदयस्यायं सिद्धान्तो यद्धर्मशास्त्रं स्वयुगस्य सामाजिकराजनीतिकस्थिति व्यवहारस्य स्थाने आदर्शनिर्देशनमात्रं कुर्वन्ति,[१] अद्य न ग्रहीतुं शक्यते ।

धर्मशास्त्रेषु मनुयाज्ञवल्क्यनारदस्मृतयोऽन्यतमरूपेण महत्त्वपूर्णाः सन्ति । एतस्यां देशकालपरिस्थितीनां पूर्णः प्रभावोऽपतत् । मनुस्मृतौ सीमितक्षेत्रस्य राजनीतिः, ग्रामीणार्थव्यवस्था, सामन्तवादीयुगस्य प्रारम्भरूपं लभ्यते, यस्यां विभिन्नसमुदायानां संघटनानां सम्प्रदायानां च मूलाधिकारः स्वीयविधिषु स्वीकृताः सन्ति । एतेषामान्तरिकस्थितौ राज्यं हस्तक्षेपकारिण्या संस्थायाः स्थाने निर्णायकरूपे आसीत् । धर्मशास्त्राणि लिखितालिखितायाः धार्मिकविधेः प्रभुताः स्थापिताः कुर्वन्ति । मनुस्मृतौ व्यवहारविधिम् ( civil ) व्यापारिकविधिश्च ( commercial law ) अपराधविधेः ( penal law ) भिन्नं न कृतम् । बृहस्पतिनारदकात्यायनस्मृतिषु एवं प्रकारस्य प्रभेदः प्राप्यते । विभिन्नस्मृतिषु मूलाधार एक एव सम्भाव्यते, किन्तु देशकालपरिस्थितिसापेक्षतया सामान्यवैमत्यमप्यायाति । मनुः सदाचारमात्मप्रियञ्च विधेः स्रोतो मत्वा न्यायपालिकायां विवेकस्यैवं व्यक्तेर्व्यक्तित्वस्य महत्त्वं स्वीकृतवान् । अस्याः स्थितेर्विकासो याज्ञवल्क्ये तर्कन्यायहेतुस्वीकारादधिकं याति । अनेनैवाधारेण कथ्यते यद् याज्ञवल्क्यो मनोरपेक्षया कौटल्येनाऽधिकं प्रभावितोऽस्ति । यावद् व्यवहारविधेरपराधविधेश्च पृथक्करणस्य, स्थानीयाचारस्य, परम्परायाः प्रथायाश्च महत्त्वादिनां प्रश्नो वर्त्तते । आंशिकरूपे एतत्सत्यं ग्रहीतुं शक्यते किन्तु मूलत उभौ विचारकौ ऐक्यं प्राप्तौ वर्तेते । ब्राह्मणानां सामाजिकस्थानम्, राज्ञो विधिपरवशता राजशासने नियन्त्रणमर्थशास्त्रोपरि धर्मशास्त्रप्रभुता आदिसु याज्ञवल्क्यो मनोरभिन्न एव वर्तते ।

धर्मसूत्रोत्तरधर्मशास्त्रार्थशास्त्रकाले लौकिकविषयाणां सञ्चालने न्यायपालिकायाः सर्वाङ्गीणं संघटनं भवितुमारभत् । ग्रामात् केन्द्रं यावत् न्यायालयानां स्थापना व्यवस्थिता भवति । विवादविषयाणां सूची प्रस्तुताऽभवत् अभवच्च न्यायिकप्रक्रियायाः व्यवस्था । अर्थशास्त्रातिरिक्तंधर्मशास्त्रसम्प्रदाये मनुः राजधर्मस्य याज्ञवल्क्यो व्यवहारस्य च स्वतन्त्रमध्यायमलिखत् । धार्मिकविधिः, राज्यविधिः, सदाचारः, परम्परा इत्यादीनां नूतनेन प्रकारेण समन्वयो जातः । व्यक्तिः राष्ट्रियन्यायालयेन स्वस्वर्गीयन्यायालयेन च

1. Sir Henry Maine, Ancient Law, P. 14.
Early Law and Custome, P. 7.

सह सम्बद्धा आसीत् । अत एव न्यायपालिकाया भारते इदानीं व्यापकरूपेण सङ्घटनं जातम् । वर्गीयन्यायालयेषु तेषां प्रक्रिया, निर्णयस्याधारः, कार्यान्वयनादीनां व्यवस्थैवं जाता, यद्राष्ट्रविधिना सह सम्बन्धस्वीकारे ते तस्माद् विरुद्धं न गन्तुमशक्नुवन् । किन्तु केषाञ्चित् सम्प्रदायस्त्रीदासान्त्यजनास्तिकराजकर्मचारिप्रभृतिनामधिकारेषु प्रतिबन्धः स्थितप्राय एवासीत् । अपराधदण्डसंहितयोर्विस्तृता व्यापिका न्यायालयेन च सम्बद्धा सूची पुरत आयाति । अस्य व्यापकं स्वरूपमर्थशास्त्रे लभ्यते । अस्य कालस्य आसु विशेषताषु स्वयं भावः सर्वथा सुरक्षित आसीद्, यद्राजा स्वंविधिनिर्मातारमविज्ञाय स तस्य संरक्षक एव तिष्ठेत् ।

अर्थशास्त्रे उद्धृतेनोशनसो मतेन स्पष्टं भवति यद्धर्मसूत्रैः सहैव धार्मिकविधौ व्यवहारविधेरुच्चतायाः व्यावहारिकताया वा प्रयासः क्रियमाण आसीत् । अर्थशास्त्रस्य परिभाषा यस्मिन् रूपे कृता अस्ति तस्यां राजनीतिकार्थिकसिद्धान्तस्य, जनप्रशासनस्य, विदेशनीतेः, युद्धविद्यायाः, व्यवहारविधेः, सामाजिकसङ्घटनस्य च समावेशः क्रियते ।

अर्थशास्त्रं व्यावहारिकशास्त्रभूतेन वैदिकवचनानां विस्तारमात्रं नास्ति, अस्मिन् व्यक्तेः, समाजस्य, परिस्थितीनां च प्रयोगो विवेकाधारे कृतोऽभवत् । अर्थशास्त्रे कुत्राऽपि कस्याऽपि धर्मशास्त्रोद्धारणाभावेन स्पष्टमिदं यत् कौटल्येन परम्परायाः "अन्ध-प्रवाहः" न स्वीकृतम् । तथा तस्योद्देश्यं सकारात्मकविधेः (positive law) विकास एवाऽसीत् । स राजनीतिशास्त्रस्य सैद्धान्तिकपक्षस्य स्थाने तस्य व्यावहारिकपक्षेषु बलं प्रददति । अत एवार्थम् जीवनस्याधारोऽमन्यत । दण्डनीतेः परिभाषायां भौतिक-शक्तीनां प्रभावः स्वीकृतः । एवं प्रकारेणार्थशास्त्रस्य संक्षिप्तरूपं 'जनोपलब्धिकृते शासनविज्ञानम्' अभवत् । किन्तु तासूपलब्धिषु वैदिकसमाजस्याकारस्याधारोऽस्वीकृतो नाऽभवत् । अस्यैवाकारस्य रक्षायाः राज्यद्वारा सम्पादनेन राजशासनस्य महत्त्वं विधेः स्रोतसि महत्त्वपूर्णं भवति, किन्तु राज्ञो विवेकसम्बन्धिनोऽधिकाराः, सदाचाराः, सामा-जिकविधिभिः सीमिताः सन्ति ।

अर्थशास्त्रे लौकिकविधेः (secular law) सम्प्रभुतायाः प्रतिपादनं कृतमस्ति । धर्मस्तस्योपर्याश्रिता पारस्परिकनैतिकता च राज्यशक्तेः साधनं जाते । तेषां प्रयोगो राज्यवैदिकसामाजिकसङ्घटनस्य, यस्मिन्नर्थकामयोः समन्वय एवं व्यक्तेर्व्यक्तित्वविका-सेन सह सामाजिकसंस्थानामुचितं मूल्याङ्कनमासीत्, सुरक्षायां कर्तुमारभत । "धर्मस्य मूलमर्थः" अनेन समाजस्य भौतिकमूल्यानां प्राधान्यमनिवार्यमासीत् । अस्य युगस्या-र्थिकव्यवस्थायां सामन्तवादिभूमिव्यवस्थायाः धनवाद्यर्थव्यवस्थायाश्च बीजारोपणं भव-न्नासीत् । अस्य प्रभावो धर्मे संस्कारेषु चाभवत् । ते उपयोगितावाद्याधारेषु पतितु-मारब्धः ।

बौद्धक्रान्तेरनन्तरं वर्णव्यवस्थायाः पुनः स्थापनायाः कारणमेतदप्यासीद् यदस्यामस्या आवश्यकताया उचितसमन्वय आसीत्। अस्मिन् युगे वर्णव्यवस्थाया रूपं विस्तृतमभवत्, सामाजिकराजनीतिकसम्बन्धेषु चावैदिकजातिभ्यो नागरिका अगमन्। एषां प्रभावो न्यायिकप्रशासने, आर्थिकनियोजने, राज्यस्य सप्ताङ्गसङ्घटने, तस्य कल्याणकारिरूपे चाभवत्। अर्थशास्त्रे विभागानां नियुक्तिषु वैदिकानां प्राथम्यं तु स्वीकृतं किन्तु तं मनुस्मृतिवत् पुरोहितान् ब्राह्मणांश्च यावत् सीमितान् नाकरोत्। विभिन्नविभागानां सङ्घटनेषु कौटल्येन या योग्यता प्रदत्तास्तासु व्यक्तेः क्षमताया महत्त्वं स्वीकृत्य पारस्परिकसमाजसङ्घटने सुधारः प्रस्तुतः कृतोऽभवत्। तस्मिन् सामान्यतया वर्णजातिनामाधारे सौविध्यमस्वीकृतमभवत्। स्तरस्य स्थाने कार्यममन्यद् आधारः क्रूरदण्डव्यवस्थायाः स्थाने 'यथोचितां' व्यवस्थां स्वीकृत्यास्याः प्रभावो न्यायिकप्रशासनेऽपि व्यक्तः कृतोऽभवत्। न्याये दासानामप्यार्यैः समानं सौविध्यमलभ्यत अमन्यत यदार्याः कदाऽपि दासा न भवितुं शक्नुवन्ति। विभिन्नावश्यकताभिः सहास्याः नूतनसामाजिकव्यवस्थायाः संरक्षणाय अपि राज्ञः सुरक्षा आवश्यिका आसीत्, अर्थशास्त्रेण तस्यै प्राथमिकता प्रदत्ता।

अर्थशास्त्रं यावद्राज्यस्य विभिन्नघटकानां पूर्णविकासो भवत्येव, किन्तु राज्ञि एव विशेषतो बलं दत्तमस्ति। राज्योत्पत्तेर्विवरणमनेन प्रकारेण प्रस्तुत यद्राज्ञोऽभावे 'मात्स्यन्यायो' भविष्यति। अनेन राज्ञोऽनिवार्यता सिद्धयति। अतो भण्डारकरमहोदयस्यायं निष्कर्षः सम्यक् प्रतिभाति यत् अर्थशास्त्रे सामाजिकानुबन्धो नास्ति, अपि तु शासनस्याऽनुबन्धोऽस्ति, यस्मिन् राज्ञः तत्प्रजायाश्च विवेचनं वर्तते। कौटल्यः राजशब्दस्थाने 'स्वामी' इत्यस्य प्रयोगः सप्ताङ्गे कृत्वा गणराज्यस्य कृते सिद्धान्तमिदं व्यावहारिकं कृतवान्, अन्येषां सम्प्रदायानां खण्डनं विधाय 'स्वामी' इत्यस्य महत्त्वमवर्धयच्च। अर्थशास्त्रे राजा प्रजायाः सेवकरूपेण निरूपितो वर्त्तते, तस्य शक्तिस्रोतश्च प्रजा एवासन्। अत एव राजा धर्मप्रवर्त्तकरूपेण स्थितोऽपि न हि सः जनताया नैतिकतायां हस्तक्षेपं करोति नैव तस्या निर्देशनम्। धर्मसूत्राणामनन्तरमर्थशास्त्रे सम्प्रभुताया नूतनं स्वरूपं दृष्टिगोचरमभवत्। यस्मिन् सर्वे खलु भागं गृह्णन्त आसन्, सहैव राज्यं जनकल्याणस्य न्यायिकप्रशासनस्य च रूपेऽनेकानि खल्वीदृशानि कार्याणि स्वाधिकारे गृहीतानि आसन् यानि पूर्णसामाजिकीनामार्थिकीनाञ्च संस्थानां च तथा जनजातीनां सभाभिः सम्पाद्यमानानि आसन्। धर्मशास्त्रापेक्षयाऽर्थशास्त्रे वर्णव्यवस्थाया महत्त्वमपि प्राशासनिकसंस्थायां न्यूनमेवाऽभवत् किन्त्वर्थशास्त्रं भारतीयसमाजस्य बहुलवादिष्वाकारेषु कुत्राऽपि परिवर्त्तनं नाऽकरोत्। व्यक्तिः, न खलु राज्यविधेः, वरन् स्वसमाजस्य नियमव्यवस्थाऽऽचारसदाचाराणामेव निर्देशने कार्यं कुर्वाण आसीत्। राज्यमस्मिन् कार्ये सम्यग्योगदानं ददाति स्म।

कोऽस्ति तावद्धर्मशास्त्रार्थशास्त्रयोः परस्परं सम्बन्धः, अस्मिन् मूलरूपेण दृष्टिकोणं त्रयं वर्तते:—

(१) अर्थशास्त्रं धर्मशास्त्रस्याङ्गम् ।

(२) अर्थशास्त्रं धर्मशास्त्रद्वारा स्वतन्त्रवैदिकाधारेण सामाजिकव्यवहारेण च विकसितमभवत् ।

(३) अर्थशास्त्रं धर्मशास्त्रस्य प्रतिक्रिया अस्ति ।

प्रथमपक्षस्य प्रतिपादनं समर्थनञ्च विण्टरनित्जमहोदयः, पी० वी० काणे महोदयश्च कुरुतः ।[1] किन्त्वस्य पक्षस्य पुष्टिकरणे तथ्यापेक्षया तर्काधिक्यं वर्तते । द्वितीयपक्षस्य समर्थनं रङ्गस्वामी आयङ्गरमहोदयस्तथा नरेद्रनाथ ला महोदयश्च कुरुतः । एतेषां मतानां समीक्षायां काणे महोदयेनार्थशास्त्रं दृष्टार्थस्मृतिरूपं मन्यमानेनोभयोः रचनाकालस्य तुलनाया आधारे स्वस्य प्रथमपक्षीयमतस्य स्थापना कृता । तृतीयपक्षस्य सम्पुष्टिः सर्वप्रथमम् ए० वी० कीथमहोदयेन कृता । जायसवालमहोदयेन तस्य स्वरूपन्नवीनरूपेण प्रस्तावितम् । एतेषां त्रयाणामुक्तपक्षाणां निष्कर्षे बी० ए० सैलतोरमहोदयेन प्रथमः पक्ष एवोचित इत्युपपादितम् ।[2] किन्तु तेन दण्डनीतिमर्थशास्त्रञ्चोभावप्येकं मत्वाऽर्थशास्त्रापेक्षया दण्डनीतिशब्दस्यैतिहासिकमीमांसाया स्वालोचना स्थिरीकृता । वस्तुतो दण्डस्य, दण्डनीत्यादीनां च स्थानेऽर्थशास्त्रस्य रूपरेखा, तस्यामुद्धृतानां सम्प्रदायविचारकविचाराणामुचितमीमांसायां सत्यां द्वितीयपक्षस्य तथ्यता ज्ञायते ।

अनुशासनपर्वणि बृहस्पत्युशनसः शास्त्रस्य चर्चाऽस्ति ।[3] शान्तिपर्वणि बृहस्पतिः, गौरशिरा, काव्यः, महेन्द्रः, मनुप्राचेतसः, विशालाक्षश्चेत्येते राजशास्त्रप्रणेतारः कथिताः सन्ति ।[4] शान्तिपर्वण्येवैकत्र शबरमतस्योल्लेखः कृतोऽस्ति ।[5] अग्रिमाध्याये राजशास्त्रस्योपरि भाष्यस्याऽपि सूचना मिलति ।[6] कौटल्यः स्वग्रन्थस्य प्रतिज्ञायां स्वीकृतवान् अस्ति यतः स्वपूर्ववर्त्तिनामर्थशास्त्रिणां विचारान् सम्यगधीत्य स्वस्यार्थशास्त्रस्य प्रणयनमकरोत् । तेन मानवबार्हस्पत्यौशनसपाराशराम्भीयादिनां स्वपूर्ववर्त्तिनां पञ्चसम्प्रदायानां सूचना दत्ता । कतिपयार्थशास्त्रिणं बाहुदन्तिपुत्रदीर्घपारा-

---

1. P. V. Kane, the History of Dharma Shastra, Vol. III. PP. 7, 810.
2. B. A. Saletore, Ancient Indian Political Thought and Institutions, pp. 21-23.

३. अनुशासन० ३९।८;
४. शां० ५८।१-३।
५. शां० १०२।३१-३२।
६. शां० १०३।४४।

यणघोटकमुखकणिकभारद्वाजकात्यायनकिञ्जल्कपिशुनपुत्रकौणपदन्तपराशरपिशुनवात - व्याधिविशालाक्षप्रभृतिविदुषां चोल्लेखः कृतोऽस्ति। एतदतिरिक्ताऽपि राजशास्त्रस्य सूची प्राप्ता भवति।[१] अर्थशास्त्रे लोकायतिकानां साङ्ख्ययोगयोश्च समावेशो वर्तते किन्तु कस्यचिद् धर्मशास्त्रस्योल्लेखो नाऽस्ति। बृहस्पतिमन्वादयो धर्मशास्त्रिणो न सन्ति यतो हि अर्थशास्त्रस्य बार्हस्पत्ये मानवसम्प्रदाये च चतस्रो विद्या अस्वीकृताः सन्ति; मनुस्मृतिशुक्रनीत्यादिषु चतस्रो विद्याः स्वीकृताः सन्ति।[२] धर्मशास्त्रे स्वतन्त्रो राजधर्मः प्राप्यते किन्त्वर्थशास्त्रे धर्मस्य सम्बन्धे विचाराय न कश्चिदध्यायः स्वतन्त्ररूपेण वर्तते। राजशास्त्रस्योत्पत्तिं धर्मशास्त्रेणास्वीकृत्य तस्य सम्बन्धो ब्रह्मणा मन्यते। शान्तिपर्वानुसारेण मात्स्यन्यायं दूरीकर्त्तुं ब्रह्मा दशलक्षाध्यायसंवलितं नीतिशास्त्रं व्यरचयत्। यस्मिन् धर्मार्थकाममोक्षाः वर्णिता आसन्। तं नीतिशास्त्रं शङ्करविशालाक्षमहोदयेन संक्षिप्य दशसहस्राध्यायेषु सङ्गृहीतम्। अस्याध्ययनमिन्द्रेण कृतम्। तेन च पञ्चसहस्राध्यायेषु सङ्गृहीतम्। पुनश्च काव्यस्तदपि संक्षिप्यैकसहस्राध्यायेषु क्रमबद्धं कृतवान्।

नीतिप्रकाशिकानुसारेण ब्रह्मा, महेश्वरः, स्कन्दः, इन्द्रः, प्राचेतसमनुः, बृहस्पतिः, शुक्रः, भारद्वाजः, वेदव्यासः, गौरशिराश्च राजशास्त्रस्य संस्थापका आसन्।[३] अश्वघोषोऽपि बृहस्पतिं भारद्वाजञ्च राजशास्त्रस्य प्रणेतृरूपेण निरूपितवान्।[४] अनेन विवरणेन स्पष्टं भवति यद् राजशास्त्रं यस्य रूपमर्थशास्त्रे विकसितमभवत्, धर्मशास्त्रेण समानं न तु तस्याङ्गमस्ति।

न्यायपालिकायामर्थशास्त्रे एवं धर्मशास्त्रे चैकः सम्प्रदायः प्रामाणिक आसीत्। अस्मिन् सम्बन्धे मनुस्मृतेः पूर्ववर्त्तिधाराया अध्ययनं कुर्वाणेन जायसवालमहोदयेनाऽयं निष्कर्षो दृष्टिपथमवतारितः। यल्लौकिकविधिरूपेऽर्थशास्त्रस्य परम्परा प्रामाणिक्यासीत्। अत्र तेन बूलरमहोदयस्यापि मतं गृहीतम्। जायसवालमहोदयस्य मतानुसारेणानया परम्परया सह धर्मस्य समन्वयः प्रथमं मनुना कृतः। तेन शुङ्गवंशीयशासनात् समाजे 'ब्राह्मणवादिता' निक्षिप्ता।[५] जायसवालमहोदयस्य मतं विविच्य केचिन्मूलभूतसिद्धान्ताः निःसरन्ति—

---

1. P. V. Kane, Bombay University Journal, Vol. XI, pp. 73-83.
N. N. Law, Modern Review, 1918, 1919.
Studies in Ancient Indian Culture, Appendix.

२. अर्थशास्त्रम्, १।२।२-६।

३. नीतिप्र० १।२१-२२।

४. बुद्धचरि० १।४६। SBE, Introduction, p. 26.

5. K. P. Jayaswal, Manu and Yagnavalkya, Lecture, I.

(१) मनुना प्रतिपादितविधेर्मूलं गौतमबौधायनापस्तम्बादिषु सूत्रकारेषु वर्तते।

(२) सम्भवमेतद् यत् सेनापतिपुष्यमित्रस्य काले मनुस्मृतेर्नवीनीकरणमभवत् किन्तु तस्याः क्रमः प्राचीन एवास्ति।

(३) मनुस्मृतौ विधेः स्वरूपं यस्मिन् रूपे विकसितमभवत्, तस्य निरीक्षणेन स्पष्टं भवति यत्तस्य मूलं तस्यां परम्परायां वर्तते यस्यां विधिः कार्यं च समाने आस्ताम्।

जायसवालस्येदं कथनं युक्तियुक्तं प्रतिभाति यदर्थशास्त्रस्य परम्परायां मनुरासीत् किन्त्विदं कथनं क्लिष्टतरं यत्स एवार्थशास्त्रीयमनुः मनुस्मृतावेव वर्तते। मनोः परम्परा ऋग्वेदादेवारभ्यते, तस्य निरीक्षणेन स्पष्टं भवति यन्मनुस्मृतेर्मनुरर्थशास्त्रिणो मनोर्भिन्नः।[1]

जायसवालस्येदं कथनं समीचीनं यन्मनुस्मृत्यर्थशास्त्रयोर्मध्ये पर्याप्तभेदो वर्तते। परञ्चैतदपि कथयितुं न शक्यते यदपराधविधिसम्बन्धे अर्थशास्त्रं वीभत्सपरिगणनमकरोत्। दण्डसम्बन्धे जायसवालस्य कथनमस्ति यद्धर्मशास्त्राणि ब्राह्मणानां सौविध्यं विशेषरूपेण प्रतिपादयन्ति। परञ्चार्थशास्त्रस्यापि प्रणेता ब्राह्मण एवासीत्। तत्रापि ब्राह्मणेभ्यः सौविध्यानि उपलब्धानि सन्ति। अपराधदण्डयोः सम्बन्धे वर्णव्यवस्थायाः प्रभावः कौटल्येऽपि समापतति। कौटल्यः क्षत्रियशासकान् शास्त्रनिर्देशनै स्थापयितुं प्रयतते। जायसवालमहोदयेन धर्मशास्त्रकारैरर्थशास्त्रस्य विचारा एव प्राथमिकत्वेन स्वीकृता इत्युक्तम्, किन्तु न किमपि प्रमाणं दत्तम्। वास्तविकन्त्विदं यन्मनुयाज्ञवल्क्यौ अर्थशास्त्रं धर्मशास्त्रस्य सहायकमेवामन्येताम्।[2] जायसवालमहोदयेन मनुस्मृतिः महाभारतं च प्रायः समकालिकमर्थशास्त्रस्योत्तरवर्त्ति च स्वीकृतमस्ति। सहैवैतदपि तेषां कथनमस्ति यन्महाभारते व्यवहारविधिं धर्मशास्त्राणां समानमेवामन्यत। अनेन कथनेन जायसवालमहोदयः स्वयमेवासङ्गत्यां परापतति। यदि मनोरिव महाभारतस्यापि कालो ब्राह्मणवादस्य ब्राह्मणधर्मस्य पोषकश्चासीत्तदा तस्मिन् समये व्यवहारविधिर्ब्राह्मणधर्मस्य समानकक्षायां कथमभवत्? जायसवालमहोदयस्य मतं समीक्षितमन्यैर्विद्वद्भिः।[3] निष्कर्षस्त्वयं तेषां यदर्थशास्त्रधर्मशास्त्रयोः समन्वय आसीत्।

---

1. Dr. Buhler, Laws of Manu, Introduction.
2. S. Vardachariar, Hindu Judicial System, P. 42.
   K. V. Rangaswami Aiyangar, Some Problemes of the Manusmriti.
3. Prof. Rangaswami Aiyangar, Introduction to Raj Dharma, Vyavahar Khand of Krtya Kalpataru, pp. 5-10.
   S. Vardachaviar, Hindu Judicial System, pp. 39-54.

धर्मशास्त्रकाराः पुरुषार्थचतुष्टयस्य समग्रमंशमगृह्णन् । कौटल्योऽपि पुरुषार्थस्य त्रिवर्गस्य च रक्षां राज्यस्य दायित्वरूपेण मन्यते । मनोः पूर्ववर्त्तिन आचार्या आसन्, तेषु परस्परं मतभेद आसीद् यद्धर्मार्थकामेष्वेकस्यैव द्वयोरेव वा प्राधान्यमस्ति । केचिद्धर्मार्थौ केचित् कामार्थौ, केचित् केवलधर्मः, केचिदर्थमेव प्रधानतया स्वीचक्रुः । किन्तु मनुः सर्वेषां महत्त्वं स्वीचकार, परस्परमेतेषां समन्वयमपि चाकरोत् ।[१] निष्कर्षमिममुरीचकार सः, यद्राजा न्यायालिकायाः सञ्चालनं स्थानीयसदाचारं सार्वभौमविधिञ्चानुसृत्यैव कुर्यात् ।[२] तथ्यमिदं याज्ञवल्क्येन स्पष्टतरं प्रतिपादितम्, यत्कार्यसञ्चालनं धर्मशास्त्रमनुस्मृत्यैव कर्त्तव्यम् ।[३] विज्ञानेश्वरेणास्य व्याख्याया-मर्थशास्त्रं पूर्णरूपेण पृथक्कृतम् । विश्वरूपेणास्य स्पष्टीकरणमनेन रूपेण कृतं यद्राजाऽर्थ-लोलुपो न भवेत् । विज्ञानेश्वरेण याज्ञवल्क्येन च एषा स्थितिः स्पष्टा जायते यद्धर्म-शास्त्रस्य प्राधान्यं स्वयं सिद्धं किन्त्वर्थशास्त्रस्याप्यनुसरणं कर्त्तव्यं[४] तथा-ऽर्थशास्त्रेभ्यो धर्मशास्त्राणि बलवत्तराणि भवन्तीति ।[५]

धर्मशास्त्रकारा उभयोः पक्षयोः समन्वयस्यापि प्रयासमकुर्वन् । नारदः कात्याय-नश्चालिखद्यद्धर्मशास्त्रार्थशास्त्रयोः समन्वयेनैव न्यायपालिकायाः सञ्चालनं कर्त्तव्य-मिति ।[६] कात्यायनः सभ्यानां योग्यतासु धर्मशास्त्रेण सहार्थशास्त्रस्याप्यध्ययनमा-वश्यकं मन्यते "**धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैः ।**" अस्योपरि जीमूतवाहनेन लिखितं यद्धर्मशास्त्रार्थशास्त्रयोः समन्वयं कुर्वाणो न्यायपालिकायाः सञ्चालनं कुर्यात् ।

---

१. धर्मार्थावुच्यते श्रेयः कामार्थौ धर्म एव च ।
अर्थ एवेह वा श्रेयस्त्रिवर्ग इति स्थितिः ॥
( मनु० २।२२४ )

२. प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः ।
अष्टादशसु मार्गेषु निबद्धानि पृथक् पृथक् ॥
( मनु० ८।३ )
धर्मं शाश्वतमाश्रित्य कुर्यात्कार्यविनिर्णयम् ।
( मनु० ८।८ )

३. व्यवहारान्नृपः पश्येद् विद्वद्भिर्ब्राह्मणैः सह ।
धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥
( याज्ञ० २।१ )

४. धर्मशास्त्रस्य प्राधान्यं दर्शयितुं विशेषोपन्यासः विचारेऽर्थशास्त्रस्याऽप्यनुसर्तव्यत्वात् ।

५. अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ।
( याज्ञ० २।२१ )

६. धर्मशास्त्रार्थशास्त्राभ्यामविरोधेन पार्थिवः ।
समीक्षमाणो निपुणं व्यवहारगतिं नयेत् ॥

यदा कश्चिदीदृग्विरोध उत्पद्येत, यस्य किमपि समाधानमार्गो न भवेत्तदा धर्मशास्त्रस्यैव पद्धतिः स्वीक्रियेत। कात्यायनेनैकस्मिन् स्थाने निरूपितमस्ति यद्धर्मशास्त्रार्थशास्त्रे द्वौ स्कन्धौ वर्तेते न्यायपालिकायाः। स्मृतिचन्द्रिकायां नारदवचनमाश्रित्य लिखितं वर्तते यद्यत्रार्थशास्त्रधर्मशास्त्रयोर्विवादः स्यात्तत्रार्थशास्त्रपक्षं विहाय धर्मशास्त्रस्यैव पक्षं स्वीकुर्यात्। पुनः स्मृतिचन्द्रिकाऽलिलिखद्यत्सामान्यतया यदि कश्चिद्विरोधो न स्यात्तदोभयोरप्यनुसरणं कुर्यात् —"एतच्चोभयविधिशास्त्रानुसरणं तयोर्मिथो विरोधाभावः।" वीरमित्रोदयेन लिखितमस्ति यदर्थशास्त्रसम्बन्धो दृष्टेन सह, अदृष्टेन च सह धर्मशास्त्रस्य वर्तते। फलतो धर्मशास्त्रस्य क्षेत्रं व्यापकं महत्त्वपूर्णञ्च वर्तते।[१] जायसवालमहोदयस्यैतत्कथनं वर्ततेऽयं यत्कौटो व्यवहारशास्त्रस्य धर्मशास्त्रापेक्षयाऽधिकं महत्त्वं ख्यापयति। केचिद्धर्मशास्त्रकारास्तट्टीकाकाराश्चार्थशास्त्रं बलवत्तरममन्यन्त। अर्थशास्त्रसम्प्रदाये एषा मान्यताऽस्वीकृताऽस्ति। जायसवालसदृशाः केचिद्विद्वान्सः राजशासनविवादे धर्मव्यवहारचरित्रराजशासनं चेति चत्वारश्चरणा मन्यन्ते किन्त्वेषु पश्चिमः पूर्वबाधकोऽस्ति। कौटल्यस्यास्य श्लोकस्याधारेणार्थशास्त्रसम्प्रदायस्य बलवत्तायाः प्रक्षेपं कुर्वन्ति।

## गणराज्यव्यवस्था

प्रारम्भिकवैदिककालिकानां गणानां भाषायामनुवादः "कबीला" इति कर्तुं शक्यते।[२] गणशासनपद्धतौ जायसवालस्याध्ययनं महत्वपूर्णं विद्यते। स हि अमूं जनतन्त्रात्मकशासनपद्धतेर्मूलत्वेनावगच्छति। अन्येऽपि बहवो विद्वांसोऽनन्तरमस्मिन्विषये बहुविचारं चक्रुः।[३] प्रायो बहुषु अंशेषु ते जायसवालमतखण्डनमप्यकार्षुः, तथापि अविप्रतिपन्नमिदं यज्जायसवालेनास्मिन्विषये नूनं दिङ्निर्देशः कृतः।

---

१. धर्मशास्त्रार्थशास्त्रयोरविरोधेन न्यायदर्शनं कार्यम्...विरोधे तु धर्मशास्त्रमेवादरणीयं तस्य बलवत्वात्।

अनुशासीद्धि धर्मेण व्यवहारेण संस्थया।
न्यायेन च चतुर्थेन चतुरन्तां महीं जयेत्॥
संस्थया धर्मशास्त्रेण शास्त्रं वा व्यावहारिकम्।
यस्मिन्नर्थे विरुध्येत धर्मेणार्थं विनिर्णयेत्॥
शास्त्रं विप्रतिपद्येत धर्मन्यायेन केनचित्।
न्यायस्तत्र प्रमाणं स्यात्तत्र पाठो हि नश्यति॥

(अर्थ० ३।१।५५-५७)

2. Dr. R. S. Sharma, Some Aspects of Politcal Ideas and Institutions in Ancient India, P. 81.

3. D. R. Bhahdarkar, Some Aspects of Ancient Hindu polity, PP. 142-146.
K. P. Jayaswal, An Introduction to Hindu Polity, Modern Review, Calcutta, May, 1913.
R. C. Majumdar, Corporate Life in Ancient India, P. 221.
The Age of Imperial Unity, P. 334,

जायसवालमजूमदारभण्डारकराणां विचाराः गणस्वरूपं त्रेधा विभजन्ति। जायसवालस्य विचाराणां निष्कर्षं वक्तुं शक्यते यत्तदनुसारेण गणानां त्रीणि रूपाण्यासन्– (१) शुद्धो गणः, (२) शुद्धः कुलसंघः, (३) कुलसंघयोः मिश्रणं च। एवमेव भण्डारकरविचाराणां परिगणनमप्येवं भवितुमर्हति—(१) अभिजातवर्गीयो गणः, (२) जनतन्त्रात्मको गणः। अभिजातवर्गीयगणानां भेदद्वयं भवितुमर्हति—एकात्मकः संघात्मकश्चेति। जनतन्त्रात्मकगणानामप्येवं द्वेधा शक्यो विभेदः—निगमो जनपदश्चेति। मजूमदार आद्यो गणो जनतन्त्रात्मकवदभिजातवर्गीयोऽपि खल्वासीदिति मन्यते।[१] काणेमहोदयस्तु अमूमभिजातवर्गीयां व्यवस्थामेव सुस्पष्टं मन्यते।[२]

गणशब्दप्रयोगः ऋग्वेदादेव प्रारभ्यते।[३] तस्मिन् देवगणानामुल्लेख उपलभ्यते।[४] स्कन्दः सप्तमातृकाभिः साकं दैत्यैः सह युयोध। ऋग्वेदे 'गणपतिः' 'गणराजः' इति शब्दौ एकस्मिन्नेवार्थे प्रयुक्तौ दृश्येते। वैदिकगणेषु गणपतेर्वरणस्य विवरणं नोपलभ्यते। तस्मिन् काले इदं पदं वंशानुगतं नाभवत्। गणानां कर्त्तव्यस्य (गणकर्मणि) व्याख्या यथा सायणेन कृता तस्यां तु 'समानः श्रमः समानो विभागः, समानोऽधिकारः' इत्येतेषां भावः परिलक्ष्यते। बौद्धागमेषु राजा, उपराजः, सेनापतिः, भाण्डारिकश्चेत्याद्यभिजातवर्गीयतत्त्वानां संघटनमभूत् किन्तु वैदिकेषु तु गणेषु केवलो गणपतिरेव मूर्धन्य आसीद् अन्ये तु सर्वे समाना एव। तथापि गणपतेः कृते असाधारणसम्मानस्य पूजायाश्च भावः परिलक्षितो भवन्नासीत्। बौधायनगृह्यसूत्रे तु बलिग्रहणरूपेण करग्रहणमपि स्वीकृतमस्ति। ऋग्वेदे गणस्य गणपतेश्च कृते सम्मानः (गणेभ्यः स्वाहा, गणपतिभ्यः स्वाहा) व्यक्तोऽस्ति। वैदिकगणानां क्षेत्रफलं निश्चितं नासीद् यतस्तदानीं यावद् आर्थिक्याः स्थिरतायाः प्रादुर्भावो नाभवत्।

वैदिकगणव्यवस्थाया विकास उत्तरकाले तत्कालिक्या समाजव्यवस्थया सह जातः। सामाजिकार्थिकधार्मिकपरिवर्त्तनानां प्रभावोऽपतत्। एतेषां नेतृत्वं बौद्धजैनसंस्कृत्या कृतम्। महावीराय 'गणी' इत्युपाधिदाने नूनं प्राचीनपरम्परोद्भावनप्रयास एवासीत्।[५] एतस्य कालस्य विशेषताभिर्वैदिकगणानां भावः परिवर्तितोऽभवत्। करव्यवस्थायाः, अभिजातवर्गप्रभावस्य, पितृसत्तात्मककुटुम्बव्यवस्थायाः, सेनायाः, सेनापतेश्च प्रभावोऽशक्यप्रतिबन्धोऽभवत्। बौद्धगणेषु आभिर्व्यवस्थाभिस्सह गणव्य-

---

1. K. P. Jayaswal, op. c it., PP. 23-24.
   D. R. Bhandarkar, op. cit., PP.149, 167.
   R. C. Majumdar, op. cit., P. 239.
2 P. V. Kane, op. cit. ,III, P. 88.
३. ऋ० १।६४।१२; ५।५२।१३-१४; ५।५३।१०; ५।५६।१; ५।५८।१-२; ६।१६।२४; १०।३६।७।
४. ऋ० ४।३५।३।
5. S Stevenson, The Heart of Jainism, P. 61.

वस्थायाः समर्थनमपि नूतनयैव दृष्ट्या जातम् । फलतः राजतंत्रगणतंत्रयोः कियत्स्वंशेषु समन्वयस्संजातः ।

बौद्धगणाः वैदिकधर्मस्य ब्राह्मणानां च विरोधिनो ह्यासन् । एतस्मिन् विषये मल्लानां लिच्छवीनां च प्रामाण्यं पर्याप्तमस्ति । आतश्च ब्राह्मणाः स्मृतिकाराश्च बौद्धगणानपवित्रान् मेनिरे । काशिकायामित्त्थंभूत एको गणः, "नानाजातीयकत्वेन, अनियतवृत्तित्वेन, उत्सेधजीवित्वेन" च परिचायितः । ब्राह्मणवैदिकधर्मयोर्विरोधिनां गणानामुल्लेखः वेदेष्व् एवारभ्यते । अथर्ववेदे वैतहव्यानां सहस्रनिवासिनां गणस्योल्लेखो वर्तते, ये हि निवासिनो ब्राह्मणनां गाः अघसन् ।[१] जिम्मरमूरमहोदयावनुं समर्थयेते । ईदृशीनां जातीनां ब्राह्मणविद्वेषाय बौद्धधर्मेण नूतनं रूपं दत्तम् । एतादृशो गणाः शीघ्रं बौद्धधर्मे पर्यवर्तिषत । एभ्यो एव विविधेभ्यः कारणेभ्यो वैदिकैः राजनीतिज्ञैर्गणानां बहिष्कारः कृतः । कौटल्यस्यापि गणविद्वेषस्य गणानामुन्मूलनप्रयासस्य च रहस्यमिदमेवास्ति । स्मृतिकारास्तु राजतन्त्रेण समं समन्वयावसरे न्यायपालिकासु गणेभ्यः स्थानं ददुः[२] तथापि गणानां कृते तेषु सम्मानदृष्टिर्नासीत् ।

विभिन्नानां गणानां शासनव्यवस्थाप्रक्रिययोर्विषयेऽनेकैर्विद्वद्भिः प्रस्तुतया सामग्र्या गणशासनस्य न्यायसम्बन्ध्यंशे प्रकाशः प्रसरति । सुस्पष्टं हि गणानां व्यवस्थाया उत्तरदायित्वं गणसभायां गणपरिषदि वा निहितमासीत् । प्रत्येकं विषयेषु निर्णयात्पूर्वं विचारः कर्त्तव्य आसीत् । सर्वे एव सदस्याः स्वविचाराभिव्यक्तये पूर्णं स्वातंत्र्यमावहन्ति स्म । प्रयत्यते स्म च तदानीं सर्वेषां सदस्यानां निर्विरोधेन मतप्राप्तिः । जायसवालस्तु मनुते यन्निश्चयात्पूर्वं प्रस्तावस्य त्रिवारं पाठनमावश्यकमासीदिति ।[३] अन्ये तु विद्वांसोऽनेन सहमताः न सन्ति ।[४] यदि अविरोधेन निर्णयो न जातस्तर्हि 'येभुय्यासिका' हि प्रयुज्यते स्म । निर्णयाय सामान्यतया तु माध्यमत्रयं स्वीकृतमासीत्—गूल्हकः, सकणजप्पकः, विवरकश्च । प्रक्रियायाश्चास्याः विस्तारे अन्यै-

१. ये सहस्रमराजन्नासन् दशशता उत ।
ते ब्राह्मणस्य गां जग्ध्वा वैतहव्याः पराभवन् ॥
( अथर्व० ५।१८।१० )

२. कुलानि जातीःश्रेणीश्च गणाञ्जानपदानपि ।
स्वधर्माच्चलितान् राजा विनीय स्थापयेत्पथि ॥
( याज्ञ० १।३६१ )

गणद्रव्यं हरेद्यस्तु संविद लङ्घयेच्च यः ।
सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत् ॥
( याज्ञ० २।१८७ )

3. Hindu polity, P. 96.

4. Rockhill, The Life of the Budha, PP. 18-19.
Gilgit Mas. ( ed. Nalinaksha Dutt ), Vol. III, Pt. 2, PP. 9-10,

विद्वद्भिर्यैं विचाराः प्रस्तूयन्ते[1] तैरिदं ज्ञायते यत्कार्यक्रमस्याध्यक्षतामादधानस्याध्यक्षस्य प्रकारमधिकाराः स्वविवेकोपयोगे ह्यासन् ।

जायसवालस्तु मन्यते यद् बुद्धेन स्वोत्तरकालिकानां राजनीतिसंघानां सकाशात् संघशब्दः परिगृहीत इति । भण्डारकरस्तु मनुते यद् बुद्धेन स्वकीयेषु धार्मिकेषु संघेषु या प्रक्रिया स्वीकृता सैव राजनीतिकीभिस्सभाभिस्तदनुगणेषु स्वीकृत्यै प्रयत्ने आनीता । प्राय इदमेव बी० सी० लॉ गोकुलदासादिभिरप्यभिमतम् । आर० सी० मजूमदारस्तु मन्यते यद् "बौद्धसंघानां समग्रः प्रभावो गणेषु खल्वारोपणाय नालम् ।" मजूमदारः प्रक्रियायाः सारांशमित्त्थं ददाति--( १ ) सभायां प्रस्तावं पारितं कर्त्तुं निश्चिता नियमा ह्यासन् । प्रस्तावा अपि सामान्यतया त्रिवारं प्रस्तूयन्ते स्म । अविरोधे हि ते पारिता निर्धार्यन्ते स्म । विरोधे तु बहुमतमेव निर्णायकत्वेन शरण्यमासीत्, ( २ ) विप्रतिपन्नाः विषयाः समित्यै प्रदीयन्ते स्म, ( ३ ) गणपूर्त्तिमतगणनादिषु विषयेषु नियमाः निर्धारिता आसन् । विनयपिटके विवादनिर्णयाय सप्तस्तराः परिगणिताः—सम्मुखाविनयः, सतिविनयः, अमूल्हविनयः, पटिन्नायः, येभुय्यासिका, तस्सपापिय्यासिका, तिनवत्थाररकश्चेति ।[2]

एवं गणानां न्यायसम्बन्धिनी सुरक्षा सम्यग्व्यवस्थिता आसीत् । जायसवालमजूमदारानुसारेण व्यक्तेर्न्यायस्वातंत्र्यस्य सुरक्षा यावती गणानां न्यायव्यवस्थायां निहिता, न प्रायशस्तादृशी अन्यत्र क्वचिदुपलब्धुं शक्या । प्रक्रियायाः पूर्त्तिमनु यदि कश्चन अपराधी स्याद् गच्छेत्तर्हि दण्ड्यतां नो चेत् मुच्यते स्म ।[3] राजतंत्रात्मिकायां व्यवस्थायां तु दण्डापराधविधेर्विवादाः राजसभायां राजनि च केन्द्रिता ह्यासन् । तस्यैव खलु प्रतिक्रिया गणराज्यानां व्यवस्थायां जाता । फलतः प्रक्रियायाः पूर्त्तेः निर्विरोधनि-

---

1. Sukumar Dutt, Early Budhist Monachism, PP. 150-151.
   Gokul Das De, Democracy in Early Budhist Sangha, Calcutta, 1955.
   B. C. Law, Tribes in Ancient India, P. 323.

२. आङ्ग्लभाषानुवादः—
   Application of the disciplinary rule ( to the person ) in presenc; Application of the discipline in case of full consciousness ( of the accused ); the same in the case of one not being in same; sentencing one who confesses ( being guilty ) sentencing by majority of votes; proceeding against the obstinate; Covering over as by gross.
   Translations from kern; Manual of Indian Budhism, P. 86.

3. K. P. Jayaswal, op. cit. P. 45.
   R. C. Majumdar, op. cit. PP. 195-196.
   Ancient India, P. 163.

र्णयस्य च व्यवस्था स्वीकृता ।[१] अस्यां तु व्यक्तिविशेषापेक्षया सभाया नियमेषु व्यक्तेः स्वातन्त्र्यस्य न्यायप्राप्तेश्चेति उभयोरधिकारयोर्द्रयित्वं निहितमभूत् । वैधानिक्या तु दृष्ट्या गणराज्यपद्धतिर्न्यायपालिकायामेकं प्रयोगं कृतवती । अस्य साफल्यं तु सर्वथा गणकर्मचारिणां योग्यतायां निहितमासीत् ।

समुदायस्य गणसंघस्य वा सदस्यानामुपरि गणानां पूर्णोऽधिकार आसीत् । कपिलवस्तोर्गणशासनोपरि स्वविचारव्यञ्जता रिज डेविड्समहोदयेन लिखितं यत् "न्यायप्रशासनकार्ये जनतायाः सभया संचालिते अभूताम्, यस्यां सभायां युवानो वृद्धाश्चेत्युभौ सदस्यावास्ताम् । संथागारे न्यायप्रशासनयोः संचालनं जनप्रतिनिधयः कुर्वाणा ह्यासन् । सत्रस्य कार्यसंचालनं वरणेन बोभूयते स्म । वरणं तु अध्यक्षेण संपाद्यते स्म ।"[२] जायसवालस्तु अस्य मतस्य समर्थनं कुर्वाणोऽपि डेविड्स प्रयुक्तस्य 'कबीला' शब्दस्य स्थाने 'राज्य' शब्दं प्रयुङ्क्ते । भण्डारकरः डेविड्सस्य मतस्य खण्डनमेवंरूपेण कृतवान् । "कबीला-प्रधानो निर्वाचितो न भूत्वा वंशानुग एव भवन्नासीत् सोऽपि च न 'प्रधानः' किन्तु 'शासक' एवासीत् इति ।" एतेषां कल्पानां प्रत्याख्यानं कुर्वाणेन मजूमदारेण डेविड्सस्य पक्षे पर्याप्तं प्रमाणमुपन्यस्तम् । न खल्विह सन्देहावसरो यत् शाक्यानां गणा ह्यासन् किं च जनप्रतिनिधयोऽपि तेषामनिर्वाचिता ववृतिरे । सर्वथा हि ते ऽभिजातवर्गीयाः वंशानुगाश्च अप्यासन् । तथापि न विशेषेण काचिद् व्यक्तिः राजा वा तान् शशास ।[३] वस्तुतो गणपरिषदः, जनतन्त्रात्मिकायाः व्यवस्थायाः, अभिजातवर्गीयानां गणानां च सम्मिश्रणं शाक्येषूपलभ्यते इत्येनं 'कुलसंघः' इत्यप्यभिधातुं शक्यते ।

सिन्धोर्नद्याः रोधस उपत्यकाया वा गणानां विषये जायसवालस्य तु विवक्षितमिदं भवति यत् तिस्रः विशेषता ह्येतेषामासन्—मंत्रिमण्डलम्, द्वितीया सभा, संसच्चेति । स्यादपि तेषां कथने सत्यता तथापि नेदमस्वीकर्तुं शक्यते यद् गणा अभिजातवर्गीया आसन् । रिज डेविड्सस्तु बौद्धगणानां विशेषतां प्रस्तुवन् किंचिदेवं निष्कर्षं प्रस्तुतं चकार –( १ ) युवभिर्वृद्धैश्च युक्तजनतायाः सभाया अस्तित्वं या सभा विधिनिर्माणविषये सर्वातिशयिनोऽधिकारान् दधार, (२) समुदायकल्याणयोजना, यस्यां जनतायाः कल्याणस्य व्यवस्था विद्यते स्म, ( ३ ) बुद्धेन लिच्छविगणस्य तुलना 'तावतिंसदेवेन' कृता, सेयं तस्य केवलायाः जनतान्त्रिक्या विशेषताया एव हेतोः, ( ४ ) राजतन्त्राद् वैपरीत्येन कस्यचिदपि वंशस्याहोस्विद् व्यक्तिविशेषस्य शासनस्या-

1. U. N. Ghoshal, Studies in Indian History and Culture, P. 387.
2. The Coustitution of the Shakyas of Kapilvastu, Indian Historical Quarterly, Vol. 21. ( 1945 ), PP. 1-5.
3. Benoy Kumar Sen, Studies in the Jatakas, Calcutta University Journal of Deptt. of Letters, vol., 20, PP. 25-26.

भावः, ( ५ ) राज्यप्रशासनिकव्यष्टौ बद्धभावश्चेति । डेविड्सविचारखण्डने आर० सी० मजूमदारोऽलिखद् यद् "गणराजस्य सदस्या राजावदधिकारसंपन्ना आसन् । इममजनतन्त्रात्मकं राज्ञां 'सहकारी संघः' इत्यपि व्यपदेष्टुं शक्यते ।" परन्तु अभिजातवर्गीयैणांशेन सह तस्य जनतंत्रात्मकत्वस्य पक्षस्याप्यवहेलना तु नैव साध्वी । गणराज्येषु जनतंत्रस्य तत्त्वानीत्थं भूतान्यासन्—( १ ) सभायां प्रस्तावानां पारितभवने निश्चितानां नियमानां साधवः,[1] ( २ ) गणपूर्त्तेः नियमानाञ्च, ( ३ ) मतभेदे तु निर्णयो बहुमतादेवाबोभूयत इति । किंच, बहुमतज्ञानाय मतपेटिकायाः प्रयोगः, ( ४ ) अनुपस्थितसदस्यादीनां कृतेऽपि निश्चिता नियमाः[2] तत्र विवादविषयतां प्रापुः । "बुद्धस्तदानींतनानां राजनैतिकगणनां विधानस्य प्रयोगं स्वकीययैव रीत्या बौद्धसंघे चकार" इत्येषः जायसवालमतं यदि मान्यं तदा बुद्धतः पूर्ववर्त्तिनां गणनां वैदिकप्रभावोऽपि बौद्धगणेष्वपतदित्यप्यवश्यमभ्युपेतव्यं भवति । बुद्धो बौद्धदर्शनं चेत्युभौ वर्णविहीनसमाजस्य पक्षपातिनावास्ताम् । बौद्धगणा घोरकुलीनतन्त्रवादिनो बभूवुः । धार्मिकाः बौद्धसंघाः व्यक्तिवादिनो जाताः । एतेषां विधानमासीद् बुद्धस्य वाण्युपदेशौ । परन्तु राजनीतिकेषु बौद्धगणेषु विधाननिर्मात्री सभा आसीद् यस्याः सद्भावेन विधेः सर्वोच्चत्वस्य सिद्धान्तो विकसमानो जातः । गणानां शासने कुलवंशाभिजातवर्गैश्च संचालिते सति वंशानुगते वैदिकः प्रभावो विचकास । कालान्तरे तु वर्गप्रभावेण प्रधानस्य, अध्यक्षस्य, सेनापतेश्च पदमपि वशांनुगतं जातम् ।

शक्तेः केन्द्रीकरणविकेन्द्रीकरणयोर्विषये बौद्धवैदिकगणाः समाना आसन् । सिद्धान्ततः स्थानीयप्रशासनसंघटनानां महान्तोऽधिकारा आसन् । तेषां प्रभुत्वं व्यक्तावप्यासीत् किन्तु अभिजातवर्गाधृतसंघटनत्वात् केन्द्रे कतिपयविशिष्टवर्गस्य व्यक्तीनां च प्रभावोऽभवद् अथ च स्थानीयाधिकारेष्वपि नियंत्रणमारब्धम् । केन्द्रे कृष्णबुद्धसदृशीनां व्यक्तीनां सद्भावादितोप्यधिकम् ईदृशं भयं सञ्जातम् । अस्य परिणामस्त्वयं जातो यत् केन्द्रे महतीनां व्यक्तीनां विद्यमानत्वात् गणानां केन्द्रीयायाः शक्तेर्विकास इति । एतासां व्यक्तीनामभावे तु मिथस्संघर्षस्संभाव्यते स्म । महाभारतेनास्यैव चित्रणं कृतम्, कौटल्येन च तत एव लाभ उद्ग्रहीतः । बौद्धसंघेषु व्यक्तेर्व्यक्तित्वस्य च महत्त्वं नाविद्यत । आजन्म आ च मृत्युं तस्य विधिविधानानि बुद्धस्य वाण्या निर्देशितान्यासन् । बौद्धगणेषु व्यक्तेर्व्यक्तित्वं न लुप्तं बभूव । इह वैदिकपरम्परायाः प्रभावो विस्पष्टमनुभूयते । एवं हि गणराज्यशासनपद्धतौ वैदिकबौद्धप्रभावौ अभिव्यज्येते । धर्मविषये द्वे संघर्षशीले प्रवृत्ती गणराज्य इह समन्विते । बौद्धगणेषु विधिसंप्रभुताया वैदिकः

---

१. चुल्लवग्ग ८।२।२; ११।१।१४।

२. महावग्ग ९।३।५६।

प्रभावः क्रियाशीलो जातः। वैदिकपरम्परायाः न्यायप्रक्रियातो गणप्रक्रियायां मिथो विशेषमन्तरं न विविदे। फलतो गणराज्यानां पराभवावसरे तेषां न्यायपालिका वैदिक्याः न्यायपालिकायाः समक्षे सक्रियतया स्थातुं नाशकदिति तस्यामेव समाविष्टा। फलतः केन्द्रीया राजसभा गणानामपि सर्वोच्चन्यायसंस्था अभवत्। अन्ततो वैदिक्याः न्यायपालिक्या एव विकासोऽबोभूयत।



## अध्यायः ५

# विधेः स्रोतांसि (१)

## निगमा आगमाश्च

वेदोऽपौरुषेयः कर्त्रस्मरणात्[१] । वेद एव सर्वेषामादर्शः सर्वदा स्थितः । शब्दानां तत उद्धृत्य प्रयोगः सम्भविष्यति[२] । वेदस्त्रिविधः—विधिः, अर्थवादः, मन्त्रश्चेति । उद्भिद् बलभिद् विश्वजिद् इत्यादीनां नामधेयानामाधिक्यमिति चेन्न, विधौ एव करणत्वेन तेषामन्तर्भावात्[३] । वेदः पञ्चविधः, विधिमन्त्रनामधेयनिषेधार्थवादात्मकः । तत्र विधिः–अप्राप्तार्थविधायकं वेदवाक्यम्, "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादि । मन्त्रः—प्रयोग-समवेतार्थस्मारकं वेदवाक्यं 'इषे त्वा' इत्यादि । नामधेयम्—योगेन रूढ्या वा धात्वर्थ-परिच्छेदतात्पर्यकं वैदिकं सुबन्तमुद्भिद्, अग्निहोत्रमाधार इत्यादि । निषेधः—अनर्थहेतोः कर्मणः सकाशात् पुरुषस्य निवृत्तिकरं वेदवाक्यम् 'न कलञ्जं भक्षयेत्' इत्यादि । अर्थ-वादः—विधेयस्तावकं निषेध्यनिन्दकं वा वेदवाक्यम् 'वायुर्वै क्षेपिष्ठा देवता' 'सोऽरोदीत्' इत्यादि ।

वेदः पुनः सविशेषः प्रत्यक्षगम्यः, तत्र घटादिवदेव पुरुषान्तरस्थमुपलभ्य स्मरन्ति । तैरपि स्मृतमुपलभ्य अन्येऽपि स्मरन्तः अन्येभ्यस्तथैव समर्पयन्ति इति अनादिता[४] । वेदः पौरुषेयो न वेति संशये वेदोऽपौरुषेयो न केनाऽपि कृतः । वेदं व्याचक्षते तेषामयमभिप्रायः । शब्दशक्त्यनुसारेण वाक्यार्थं गमयन्ति ते । तत्र यः शक्त्युपारूढः स तैर्व्याख्यातुमिष्यते । यस्तु शक्त्या परित्यक्तो न व्याचिख्यास्यते स तैः[५] ।

वेदा अर्वाचीनाः पौरुषेया इति पूर्वपक्षेऽनित्यानां जननमरणवतां केषाञ्चित् पुरुषाणां वेदे दर्शनं विद्यते । ते पुरुषा वेदे उक्ताः 'बबर प्रवाहणिरकामयत' इत्याद्याः । सर्वपुंसामध्ययनमध्ययनान्तरपूर्वकम् । सर्वे हि यथैव गुरुणा अधीतं तथैव अधिजिगासन्ते । न पुनः स्वातन्त्र्येण कश्चिदपि प्रथमः अध्येता वेदानामस्ति यः कर्त्ता स्यात् । वेदाः पुरुषकर्तृका इति पूर्वपक्षे काठकतैत्तिरीयकादिसमाख्याः प्रमाणत्वेन उदाहृताः । वेदा अपौरुषेया एव । काठकादिसमाख्यास्तु प्रवचनात् स्युः । कठेन काचित् शाखा शिष्येभ्यो विशेषत आदिष्टा इति तस्य वेदभागस्य काठकमिति समाख्या रूढा । एवं तित्तिरिणा

---

१. वैद्यनाथः, १।१।७।२५, पृ० ९९ ।
२. वा० १।३।८।२४, पृ० २६३ ।
३. वि० १।४।१ ।
४. वा० १।३।१।१, पृ० १६२ ।
५. वा० ३।१।७।१३, पृ० ७०१ ।

प्रोक्तं तैत्तिरीयकम् इति। एवञ्च ता आख्याः प्रवचननिमित्ताः कर्तृत्वनिमित्ताः। 'वेदांश्चैके सन्निकर्षपुरुषाख्याः' (१।१।८।२७) इति सूत्रानुसाराद् अत्र सूत्रे आख्याशब्दो बहुवचनान्त एव स्यात्। भाष्ये तु एकवचनान्त एवानुदितः।

वेदस्य नित्यत्वात् यथोच्चारितार्थान्वेषणमात्रे पुरुषाणां व्यापार इति न कर्त्ता इव पर्यनुयुज्यते[1]। वेदस्य पदरूपत्वात् पदानां च नित्यवर्णरूपत्वेन नित्यत्वात् कारणसापेक्षत्वं नास्ति[2]। वेदस्य मूलानपेक्षत्वात् प्रतिष्ठितं प्रामाण्यम्। वेदस्य यथा वक्तृदोषरहितत्वात् प्रामाण्यम्, एवं लौकिकस्यापि पदस्य अनादित्वाविशेषात्[3]। वेदस्य विधिप्रतिषेधात्मकत्वाद् यावत् किञ्चित् श्रूयते तत्सर्वं तत्सम्बधित्वेन गम्यते। तत्र येन प्रकारेण विधिप्रतिषेधविषयं भवति तथा सर्वात्मना योजनीयम्[4]। बलवत्पौरुषेयत्वसाधकप्रमाणान्तराभावविशिष्टकर्तृस्मरणाभाव एव वेदस्य पौरुषेयत्वाभावसाधक इति नानैकान्तिकता[5]।

वेदवाक्यानामपौरुषेयत्वं साध्यते। प्रमाणञ्चार्थापत्तिरनुमानं वा। अतीन्द्रियार्थकप्रतिपादकत्वमपौरुषेयत्वं विना नोपपद्यते इत्यर्थापत्तिः। अनुमानं तु वेदवाक्यान्यपौरुषेयत्वं विना नोपपद्यते इत्यर्थापत्तिः। अनुमानं तु वेदवाक्यान्यपौरुषेयाणि अतीन्द्रियार्थप्रतिपादकत्वात्, यदित्थं न भवति तत्तथा न भवति, यथा भारतादि इति। न च सुरभिगगनकुसुममितिवचनेऽनेकान्तिकत्वम्, अपसिद्धान्तप्रसङ्गात्, प्रतिवादिनाऽपि तादृशस्य प्रतिपादकत्वानभ्युपगमात्। प्रसङ्गापादनमपि न भवति, स्वपक्षसाधनत्वपरपक्षदूषणत्वाभावात्। अत्र च न स्वपक्षसाधनत्वम्, नाप्यसिद्धत्वाद्युद्भावनम्। न च योगीश्वरेन्द्रियविषयतया अन्यतरासिद्धत्वम्, अस्मदादीन्द्रियाभिप्रायेणातीन्द्रियार्थत्वम्, तद्व्यतिरिक्तस्यैन्द्रियत्वासिद्धेः, रूपादिनियतविषयं हीन्द्रियम्, तयोरपि तथाविधेन्द्रियेण नासिद्धत्वम्। न च मन्वादिष्वनैकान्तिकत्वम्, तेषामतीन्द्रियार्थप्रतिपादिकत्वाभावात् श्रुतिमूलत्वेन तदनुवादकत्वात्। अत एव परमाण्वादिप्रतिपादकं वाक्यं न प्रतिपादकम्, अनुमानसिद्धार्थानुवादकत्वात्। न च भागासिद्धता, अनुवादिषु वेदवाक्यस्यैव पक्षीकृतत्वात्। हुमादीनामर्थाभावेन न पदत्वं वाक्यत्वञ्च। न चानध्यवसितत्वम्, पक्षे एव वर्तमानत्वेऽपि केवलव्यतिरेकत्वात्, व्यतिरेकित्वे सपक्षाभावात्। न च गगनादिः सपक्षः, नित्यत्वापौरुषेयत्वयोर्भेदात्, उच्चारणपूर्वकोच्चारणं ह्यपौरुषेयत्वम्, न च भारताद्यद्यतनवाक्यस्यापौरुषेयत्वम्, साक्षाद्वा परम्परया वा तस्योच्चारणपूर्वकत्वाभावात्।

---

१. वा० ३।१।७।१४, पृ. ७२३।
२. वि० १।१।७।
३. वा० ३।२।९।२५, पृ. ७८४।
४. वा० ३।१।७।१३, पृ. ७०३।
५. भाट्ट० ९।२।१।

न च वाक्यत्वमिति हेतुना कालात्ययापदिष्टत्वम्, तस्य सामान्यविषयत्वेन विलम्बितत्वात्। अस्य च वेदैकविषयत्वात्। न च व्यतिरेकित्वेन विलम्बः, अन्वय-व्यतिरेकिण्यपि व्यतिरेकस्य विद्यमानत्वात्। नाऽपि पौरुषेयत्वमपि साधयितुं शक्यम्, विकल्पासहत्वात्। किमस्मदादिपुरुषकृतत्वम्, आहोस्वित् विलक्षणकृतत्वम् ? अस्मदादि-कृतत्वेऽपसिद्धान्तः, विलक्षणकृतत्वे दृष्टान्तः साध्यविकलः। न चोभयानुगमेन पुरुषमात्र-कृतत्वं साध्यम्, उभयाभावात्। नाप्येतेनैवानुमानेन विलक्षणसिद्धेः अनुगतत्वसिद्धिः, इतरेतराश्रयत्वात्, विलक्षणपुरुषसिद्धिरिति। न च ईश्वरानुमानेन विलक्षणसिद्धिः, तत्राऽपि विकल्पस्य समानत्वात्, अस्मदादिकर्तृकत्वे साध्येऽपसिद्धान्तः, विलक्षणकर्तृत्वे साध्यविकलः, उभयानुगतकर्तृकत्वमात्रत्वे साध्येऽन्योन्याश्रयत्वमिति।

किञ्च पौरुषेयत्वं नाम ? यदि वर्णोत्पादकत्वम्, तर्हि साध्यविकलता, नित्य-त्वाल्लोके वेदे च वर्णानाम्। अथवा वाक्यक्रमोऽनुवादकत्वम्, तर्हि सिद्धसाधनत्वम्, अध्येतॄणामप्युक्तत्वात्। उच्चारणमेव हि पदादीनामुत्पादनम्, नान्यत्। अथ स्वतन्त्र-पुरुषकर्तृकत्वम्, तर्हि वेदभारतयोरन्यतरवाक्यस्य पौरुषेयत्वं न स्यात्। अथ स्वतन्त्र-पुरुषपूर्वकत्वम्। किमिदं स्वातन्त्र्यं नाम ? अथ यदि प्रमाणान्तरेणार्थं ज्ञात्वा तत्प्रति-पादकवाक्यरचनम्, तर्हि अनाप्तवाक्यस्यापौरुषेयत्वं स्यात्। अथ प्रतीतिमात्रपूर्वकत्वम्, तर्हि विप्रलिप्सोर्वचनस्य न स्यात्। अथोच्चारणान्तरनिरपेक्षत्वं पौरुषेयत्वं तर्हि पुनरपि भारताद्यद्यतनवाक्यस्य न स्यात्। अथ साक्षात्परम्परया वोच्चारणनिरपेक्षत्वम्, तर्हि वेदविषयोच्चारणस्य भवत्पक्षे उच्चारणान्तरपूर्वकत्वाभावात् प्रत्यक्षादिमूलकत्वं वाच्यम्। एवञ्च सति वेदार्थविषये प्रत्यक्षाद्यभावात् कारणाभावे कार्याभावानुमानबाधात् प्रत्यक्षा-दिमूलत्वं वाच्यम्। एवं सति वेदार्थविषये प्रत्यक्षाद्यभावात् कारणभावे कार्याभावानुमान-बाधात् बाधितविषयत्वम्। योगीश्वरज्ञानपूर्वकत्वस्य सम्भवान्न कारणभाव इति चेन्न, तथाविधप्रमाणसिद्धेः। अथानेनैवानुमानेन तदपि सिद्धयति इति चेन्न, इतरेतराश्रय-प्रसङ्गात्। किञ्च पौरुषेयत्वानुमानस्य प्रवृत्तिरेव न सिद्धयति। सिद्धयति चेत् सन्दिग्धेभ्यो ह्यर्थेभ्यः प्रवर्तेत। न च वेदकर्तरि सन्देहोऽस्ति, अनुपलब्धेरभाव-निश्चयात्, शशमस्तके विषाणाभावनिश्चयवत्। अथायोग्यानुपलब्धित्वेन वेदकर्तर्यनुमानं प्रवर्तेत, तर्हि शशादिमस्तकं विषाणवत्, चतुष्पादात्मकत्वात्, गोमस्तकवत्, इत्यप्यनुमानं स्यात्। अथ वेदकर्त्तर्यनुमानसिद्धत्वेऽपि अनुमानसिद्धं विषाणं परमाणुवदयोग्यं स्यात्। अथ विषाणजातीयस्य रूपवत्त्वमहत्त्वादिदर्शनाच्छशमस्तकेऽपि प्रत्यक्षत्वम्, तर्हि वाक्यक-र्तुरप्यस्मदादेः प्रत्यक्षत्वयोग्यत्वात् वेदकर्तर्यपि प्रत्यक्षत्वमिति तुल्यचर्चः।

एवं वाऽनुमानम्, अपौरुषेयो वेदः, पौरुषेयविवादास्पदत्वात्, यदित्थं न भवति न तत्तथा यथा भारतादि। न च प्रकरणसमत्वम्, पौरुषेयत्वसाधनदशायां सपक्षा-सद्भावेनायमेव हेतुरनध्यवसित इति। न च वाक्यत्वादित्यादिनो कालात्ययापदिष्ट-त्वम्, पूर्वोक्तदोषप्रसङ्गात्।

न च वादिविप्रतिपन्नत्वेन संशयहेतुत्वम्, अनुमानसामग्रीत्वेन हेतुत्वात्। न च विप्रतिपत्तिमात्रेऽतिप्रसङ्गः, पौरुषेयापौरुषेयविवादास्पदत्वेनेतिविशेषणात्। न साध्याव्यावृत्तिशङ्का, गगनादिषु विपक्षेष्वपौरुषेयत्वस्य व्यावृत्तत्वात्। न च नित्यत्वमात्रमपौरुषेयमित्युक्तमेव। न चाप्रयोजकत्वशङ्का, केवलव्यतिरेकिलक्षणोपेतत्वे सोऽपि प्रयोजको भवतु। न चोभये प्रयोजकत्वे चान्यतरस्याप्रयोजकत्वम्। न चाप्रयोगकत्वस्य दूषणत्वमपि सम्मतम्।

एवं वाऽनुमानम्, विवादाध्यासितं वेदाध्ययनम्, गुर्वध्ययनपूर्वकम्, वेदाध्ययनत्वात्, अधुनाऽध्ययनवदिति। भारतेऽप्येवं प्रसज्यते इति चेन्न, तत्र पौरुषेयत्वस्य भवतामपि सिद्धत्वादपसिद्धान्तप्रसङ्गात्। प्रसङ्गापादनमपि न भवति, स्वपक्षसाधनत्वाभावात् परपक्षदूषणत्वाभावाच्च।

ननु किमस्मदध्ययनस्यागुर्वध्ययनपूर्वकत्वं साध्यते, तदव्यतिरिक्तस्य वा? प्रथमपक्षे सिद्धसाधनत्वम्, द्वितीये चाश्रयासिद्धत्वम्, अतो नाऽत्र सम्प्रतिपन्नो धर्मो विद्यते। नैवम्, सिद्धस्यैवाध्ययनविशेषस्यास्मत्कर्तृकत्वेन विलक्षणकर्तृकत्वेन च विप्रतिपन्नस्य धर्मित्वमित्यदोषः। या च पौरुषेयत्वानुपपत्तिरुक्ता, सा च नैयायिकस्येश्वरसिद्धौ, बौद्धस्य सर्वज्ञत्वसिद्धौ, वेदान्तिनो ब्रह्मसिद्धौ च समैव, अन्यत्र परिकल्पनायास्तुल्यत्वात्। तदुक्तम् "सर्वज्ञकल्पनाद्यैस्तु वेदे वा पौरुषेयता। तुल्यवत्कल्पिता येन तेनेदं सम्प्रधार्यताम्।"

किञ्च अपौरुषेयत्वानङ्गीकारे ईश्वरसिद्धिर्न स्यात्। तथाहि, न तावत् प्रत्यक्षेण गृह्यते, अयोग्यत्वात्। नाऽप्यनुमानेन, तस्य कर्तृमात्रविषयत्वात्। नाऽपि पक्षधर्मतया विशेषसिद्धिः, लोकस्वभावानतिक्रमेण विशेषमात्रापेक्षत्वात्, पर्वतगताग्निविशेषवत्। अत्राऽपि दृष्टस्वभावानुगुणकर्तृविशेषस्य सिद्धिः पक्षधर्मतया, न तु दृष्टस्वभावविपरीतस्य। नाप्यागमेन कृतकेन अन्योन्याश्रयप्रसङ्गात्। तद्वचनत्वे सिद्धे तदीयाम्नानम्, तदीयाम्नाने तस्य प्रामाण्यम्, तस्य प्रामाण्ये तत् सिद्धिरिति। न च परं नियोगमेकानभ्युपगमात्।

किञ्च ईश्वरस्य वेदकरणाद् प्रागप्रमाणकत्वप्रसङ्गः, अपौरुषेये सिद्धे स्वर्गादिसिद्धिवदुपपद्येताऽपि। तदुक्तम् "एवं चेश्वरे परोक्तमनुमानं निरस्तम्, नेश्वरे निरस्तः।"

धर्मंजिज्ञासमानानां प्रमाणं परमं श्रुतिः। चातुर्वर्ण्यम्, त्रयो लोकाः, चत्वारश्चाश्रमाः, भूतम्, भव्यम्, भविष्यञ्च सर्वं वेदात्प्रसिद्धयति। शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः। वेदादेव प्रसूयन्ते प्रसूतिगुणकर्मतः। विभर्ति सर्वभूतानि वेदशास्त्रसनातनम्। तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम्। परापरविभागेन वेदार्थो विविधः स्मृतः। वेदार्थः परमः साक्षात्परात्परतरं परम्। अपरो धर्मसंज्ञः स्यात् तत्पर-

प्राप्तिसाधनम् । वेदाः प्रमाणं प्रथमं स्वत एव । ततः परं स्मृतयश्च पुराणानि भारतं मुनिपुङ्गवाः । अन्यान्यपि शास्त्राणि वेदाऽविरोधेन प्रमाणम् ।

आधुनिकसनातनधर्मानुयायिनां व्याख्यातॄणां वा विवेचनमत्यन्तमहत्त्वपूर्णमस्ति । वेदस्वरूपग्रन्थे स्वामिकरपात्रमहोदयेन "वेदस्वरूपविमर्शः" इत्याख्यग्रन्थे वेदानां सार्वभौमविश्लेषणं कृतम् तदनुसारेण 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" (श्वेताश्व० ६।१८) इत्यादिवैदिकैरेव वचनैरिदं विज्ञायते यद् ब्रह्मणोऽपि विधात्रा परमेश्वरेण ब्रह्मा विधीयते, न वेदा विधीयन्ते । किन्तु नित्यसिद्धा एव ते ब्रह्मणो हृदि प्रह्लीष्यन्ते, प्रेष्यन्ते । विद्यमानानामेव प्रेषणं सम्भवति । तन्निर्माणसम्भवे ब्रह्मनिर्माणप्रसङ्गे तन्निर्माणमपि स्यादेव ।

वस्तुतस्तु 'वाचा निरूपनित्यता', 'तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे', 'अस्य महतो भूतस्य निःश्वसितम्,' इत्यादिश्रुतिभ्यो नित्यसिद्धं स्वयम्भू ब्रह्म (वेदः) परमेश्वरान्निःश्वासन्यायेन बुद्धिप्रयत्नानपेक्षतया अभिव्यज्यते, तदेव चांशैः प्रजापत्याग्निवाय्वादित्येभ्यो लोके सम्प्रदायपारम्पर्येण प्रवर्त्तते । तस्यैवांशांशानां केषाञ्चित् मन्त्रद्रष्टॄणामृषीणां साक्षात्कारः, तेनैव तेषां मन्त्रद्रष्टृत्वम् । तदेव च मन्त्रकृत्त्वम् । न च तावता ततः पूर्वं तेषामध्ययनपारम्पर्येणापि वेदाधिगमो नासीत्, तेन वा तपोयोगादिज्ञानं नासीत् ।

अत एव वेदानां नित्यत्वात् तत्सम्प्रदायाविच्छेदेन तदध्येतॄणां वेदोक्तवर्णाश्रमधर्मानुष्ठातॄणामेव तद्विशेषानुष्ठानात् केषाञ्चिन्मन्त्राणां तद्दैवतानां वा साक्षात्कारो भवति, नाऽत्यन्तमभिनवानां मन्त्राणां साक्षात्कारः, सम्प्रदायान्तरे तेषां विद्यमानत्वेन संवादात् । अन्यथा संवादाभावे तु साक्षात्कृत्य निर्माय वा मन्त्रा उक्ता इति संशीत्यविरहात् । अन्यथा अभिनवमन्त्रनिर्मातृत्वे मन्त्राणामनादित्वं च भज्येत, द्रष्टृत्वोक्तिश्च कुप्येत । तथैव बाइबिलकाराणामपि ऋषित्वापत्तेश्च ।

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमाद् ऋते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते" ॥

इति वाक्यपदीयरीत्या ज्ञानस्य शब्दानुविद्धत्वं तु प्रसिद्धमेव । अत एव सृष्टेर्ज्ञानपूर्वकत्वेन ज्ञानस्य च शब्दानुविद्धत्वात् परमेश्वरेणापि शब्दपूर्वकं जगद् रच्यते "स भूरिति व्याहरत्, तस्माद् भुवमसृजत्', 'वेद शब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे' इत्यादिश्रुतिस्मृतिभ्यः । ईश्वरीयज्ञानस्य नित्यत्वेन तदनुविद्धानां शब्दानामपि नित्यत्वादपौरुषेयत्वमेव । अनन्तता च 'अनन्ता वै वेदाः' इति श्रुतेः परादिविभागस्तु वाक्यपदीये—

"वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥
स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा ।
वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना ।
केवलं बुद्ध्युपादाना क्रमरूपानुपातिनी ।
प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते ।
अविभागात्तु पश्यन्ती सर्वतः संहृतक्रमा ।
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ।"

वैदिकैस्तु वेदे आनुपूर्व्या निर्माणेऽपि पुरुषस्य अस्वातन्त्र्यमेवेष्यते । तदुक्तं भट्टपादैः—"यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता" इति सृष्टिप्रलयाभ्युपगन्तृभिर्वेदान्तिभिरपि पुरुषपारतन्त्र्यमुपेयत एव । ईश्वरेणापि पूर्वकल्पीयानुपूर्वीमनुसृत्यैव उत्तरकल्पीयानुपूर्वी निर्मीयते । तत एवानित्याऽपि सा नियतैव । इदमेव च नित्यत्वं वेदानाम् । एवं च सति 'या त्वसौ वर्णानुपर्वी साऽनित्या' इति महाभाष्यं क्व विरुध्यते ? वर्णानां नित्यानां विभूनां देशतः कालतो वा पौर्वापर्यासम्भवेन वर्णव्यक्तीनामनित्यानामेव तत्सम्भवेन तस्या अनित्यत्वे विरोधाभावात् । एकानुपूर्वीकवर्णसमुदायव्यञ्जकत्वमेव उच्चारणानामन्योन्यसाजात्यम् । तथा सति काठकादिषु कठादिकृत्वेऽपि फलतः प्रवचनकर्तृत्वमेव, प्रथमोच्चारणस्यासिद्धत्वात् । वेदे सर्वेषामेवोच्चारणानां पूर्वपूर्वोच्चारणसापेक्षत्वेन स्वातन्त्र्याभावेन अपौरुषेयत्वसिद्धेः स्फुटत्वात् । तथा चाह पराशरः—

"न कश्चिद्वेदकर्त्ता स्याद् वेदं स्मृत्वा चतुर्मुखः ।
तथैव धर्मान् स्मरति मनुः कल्पान्तरान्तरे ।"

मत्स्यपुराणेऽपि—

अस्य वेदस्य सर्वज्ञः कल्पादौ परमेश्वरः ।
व्यञ्जकः केवलं विप्राः नैव कर्त्ता न संशयः ॥"

तथा चानुपूर्व्याः कृतत्वेऽपि तत्परिवर्तने न कस्यचिदधिकार इति दर्शयितुमेव महाभाष्यकारस्तस्या नियतत्वमाचष्टे । बादरायणोऽपि तदभिप्रायेणैव परमेश्वरस्य शास्त्रयोनित्वमभ्युपगम्यापि 'अतएव च नित्यत्वमि'ति वेदस्य नित्यत्वमाह ।

अनादिमन्त्राणामृषयो द्रष्टारो न कर्तारः । तास्त्रिविधा ऋचः—परोक्षकृताः, प्रत्यक्षकृताः, आध्यात्मिकश्च । ऋच एव अतितरामपिहितार्थाः, न तथा यजूंषि । तासु विदितासु तानि विदितानि भवन्ति । परोक्षकृताः ऋचः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते, प्रथमपुरुषैश्च आख्यातस्य । यथा—

'इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रमिद्गमथिनो....' इत्यादिप्रत्यक्षकृताः मध्यमपुरुषयोगात् । त्वमिति चैतेन सर्वनाम्ना—"त्वमिन्द्र बलादधिविन इन्द्रमृधो जहि"

इति। क्वचित् प्रत्यक्षकृताः स्तोतारः, परोक्षकृतानि च स्तोतव्यानि—"माचिदन्य-द्विशंशतकण्वा अभि प्र गायतोष प्रेत। कुशिकाश्चेतयध्वम्' इति।

आख्यायिकारूपेषु मन्त्रेषु पुरुषविशेषाणां वक्तृत्वेऽस्मच्छब्दवाच्यत्वे सत्यपि पौरुषेयत्वासिद्धेः। लौकिकेतिहासोल्लेखस्य घटनापूर्वकत्वेऽपि न वैदिकाख्यायिकोल्लेखस्य घटनापूर्वकत्वम्, घटनानां वैदिकशब्दपूर्वकत्वात्। यथा कुलालो घटशब्देन घटं स्मृत्वा दण्डचक्रादिव्यापारेण तं सृजति तथैव परमेश्वरोऽपि तैस्तैः शब्दैस्तांस्तान् अर्थान् स्मृत्वा सृजति। अत एव 'भूरिति व्याहरत्तस्माद्भुवमसृजदि'ति, 'शब्द इति चेन्नातः प्रभवादि' त्यादिश्रुतिस्मृतिसूत्रेभ्यः स्पष्टम्। अन्यथा वेदेषु पारिक्षितजनमेजयादीनां श्रवणेन तदनन्तरमेव वेदरचना स्वीकर्त्तव्या भवेत्। तस्माद्यथा लोके दुर्गमस्यार्थस्यावबोधायाख्यायिका परिकल्प्यते, तथैव वेदेऽपि सुखावबोधाय आख्यायिकाः कल्पिताः। तथा चोक्तं शङ्करभगवत्पादैः केनोपनिषदादिषु—"शिष्याचार्यप्रश्नप्रतिवचनरूपेण कथनं तु सूक्ष्मवस्तुविषयत्वात् सुखप्रतिपत्तिकारणं भवति। केवलतर्कागम्यत्वञ्च दर्शितं भवति। शिष्याचार्यसंवादात् प्रतिनिवृत्य स्वेनरूपेण श्रुतिः समस्तसंवादनिर्वृत्तमर्थं बोधयति' इति।

शरीरे द्विविधाः क्रिया दृश्यन्ते—(१) इच्छाजन्याः (२) इच्छां विनैव स्वतः प्रवर्त्तमानश्च। तत्र श्वासादिकं स्वतःप्रवर्त्तमानास्वन्तर्भवति। तेनेदमपि विवक्ष्यते यदिमा ऋग्यजुः सामाख्या वाचः प्रजापतेः स्वत एव यज्ञप्रक्रियया प्रादुर्भवन्ति, न त्विच्छया उत्पाद्यन्ते। यथा हि निःश्वासेनैव मनुष्यजीवनस्य परिचयः, तथैताभिर्वाग्भिरेव प्रजापतेः परिचयः, स्वतः प्रजापतेरतीन्द्रियत्वात्। महतोभूतस्यात्मनोऽपि वृत्त्यात्मकैर्ज्ञानैरेव परिचय इत्यादि सादृश्यमुन्नेयम्।

सर्वस्मिंश्च ब्रह्माण्डे मुख्यः प्रजापतिः सूर्यः। तत इमे ऋगादिवेदाः पुनः पुनः प्रादुर्भवन्ति। अत एव सूर्यप्रभवत्वमुक्तमेषाम्। इमे च ऋगाद्या गायत्रीमातृका वेदा इत्युच्यन्ते वैदिकपरिभाषायाम्। तदेतत्सर्वमपि अविचारितरमणीयम्, 'शास्त्रयोनित्वात्,' 'शब्द इति चेन्नातः प्रभवात्', 'अत एव च नित्यत्वम्' इत्यादिसूत्रविरोधात्। तथाहि—शङ्करभगवत्पादैरन्यैश्च भाष्यकारैः शास्त्रयोनित्वात् इति शास्त्रस्य ऋग्वेदादेः परमात्मप्रभवत्वेन परमेश्वरस्य सार्वज्ञसिद्ध्या 'जन्माद्यस्य यतः' इति जगज्जन्मादिकारणत्वं समर्थितम्। तदुक्तम्—

"महतः ऋग्वेदादेः शास्त्रस्यानेकविद्योपबृंहितस्य प्रदीपवत्सर्वार्थावद्योतिनः सत्यसङ्कल्पस्य योनिः कारणं ब्रह्म। नहीदृशस्य सर्वज्ञादन्यतः सम्भवोऽस्ति। यद्विस्तरार्थं शास्त्रं यस्मात्पुरुषविशेषात् सम्भवति, यथा व्याकरणादिपाणिन्यादेर्ज्ञेयैकदेशार्थमपि ततोऽधिकतरविज्ञान इति प्रसिद्धं लोके। किमुत वक्तव्यमनेकशाखाभेदभिन्नस्य सर्वज्ञानाकरस्य अप्रयत्नेनैव लीलान्यायेन पुरुषनिःश्वासवद्यस्मान्महतो भूताद्योनेः सम्भवः, तस्य महतो भूतस्य निरतिशयं सर्वज्ञत्वं सर्वशक्तिमत्वञ्च" इति।

'अत एव च नित्यत्वम्' इत्यत्र स्वतन्त्रस्य कर्तुरस्मरणादिति स्थिते वेदस्य नित्यत्वे देवादिव्यक्तिप्रभवाभ्युपगमेन तस्य विरोधमाशङ्क्य 'अतः प्रभवादि'ति परिहृत्य तदेव वेदनित्यत्वं द्रढति । अत एव नियताकृतेर्देवादेर्जगतो वेदशब्दप्रभवत्वात् वेदशब्दे नित्यत्वमपि प्रत्येतव्यमिति भगवत्पादाः । तथा च मन्त्रवर्णः "यज्ञेन वाचः पदवीमायन् तामन्वविन्दन्नृषिषु प्रविष्टम्" (ऋ० सं० १०।७१।३) इति ।

यद्यपि महाप्रलयेऽन्तःकरणादयो न समुदाचद्वृत्तयो भवन्ति, तथापि स्वकारणेऽनिर्वाच्यायामविद्यायां लीनाः सूक्ष्मेण शक्तिरूपेण कर्मविक्षेपका विद्यावासनाभिः सहावतिष्ठन्ते । तथा चोक्तम्—

"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ।"

ते चावधिं प्राप्य परमेश्वरेच्छा प्रचोदिताः यथाकूर्मदेहे निलीनान्यङ्गानि ततो निःसरन्ति, यथा वा वर्षापाये प्राप्तमृद्भावानि मण्डूकशरीराणि तद्वासनावासिततया घनाघनासारावसेकसुहितानि पुनर्मण्डूकशरीरभावमनुभवन्ति तथा, पूर्ववासनावशात् पूर्वसमाननामरूपाण्युत्पद्यन्ते । तेनेश्वरः प्राणभृत्कर्माविद्यासहकारी तदनुरूपमेव जगत् सृजति । सर्गप्रलयप्रवाहानादितया सर्वभेद उपपद्यते । तथापि 'मन्त्रकृतो वृणीते', संहिताकारः, पदकारः, सूत्रकारः, ब्राह्मणकारः, विश्वामित्रस्य सूक्तं भवतीत्यादिप्रमाण्याद् वेदस्य पौरुषेयत्वशङ्कानिराकरणायैव 'अत एव च नित्यत्वमि'ति कर्तुरस्मरणेन सिद्धस्यैवानुमानेन दृढीकरणम् ।

पूर्वमीमांसकरीत्या वेदानां वर्णाः पदानि वाक्यानि च नित्यान्येव । उत्तरमीमांसकानां रीत्या वर्णाः प्रलयपर्यन्तावस्थायित्वेन नित्याः । पौर्वापर्यभाञ्जि पदानि वाक्यानि च तथाविधान्येव । सृष्ट्यारम्भे तु परमेश्वरेण तानि पूर्वपूर्वसर्गानुपूर्वीसापेक्षतया आविर्भाव्यन्ते । नैयायिकादिरीत्या तु वर्णादीनामनित्यत्वेऽपि पूर्वपूर्वकल्पीयानुपूर्वीसव्यपेक्षयैव ईश्वरेण तानि निर्मीयन्ते । मीमांसकरीत्या पौर्वापर्यलक्षणक्रमस्यानित्यत्वेऽपि प्रवाहरूपेण पदवाक्यादीनां नित्यत्वम् ।

पूर्वापरचिरप्रत्ययाश्च कालालम्बनाः । तेन ध्वनिभिर्वर्णेषु व्यज्यमानेषु पूर्वापरभावेन व्यज्यमानः काल एव क्रमः । स च नित्य इति तद्विशिष्टस्य नित्यत्वबोधकाभावः । तद्विशिष्टवदादीनां नित्यत्वे न बाधा । तदुक्तं वाक्यपदीये—

"प्रत्यक्षप्रत्यभिज्ञानाद् वर्णैकत्वं प्रतिष्ठितम् ।
वर्णात्मकं पदं तच्च तद्भेदान्न भिद्यते ॥"

आकृतिनित्यतया प्रवाहनित्यतया चार्थोऽपि नित्यः । मिथ्योपाध्यवच्छिन्नं ब्रह्मैव वाच्यम् । जातिःशब्दार्थ इति मते च सुतरामर्थो नित्यः । 'सिद्धे शब्दार्थसम्बन्धे' इति वार्तिके जात्याख्यायामिति सूत्रे च भाष्ये तत् स्पष्टम् ।

शब्दार्थसम्बन्धोऽपि नित्यः। नेदं प्रथमतया स कर्त्तुं शक्यः, सर्वपदशक्त्यग्रहकाले केनाऽपि पदेन सम्बन्धोपदेशासम्भवात् प्रयोक्तृप्रतिपत्त्रोरगृहीतसङ्गतिकयोरज्ञातसङ्गतिकैः शब्दैर्व्यवहारासम्भवात्। 'सिद्धे शब्दार्थ-सम्बन्धे' 'नित्यो हि अर्थवतामर्थैरभिसम्बन्धः, औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इति। कात्यायनपतञ्जलिजैमिनीवचनेभ्यः। औत्पत्तिक इति नित्यं ब्रूम इति शाबरभाष्यम्। औत्पत्तिकः स्वभावसिद्धोऽनादिरिति। स च सम्बन्धः शब्दैरर्थानां बुद्धौ कल्पनात् कार्यकारणभावरूपः इन्द्रियविषययोः प्रकाश्य-प्रकाशकभावरूपो वा योग्यतालक्षणो वा। योग्यता च बोधजनकत्वरूपा वाच्यवाचक-भावरूपशक्तिग्रहतादात्म्यरूपा वा। उभयविधस्य सम्बन्धस्य परिच्छेदकः सङ्केत इति। नागृहीतसङ्केताच्छब्दार्थावबोधः।

यथा विज्ञाने जायमाने तत्प्रामाण्यं स्वत एव गृह्यते, यथा वा आत्मनि अहं वा नाहं वेति न सन्दिग्धे, न च नाहमिति विपर्यस्यति, स्वप्रकाशत्वादेव, तथैव श्रुतिस्मृति-लक्षण आगमोऽनादिशिष्टपरम्परयाप्राप्तत्वादसन्दिग्धविपर्यस्ततया बोधजनकत्वाद-पौरुषेयत्वतन्मूलकत्वाभ्याञ्चापास्तसमस्तपुंदोषयता स्वतः प्रमाणमेव।

किं बहुना श्रुतिस्मृत्यनपेक्षयापि आप्तानामृषीणां वचनबलादेव जनसाधारणस्य हिंसाव्यभिचारादौ पापबुद्धिः, दानयज्ञपरोपकारादौ धर्मबुद्धिर्बद्धमूला। तदुक्तम्—

'इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये।
आचाण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम्॥
(वा० प० ब्र० का० ४०)

किन्तु वक्तव्यमनाद्यपौरुषेयमन्त्रब्राह्मणात्मकवेदतच्चरणाश्रितार्षग्रन्थानामपास्त-समस्तशङ्काकलङ्कपङ्कानां शास्त्राणां प्रामाण्यस्वतस्त्वे। हस्तस्पर्शादिना मार्गमनुमाय विषमे पथि धावतोऽन्धस्येव तर्कप्रधानस्य विनिपातो न दुर्लभः। तस्मादेव शिष्टैस्त-दागममाश्रित्यैव शब्दानुशासनमारभ्यते। वैयाकरणैर्वेदानामकृतकत्वेनापौरुषेयत्वमेवा-भ्युपेयते—

न जात्वकृतकं कश्चिदागमं प्रतिपद्यते।
बीजं सर्वागमापाये त्रय्येवातो व्यवस्थिता॥
(वा० प० ब्र० का० १३३)

अस्तं यातेषु वादेषु कर्त्तृष्वन्येष्वसत्स्वपि।
श्रुतिस्मृत्युदितं धर्मं न लोको व्यतिवर्तते॥
(वा० प० ब्र० का० १३४)

कपिलादिज्ञानानामप्याम्नायपूर्वकत्वम्।

ज्ञाने स्वाभाविके नार्थः शास्त्रैः कश्चन विद्यते।
धर्मो ज्ञानस्य हेतुश्चेत्तस्याम्नायो निबन्धनम्॥
(वा० प० ब्र० का० १३५)

एवं वर्णानां नित्यत्वेन न तत्पौरुषेयत्वेन वेदानां पौरुषेयत्वम् । घटादिपदगता वर्णानुपूर्वी चापि प्रवाहरूपेण नित्यैव, तस्यासादित्वे प्रमाणाभावात् । कुम्भकारादिपदे पदानामपि चानुपूर्वी नित्यैव । तस्माद् वर्णपदानुपूर्वीणामपि पौरुषेयत्वमुखेनापि न वेदानामपौरुषेयत्वम् बाध्यते । तथैव वेदे वर्णपदानुपूर्वी भाञ्जि वाक्यान्यपि नित्यान्येवेति न कथञ्चन तत्र पौरुषेयता प्रवेशः[१] ।

अथ सर्वमिदं वेदस्यापौरुषेयत्वे स्यात्, अपौरुषेयत्वं च वेदस्य प्रतिज्ञातमौत्पत्ति सूत्रे तच्च तदेव घटते यदि वर्णात्मकस्य शब्दस्य नित्यत्वं स्यात्, तच्च न सम्भवति तदनित्यत्ववादिभिस्तार्किकैर्निरस्तत्वात् ।

किञ्च शब्दसामान्याद्वेदस्य जन्यतया पौरुषेयत्वेन भ्रमप्रमादादिपुरूषदूषणाक्रान्तस्य सुतरामप्रामाण्यापत्तिरतस्तार्किकपक्षं पूर्वपक्षीकृत्याष्टादशसूत्रात्मकेनाधिकरणेन शब्दानां नित्यत्वं स्वयमेव सिद्धान्तितं भगवता जैमिनिना पूर्वमीमांसादर्शने । यथा—

**अध्याये १ पादे १**

कर्मैके दर्शनात् ॥६॥
आस्थानात् ॥७॥
करोति शब्दात् ॥८॥
सत्त्वान्तरे यौगपद्यात् ॥९॥
प्रकृतिविकृत्योश्च ॥१०॥
वृद्धिश्च कर्त्तृभूम्नाऽस्य ॥११॥
समन्तु तत्र दर्शनात् ॥१२॥
सतः परमदर्शनं विषयानागात् ॥१३॥
प्रयोगस्य परम् ॥१४॥
आदित्यवद्यौगपद्यम् ॥१५॥
शब्दान्तरमविकारः ॥१६॥
नादवृद्धिपरा ॥१७॥
नित्यस्तु स्याद्दर्शस्यपरार्थत्वात् ॥१८॥
सर्वत्र यौगपद्यात् ॥१९॥
सङ्ख्याऽभावात् ॥२०॥
अनपेक्षत्वात् ॥२१॥
प्रख्याभावाच्च योगस्य ॥२२॥
लिङ्गदर्शनाच्च ॥२३॥

---

१—श्रीकरपात्रस्वामी, वेदस्वरूपविमर्शः, पृ० १, ४७, ५१, ६४. ४६, ६८, ७९, १०६, ३७९, ३९१, ४०६, ४२०।

ननु वर्णानां नित्यत्वान्नैवेमे पौरुषेया अभूवन् आनुपूर्वी च वार्णी मा पौरुषेयतां स्प्राक्षीत् कुम्भकारादिपदे पदानामपि चानुपूर्वी मा पौरुषेयतामनुभूत् एवमन्यन्वयबोधौपयिकः पदानां समभिव्याहारास्तु पुरुषतन्त्रतां मैव त्याक्षीत् अत एव च मा लौकिकानि वाक्यानि पौरुषेयतां त्याक्षुः नहि लौकिकेषु वाक्येषु शाब्दबोधोपयोगिनो वर्णानां पदानां वाऽऽनुपूर्वी पुरुषेण स्वतन्त्रेण कर्त्तुमकर्तुमन्यथाकर्त्तुं वा शक्यते तथा सति शब्दस्यैवानुदयप्रसङ्गात् न हि घटेत्युक्ते घटस्य कारकुम्भेत्युक्ते कुम्भकर्त्तुर्वा शब्दं सम्भवति। वर्णास्तूक्तरीत्या नित्या एव समभिव्याहारास्तु पदानां शाब्दोपयोगी पुरुषतन्त्रः राज्ञः पुरुष इति वाक्यादिव पुरुषो राज्ञ इति वाक्यादभिमतशाब्ददर्शनात् यदि त्वसौ समभिव्याहारोऽपि पौरुषेयतां जह्यात् तदा लौकिकेष्वपि वाक्येषु का नामपौरुषेयता वर्णनपथमवतरेत्। स चायं लौकिकेष्विव वैदिकेष्वपि वाक्येषु जागर्त्येव शब्दोदयस्योभयत्र समानत्वात् तस्य च पौरुषेयत्वाव्यभिचारेण वेदस्यापि पौरुषेयत्वं दुष्परिहरमेव अयमेव हि वाक्यत्वव्यवहारस्यासाधारणं निदानम्। श्रूयते च "प्रजापतिर्वेदानसृजत"। 'तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत' (यजु० ३१।७), 'यज्ञो वै विष्णुः' (श. का. १। अ. १ ब्रा. १ कं. १३), 'तेभ्यस्तप्तेभ्यस्त्रयो वेदा अजायन्ताग्नेर्ऋग्वेदो वायोर्यजुर्वेदः सूर्य्यात्सामवेदः' ( श. ११।५ ) इति। बहुशः स्मर्यते च पुराणादिषु ब्रह्मणो वेदकर्तृत्वम् तथा च पौरुषेया एव वेदा इति चेत्—

उक्ते हि शाब्दोपयोगिनि समभिव्याहारे केवलमुच्चारणमपेक्ष्यते न तु तस्य मुख्यं प्राथम्यम्, प्राथम्यघटितश्च वाक्यानां कर्तृत्वं भारतादिषु प्रसिद्धम्। प्रथमोच्चारणकर्त्र्यप्येव कर्त्तृत्वव्यवहारात् एवञ्चोक्तः समभिव्याहारः स्वकारणतयोच्चारणमेवाक्षेप्तुं क्षमते न तु तस्य प्राथम्यमपि अप्रयोजकत्वात्। येनापि शिष्याद्युच्चारणेन गुर्वाद्युच्चारणमपेक्ष्यते तेनापि तस्य पूर्वत्वमात्रमपेक्ष्यते न तु मुख्यं प्राथम्यमपि येनोच्चारणप्रयोजकतयाऽपि तादृशसमभिव्याहारे तादृशं प्राधान्यमुपयुज्येत तथा च तादृशसमभिव्याहारस्यानुपयोगिना मुख्यप्राथम्येन घटितं कर्त्तृत्वं कथं तत्रोपयुज्येत। उच्चारणकारणोच्चारणानुसरणपरम्परा तु भारतादौ कर्तृस्मरणेनैव निवर्त्यते। वेदत्वेनादित्वादेव नासावविच्छिन्नाऽपि दोषमावहति। वेदानां हि यदि कश्चित्कर्त्ता स्यात्तदाऽवश्यमसौ वेदान् रचयन् तादात्विकैः पुरुषैः प्रत्यक्षेणानुभूयेत तैश्चान्येभ्यः कथ्येत तैश्चान्येभ्य इत्येवं परम्परया नियतरूपमेव स्मृतिकर्तृमन्वादीनामिव तस्य कर्त्तृरध्येतृभ्यः स्मरणपारम्पर्यमद्य यावज्जगति जागर्य्यादेव न तु तदस्ति तस्मान्न कश्चिद् वेदस्य कर्त्तेति।

प्रजापतिर्वेदानसृजतेत्युक्तश्रुतौ न सृजती रचनार्थः किन्तूच्चारणमात्रार्थः। अन्यथा श्वेताश्वराणां मन्त्रोपनिषदि अध्याये—

यो ब्रह्माणं विदधाति पूर्वम् यो वै वेदाश्च प्रहिणोति तस्मै।
तं ह देवमात्मबुद्धिप्रकाशम् मुमुक्षुर्वै शरणमहं प्रपद्ये ॥१८॥

इति श्रुत्या सह दुष्परिहरो विरोध आपतेत् अत्र हि "उपप्राकाराग्रं प्रहिणु नयने" "सत्वेन्द्रुरिन्दुःप्रहितः" इत्यादाविव प्रोपसृष्टस्य हिनोतेः प्रापणमर्थः। तच्च सिद्धस्यैवाजादेर्ग्रामादौ भवति ब्रह्मण्ये वेदकर्तृत्वे तु तद्विरोधः स्पष्ट एव। किञ्च ब्रह्माणं विदधातीत्युक्त्वा वेदानित्यत्र विदधातिमप्रयुञ्जानाऽसौ श्रुतिर्ब्रह्मणः पौरुषेयत्वेऽपि वेदानां तद्वारयति यदा च ब्रह्मणोऽपि विधायको न वेदानां विधायकः किन्तु प्रहिणोत्येव तान् तदा कुतो वक्तव्यम् ब्रह्मा तद्विधातेति तात्पर्यात् एतच्च पाराशरमाधवीयोपन्यासेनाऽप्युपरिष्टात् "द्विर्बद्धमिति" न्यायेनोपपादयिष्यते। सृजेस्तु नोत्पादनार्थत्वनियमः "महेन्द्रचापप्रतिमेनधन्वता भृत्तायतेनाधिरथिः शरान् सृजन्" इत्यादिषु भारतादिप्रयोगेषु सृजन्तमाजाविषुसंहतीर्वः सहेत कोपञ्चलितङ्गुरुं कः" इत्यादिषु क्षेपार्थकताया दृष्टत्वात्। किञ्च उदाहृतासु तज्जातीयास्वन्यासु च श्रुतिषु वेदविषया ये सृज्यादयो दृश्यन्ते तेषां निर्मार्थकत्वे तत्र विष्णुप्रजापतिसूर्य्यादीनां निर्मातृताकथनात् प्रसज्यमानः श्रुतीनामन्योन्यविरोधो न शक्यो वारयितुम् उच्चारणमात्रार्थकत्वे तु नासौ प्रसज्यते, दृश्यते च मातुरुदर एवोत्पन्नस्य चैत्रादेस्ततो निस्सरणमात्रेऽपि "अद्य चैत्रो जात इत्यादिर्लोके जन्यादेः प्रयोगस्तथैवोक्तश्रुतिष्वप्यस्तु ब्रह्मण्ये वेदसृष्टेर्वोधिकानाम् 'अनन्तरं तु वक्त्रेभ्यो वेदास्तस्य विनिःसृता' इत्यादिस्मृतीनां तु प्रकृतश्रुतिमूलकत्वादेवोच्चारणमात्रे तात्पर्यं न त्वाद्योच्चारणे, "प्रतिमत्वन्तरञ्चैषा श्रुतिरन्या विधीयते" इति स्मृतौ तु एषा अन्या विधीयत इति विप्रतिषेधनिरासायान्यत्वविधानानुच्चारणभेदमात्रनिबन्धनमारोपितमेवेति न क्षतिः।

एवं "वेदान्तविद् वेदविदेव चाह" मित्यत्रापि वेदानामन्तस्याप्रचारस्य 'कृत्' छेत्ता सम्प्रदायप्रवर्त्तनादितिवेदान्तकृदित्येवार्थः वेदानामन्तस्य सम्प्रदायह्रासरूपलोपस्य 'कृत' कर्त्ता संहारकत्वादिति वा अथवा वेदसम्प्रदायस्य लोपकत्वं प्रवर्त्तकत्वञ्चोभयमप्यर्थः। न तु वेदान्तानां कृतकर्त्तेति। तथा सति विध्यादिवेदभागानामपौरुषेयतयाऽर्द्धजरतीयत्वापत्तेः। तथा च भारतादाविव वेदे न काचिदप्यनन्यथासिद्धाकर्तृस्मृतिरुदाहर्तुं शक्यते।

"वाचा विरूप, नित्यये" ति मन्त्रगतेन नित्येति लिङ्गेन सकल एव वेदे पौरुषेयात्वसन्देहसमूहोऽपोह्यत इति। भट्टपादैस्तु पूर्वोक्तः श्रुतिस्मृतिमूलक आक्षेपोऽन्यथैव परिहृतः। तथाहि—भारतेऽपि वेदवदपौरुषेयत्वं स्यात् यदि तत्र कर्तृस्मृतिर्न स्यात् अस्ति चासाविति पौरुषेयतां स्थपन्त्या तया भारतादपौरुषेयता बाध्यते या तु वेदस्य कर्तृस्मृतिः पुराणादावुपलभ्यते नासावनुभवमूला किन्तु 'प्रजापतिर्वेदानसृजते' त्यर्थवादमूलैव। यदि हि वेदानां कर्ता तात्कालिकैः पुरुषैः प्रत्यक्षेणानुभूयेत तदा तैरन्येभ्यस्तैश्चान्येभ्य उच्येतेति परम्परयाऽऽधुनिकाध्येतृभिरपि तस्य स्मरणं स्यान्न तु तदस्तीत्यर्थवादादेव सामान्यतो दृष्ट्वा स्मृतिरियमाह। अर्थवादश्च 'स्तुतिपरा अर्थवादा न स्वार्थपरा' इत्यर्थवादाधिकरणवक्ष्यमाणसिद्धान्तानुसारान्न वेदस्य कर्त्तारं प्रमाणयितुमीष्टे किमुत तन्मूला

स्मृतिरतो भ्रान्तिमूलैव सा । अथ स्मृतेर्मूलान्तरमेव कल्पयित्वा तस्याः सम्यक्त्वमेव कुतो न स्वीक्रियत इति चेन्न परम्परया हि स्मरणाभावेन नानुभवमूलता शक्या कल्पयितुम् सम्भवति चार्थवादस्य मूलत्वमतो न तस्मिन् सति मूलान्तरं कल्प्यम् । एवं तर्ह्यन्यपरत्वेनार्थवादस्यापि मूलत्वासम्भवादमूलकत्वमेव तस्या इति चेत् 'सत्यम्' तथापि अन्यपरेभ्योऽपि वाक्येभ्योऽद्यत्वे भ्रान्तिदर्शनेन सन्मूलकत्वाभावदशायाममूलकत्वकल्पनामपेक्ष्य भ्रान्तिमूलकत्वकल्पनमेव न्याय्यमिति । तथा च वाक्याधिकरणे श्लोकवार्त्तिके भट्टपादाः ।

भारतेऽपि भवेदेवं कर्तृस्मृत्या तु बाध्यते ।
वेदेऽपि तत्स्मृतिर्या तु साऽर्थवादनिबन्धना ॥३६७॥

पारम्पर्येण कर्त्तारं नाध्येतारः स्मरन्ति हि ।
तेषामनेवमात्मत्वात् भ्रान्तिः सेति च वक्ष्यते ॥३६८॥

तेषु च ध्रियमाणेषु वनमूलान्तरकल्पना ।
तथा ह्यद्यतनस्यापि ते कुर्वन्तीदृशीं मतिम् ॥३६९॥

ननु माभूद् वेद एकपुरुषकर्तृकः अनेकपुरुषकर्तृकस्तु स्यात् । अनेककर्तृत्वञ्च द्वेधा । आद्यम् स्वर्गादौ कठादिनामकै रामकृष्णादिभिरिवपरमेश्वरावतारविशेषैः स्वस्वनामाङ्कितशाखानां प्रणीतत्वम् । द्वितीयन्तु जीवविशेषैरेव कठादिभिर्ऋषिभिः स्वस्वनामांकितशाखानां प्रणीतत्वमिति । तन्त्रादिमं कल्पं नैयायिका अवलम्बन्ते । द्वितीयन्तु वाह्या उभयथा च वेदस्यापौरुषेयता निराक्रियते उपपत्तिश्चोभयत्र प्रायो निर्विशेषैवेत्यनुपदमेव स्फुटीभविष्यति । फलोपपत्त्योरैक्यानुरोधादेव च तार्किकान् वाह्यांश्चैककोटीकृत्यैकेनैव सूत्रेण कल्पद्वयं सञ्जग्राह भगवान् जैमिनीः "वेदांश्चैके सन्निकर्षं पुरुषाख्याः" (१।१।२७)।

सन्निकर्षमिति परीप्सायां णमुल् । द्वितीयायाञ्चेत्यत्र परीप्सायामित्यनुवृत्तेः : परीप्सा च त्वरा आहुरिति शेषः एवञ्च एके नैयायिकादयः । वेदान् सन्निकर्षमाहुः त्वरया आपातमात्रेण । सन्निकृष्यसामीप्येन आधुनिकत्वेन स्वीकृत्य । आहुः पौरुषेयानाहुरिति यावत् । पौरुषेयतायामप्राप्राप्यापत्तेर्दुर्वारतया तदनाकलनमापातः । वेदान् सन्निकर्षम्—सादीन् आहुः इत्यर्थे तु सन्निकर्षमित्येकवचनानुपत्तिरतः सौत्रत्वेन परिहारे गौरवम् । पौरुषेयत्वे हेतुमाह पुरुषाख्याः नामानीत्यर्थः । अत्राऽयमाशयः । समाख्यैव शाखानां पौरुषेयत्वे प्रमाणम् ।

न च सामान्यप्राप्तौ सत्यामेव विशेषविषये समाख्या व्याप्रियते यथा परिक्रयणेनोपात्तानामृत्विजां कर्मस्वनियमेन कर्तृत्वप्राप्तावाध्वर्य्यवादिसमाख्यया नियमः क्रियते । न चेह वेदानां कर्तृसामान्यं कुतश्चित्प्राप्तं यतः काठकादिसमाख्यया कठादयो

नियम्येरन् किञ्च प्रवचनेनाऽपि शक्योपपादनायाः समाख्याया न कठादीनां कर्तृत्वं प्रत्यसाधारणं गमनिकावलमिति वाच्यम् लौकिकवाक्यसाधर्म्यादेव वेदेऽपि कर्तृसामान्यस्य प्राप्त्या काठकादिसमाख्यानां नियामकत्वे बाधकाभावात् ।

अस्मरणेनानुपदमेव कर्त्ता निराकृत इति चेत्, न ह्यप्राप्तौ निराकरणम् वैयर्थ्यात् । शशश्रृङ्गादेरपि निराकरणापत्तेश्च । अस्मरणरूपश्च बाधकोऽस्य सिद्ध एव, काठकादिसमाख्यानामेवाद्य यावदपि कर्त्तृस्मरणपरम्पराप्रवर्त्तने सामर्थ्यात् । एवञ्च वचनान्तरसामर्थ्यात् कर्त्तृसामान्यप्राप्तिः, समाख्याभिश्च कर्त्तृविशेषस्मृतिप्रसोत्रीभिराध्वर्य्यवादिवद्विशेषनियम इति कुत्र कस्य बाधकस्यावसरः । किञ्च प्रवचनेनापि न समाख्यानामन्यथासिद्धिः शक्यशङ्का, शैष्योपाध्यायिकाघटकानां प्रवक्तृणामानन्त्येनैकस्यामपि शाखायां विनिगमनाविरहादहमहमिकया समाख्यासहस्रापर्य्यवसानवैशसप्रसङ्गात् ।

न च येन या शाखा प्रकर्षेणाधीना सा तत्समाख्येति वाच्यम्, आद्यत्वादन्यस्य वचनगतस्य प्रकर्षस्य दुर्वचत्वात् । नह्युपाध्यायान्वयपठितानुपूर्वीरूपः प्रकर्षः प्रकृते वक्तुं शक्यः । तथा सत्युपाध्यायेभ्योऽपि प्रकर्षे प्रत्युतान्यथाकरणदोषप्रसङ्गात् । तत्पाठमात्रानुकरणे च प्रकर्षस्यैवासम्भवात् । यदि चोच्चारणे श्रवणमनोहरत्वं प्रकर्षः तदापीदृङ्महीयसि संसारे काले च कति तादृशाः प्रवक्तार इति पूर्वोक्तं सामाख्यावैशसमेवावर्तते । अथ ब्राह्मणत्वावान्तरजातिभेदा एव कठादयस्तद्वदध्येया तद्वदनुष्ठेयार्था च शाखातत्समाख्यया व्यपदिश्यत इति किमनुपपन्नमिति चेन्न ब्राह्मणत्वव्याप्यायाः कठत्वादिजातेः क्षत्रियादावभावेऽपि क्षत्रियादेस्तत्तच्छाखाध्ययनादावधिकारदर्शनात् । नहि क्षत्रियादेरन्यो वेदोऽस्ति । भवतु वा क्षत्रियादिभिरधीयमानाऽपि शाखा तेषामध्यापयितृत्वाभावात्काठकादिपदवाच्या, कठादेरध्यापयितृत्वात् । तथापि कठाः काठकमेवाधीयते तदर्थमेव चानुतिष्ठन्ति इति नियमोऽनुपपन्न एव, तेषु शाखान्तरसञ्चारस्यापिदर्शनात् ।

न च प्रागेवायन्नियम आसीदिदानीन्तु कठत्वादिजातीनां काठकादिसमाख्यानां च विप्लव इति वाच्यम्, अद्यत्व इव तदात्वेऽपि तादृशजातिविप्लवप्रयुक्तसमाख्याविप्लवाभ्युपगमे बाधकाभावेन गतिविरहापत्तेः । तस्मात् आद्यप्रवक्तृप्रवचननिमित्त एवायं समाख्याविशेषसम्बन्ध इति पौरुषेयीणां शाखानां पुरुषस्वभावभ्रान्त्यादिदोषैराक्रमणादप्रामाण्यमेवेति चेत्, न—उक्तन्तु शब्दपूर्वत्वम् । आख्याप्रवचनात् ( जै. १।१।२९-३० ) इति सूत्राभ्याम्, शब्दे पूर्वत्वंनित्यत्वमुक्तं साधितं प्राक्, शब्दस्य च नित्यत्वे सिद्धे वेदस्यापि नित्यत्वम् "वाचा विरूप; नित्यया" इत्यप्युक्तम्; २९ आख्याकाठकादिसमाख्याप्रवचनात् अध्ययनात् कठेनाधीतं काठकमित्युपपन्नः ३० इत्यर्थकाभ्यां मुनिना जैमिनैव दत्तोत्तरत्वात् । अयं हि तदभिप्रायः ।

कर्तृस्मृत्यभावस्तावद् वर्णितपूर्व एव । वाक्ये च कर्त्ता न किमपि प्रयोजनमस्ति, अस्त्येव हि स्वतन्त्रे कर्त्तरि साम्प्रतमिव सर्वदाऽपि परतन्त्रैरेवाध्येतृभिराञ्जस्येन वाक्योक्तिः सुतरां सम्भविनी अन्यथोपपन्ना चासौ कथङ्कारं कर्तृसामान्यं प्रापयितुं प्रभवेत्, अप्राप्तौ च सामान्यस्य क्वासौ समाख्याऽधिष्ठायिनी विशेषनियमता वराकी । न च समाख्यैवानन्यथसिद्धा श्रुतेः पुंयोगे गर्भश्रुतिरिव कुमार्याः स्वयमेव मानं किं न स्यादिति वाच्यम्, काठकशब्दे 'चरणाद्धर्मामनाययोरिति वक्तव्यमि' ति तस्येदमिति सम्बन्धिमात्रार्थि बुभविधायिकाया, कात्यायनीयस्मृतेरिव कौमुमादिशब्देषु इतिवत् 'तेन प्रोक्तम्' 'तदधीते तद्वेद' इत्यादीनामपि पारमर्षस्मरणानां जागरूकतया समाख्याया अन्यथासिद्ध्यैव ग्रस्तत्वात् । किञ्च समाख्यया कल्पितेन पौरुषेयतामिषेण वेदस्याप्रामाण्यमापायतां मते न्यायत्रयबाधौ दुर्वारः । दुर्बला हि समाख्या श्रुत्याद्यपेक्षया, अप्रधानञ्च वेदाङ्गम्, तदभिधानार्थत्वात् अल्पीयसी च भूयसः शब्दराशेरपेक्षया । ततश्च नैनमाश्रित्य श्रुत्यात्मकस्य प्रधानस्य भूयसः शब्दराशेरप्रामाण्यमापादयितुं युक्तम् ।

न च समाख्यया पौरुषेयतैव मया साध्यते नत्वप्रामाण्यमप्यापद्यत इति वाच्यम्, पौरुषेयतायां सत्यां प्रामाण्योपपादानस्य दुष्करतायाः पूर्वमेव निपुणतरमुपपादितत्वेन तद् वचनस्य 'शिर एव मया छिद्यते न तु जीवोऽपि व्यापाद्यते" इत्येतद् वचनसमानयोगक्षेमत्वात् । अथैवं समाख्यायाः का गतिरिति चेत्, श्रूयताम् । अश्वकर्णादिवद् रूढिरेवेयं निर्निमित्ता भवतु, स्वीकरिष्यते खलु अनुपदमेवोदाहरिष्यमाणेन "परं तु श्रुतिसामान्यमात्रम्" इतिसूत्रेण बर्बरादिशब्देषु रूढिस्तद्वदिहाप्यस्तु । यद्वा । अध्ययनस्याध्येतृसहस्रसाधारण्येऽपि कठेनैव विशेषितं तत् समाख्यानिमित्तं वैरूपसामवत् । दशमे हि बाधलक्षणे ६ पादे "उक्थ्योवैरूपसामा एकविंशः षोडशी वैराजसामा" इति श्रुति विषयीकृत्य सर्वेषां प्राकृतसाम्नां निवृत्तिमाशङ्क्य "वैरूपसामा क्रतुसंयोगात् निवृत्त्वदेकसामास्यात्" १५ इति सूत्रेण, पृष्ठचस्तुतावेव रथन्तरादिमात्र जैमिनिना, तथैव प्रकृतेऽपि कठादेरितरकावर्तकत्वासम्भवेऽपि सत्तामात्रेणाध्ययनविशेषणता निराबाधैव । अथवा बक्तृत्व यद्यग्नीषोमोभयपर्य्याप्रदेवतात्ववद्बहुषु पुरुषेषु व्यासज्यवृत्तिःस्यात्; तदा सापेक्षत्वेन सामर्थ्याभावादग्नीषोमीयं हविराग्नेयशब्देनेव कठतदन्यप्रवक्तृका शाखा काठकशब्देन न व्यपदिश्येतापि तत्तु न तथा किन्तु प्रत्येकपर्य्याप्तमेव पुत्रत्ववत् । अतो यथा डित्यवित्थयोरपि माता डित्थमातेत्युच्यते, तथा बहुभिरपि प्रोच्यमाना शाखा शक्यत एव काठकशब्देन व्यपदेष्टुम् । न च को ब्रूते काठकशब्देनासौ मा व्यपदेशीति अपि तु प्रवक्तृत्वस्याविशेषात् कठवदेव पुरुषान्तरेणापि किं न व्यपदिश्यत इत्येवेति वाच्यम्, समाख्यया व्यपदेशो हि यदि सम्मार्जनादिवत्प्रवक्तृसंस्कारार्थः स्यात्तदा प्रतिसंस्कार्यमावर्तेत न चासौ तथा किन्तु शाखाविशेषणार्थ एव, तद्विशेषणञ्च प्रवक्तृणामेकेनापि सुसम्पादमिति किमर्थं पुरुषान्तरमादरणीयम् यथैकेनैव यजमानेन सत्रे यूपसंमानं तद्वत् ।

नचैकेनापि व्यपदेशे किमिति शाखा नियमतः कठेनैव व्यपदिश्यते न कदाचिदपि पुरुषान्तरेणेति वाच्यम्, यदि हि सा समाख्याऽस्मदायत्ता स्यात् तदा वयमवश्यमेव पर्य्यनुयोज्या भवेम। अस्माकं तु विद्यमानाया एव तस्या निमित्तनिरूपणमात्रेऽधिकार इति नास्मासु पर्य्यनुयोगावसरः। दृश्यन्ते च साधारणस्याप्येकेन व्यपदेशाः यथाऽनेकर्षिसेवितेषु तीर्थेषु मार्कण्डेयतीर्थमगस्त्यतीर्थमित्यादयः। प्रवचनमप्यध्ययनमात्रमिति न पूर्वपक्षोक्तप्रकर्षनिर्वचनकुचोद्यावकाशः।

किञ्चासौ समाख्यापि नित्या, पौरुषेयो वा ? नित्या चेत्, नैव पुरुषनिमित्ता भवितुमर्हति, पौरुषेयी तु तत्प्रणेतुराप्तत्वे प्रमाणाभावात् स्वयमेवासत्या सती कथं त्वदभिमतां पौरुषेयतां साधयितुमलं भवेत्, यद्वा नेयमादिमत्पुरुषनिमित्ता कठादिसमाख्या किन्तु नित्यैव, ब्राह्मणक्षत्रियादिभिरधीयते तथापि डित्थमाना कुमारतीर्थम् इत्यादिवत्कठनिमित्ततया शाखान्तरेभ्यो व्यावृत्तया नित्ययैव समाख्याऽभिधीयते। तस्मान्न समाख्यया शाखासु पौरुषेयत्वस्य तन्मूलकस्याप्रामाण्यस्य चापादनं कथमपि शक्यम्।

तथा चात्रैव ३० सूत्रे वार्त्तिकम्।

स्मृतिप्रयोजनाभावात् कर्त्तृमात्रेऽनपेक्षिते।
सामान्यसिद्ध्यपेक्षत्वान्न समाख्या नियामिका॥

अन्यथाऽप्युपपन्नत्वादियं प्रवचनादिना।
न शक्ता कर्त्तृमूलाय प्रोक्ते च स्मरणं स्थितम्॥

श्रुत्यादेर्दुर्बला चासौ न शक्ता तानि बाधितुम्।
अङ्कभूयांसमेकेयं शब्दराशिं न बाधते॥

कामं वा निर्निमित्तेयं शाखामेकां वदिष्यति।
श्रुतिसामान्यमात्रं हि नात्रदण्डेन वार्यते॥

सति साधारणत्वे वा संभवेन विशेषणम्।
यथा वैरूपसामेति सत्तयैव प्रतीयते॥

अव्यासङ्गि च सर्वेषु प्रवक्तृत्वं कठादिषु।
तेनैकव्यपदेश्यत्वं लक्ष्यते डित्थमातृवत्॥

अन्यैस्तुल्येऽपि सम्बन्धे यत्तैर्न व्यपदिश्यते।
नह्येष कर्त्तृसंस्कारपारार्थ्ये चैक इष्यते॥

विद्यमाननिमित्तं च कथ्यते नासतः क्रिया।
साधारणं च तीर्थादि केनचिद् व्यपदिश्यते॥

यदि चापौरुषेय्येषा नानित्यप्रतिपादिनी।
पौरुषेय्यास्तु सत्यत्वं कथमध्यवसीयते॥

नित्यमेव निमित्तं वा कठत्वं जातिरस्ति नः।
काठकादिप्रवृत्त्यर्थं व्यावृत्तं चरणान्तरात् ॥
(३–१२)

तार्किकास्तु जगत्कर्त्तृत्वेन भगवन्तं संसाध्य वेदेऽपि तमेव निमित्तत्वेन प्रक्षिपन्ते शब्दं चानित्यं प्रतिजानते। ते कर्त्रस्मरणं बाधकं न पश्यन्ति। किञ्च नित्याताङ्गवादीनामकर्त्तृत्वेन तेषां मते न भगवतो जगत्कर्त्तृत्वमुपहन्यते। तथैवास्माकमपि वेदाकर्त्तृत्वेन, नित्यत्वं च शब्दस्याधस्तादुपपादितमेवेति न तेषां मतं रोचयामहे।

नन्वौत्पत्तिकसूत्रे व्यक्तिरूपपदार्थस्यानित्यत्वेन प्राप्तं वेदस्यानित्यत्वं जातेः पदार्थमुपपाद्य परिहृतम् तदनर्थकम् इत्यादि वेदवाक्यानां प्रावाहण्याद्युत्पत्तेः प्रागसत्त्वनिश्चयेन सादितया पौरुषेयत्वापत्तितादवस्थ्यात्। नहि येषां चरितं येषु ग्रन्थेषूपनिबध्यते तेषां जन्मनः प्रागपि ते ग्रन्था आसन्निति सम्भावयितुमपि शक्यते। तथा च जैमिनिः— अनित्यदर्शनाच्च (१।१।२८)। अनित्यानां जननमरणवतां पुरुषाणाम् दर्शनाच्च प्रतिपादनदर्शनात्, अपि एके वेदान् सन्निकर्षमाहुरित्यर्थः। वार्त्तिकञ्च—

अनपेक्षसूत्रे या रूपात्कृतकतोदिता। वेदे साद्दश्यते स्पष्टा कृतकार्थाभिधायिनि (२)। किञ्च वेदेषु 'वनस्पतयः सत्रमासत'' ''गावो वा सत्रमासत'' इत्यादिदर्शनादुन्मत्तवाक्यत्वमेव तेषाम्। प्रागेव तु निरपेक्षं प्रामाण्यमिति चेन्न, तत्रैव परं तु श्रुतिसाममात्रम्'' (३१) इति सूत्रेणैव प्रथमाक्षेपस्य समाधानात्। अस्यार्थस्तु, यद्यपि बर्बरः प्रावाहणिरित्यस्ति परन्तु श्रुतिः प्रावाहण्यादिपदम् सामान्यमात्रम्। कालजातिविशेषाद्यविशेषितस्य उपदेशसौकर्य्यार्थं देवदत्तयज्ञदत्तादिवत्कल्पितपुरुषसामान्यस्यैवाविधायकम्। न तु कालविशेषजातिविशेषाद्यवच्छिन्नस्याभिधायकमिति।

युक्तञ्चैतत्। यदि हि प्रावाहण्यादिशब्दैः पुरुषविशेषा उच्येरन् तदा तेषामुत्पत्त्यादिकमपि क्वचिद्विशिष्यवर्णेन न तु तथावर्णितं क्वचिदपि वेदे। आख्यायिकासु च कल्पितैरेव नामभिर्व्यपदेशो बहुशो दृश्यते लोके तथैव वेदेऽपि, किञ्च एतावता महता प्रबन्धेन वेदस्य नित्यत्वे करतलामलकवत् प्रतिपादिते लौकिकीष्वप्याख्यायिकासु यानि नामानि नानित्यात् पुरुषविशेषान् विशिष्य नियमेनोपस्थापयन्ति वेदे तानि तानुपस्थापयेयुरिति संभावयितुमपि न शक्यमितरत्रासूयादिभ्यः। तथा चात्रसूत्रे वार्त्तिकम्—

अनित्यार्थाभिधायित्वं स्वयमेवैष मुञ्चति।
नित्यानित्यविकल्पेन वेदस्तादर्थ्यवर्जनात् ॥ १३ ॥
नित्यस्य नित्य एवार्थः कृतकस्याप्रमाणता ॥

एवं वैदिकलुङादीनां कालसामान्यार्थत्वमपि जैमिनिनैव परिहृतः—कृते वा नियोगः स्यात् कर्मणः सम्बन्धात् (३२)।

कर्मणः कर्मप्रतिपादकवाक्यस्य सम्बन्धात् परस्परसाकाङ्क्षपदघटितत्वात् वनस्पतय इत्यादीनामपि कृते प्रकृते कर्मणि स्तुतिद्वारा विनियोग इत्यर्थः। अयं भावः। नहि वनस्पतय इत्यादि वाक्यानि कथञ्चिदपि अनन्वितार्थकानि। क्रियाकारकसम्बन्धस्य तेषु स्पष्टत्वान्नापि बाधितार्थकत्वेन दुष्टानि। एतादृशेषु लौकिकेष्वपि वाक्येषु तादृशबाधस्यादूषणत्वात् प्रत्युत भूषणत्वाच्च। लोके हीदृशे विषये उपपादकस्य वाक्यार्थस्य बाधेनैवोन्नीतेन स्तुतौ निन्दाया वा तात्पर्येण प्रकृतो वाक्यार्थः स्तुत्या निन्दया वा दृढतरनिश्चयविषयत्वेनोपपाद्यते। ईदृश्येव च विषये कैमुत्यन्यायमुदाहरन्ति लौकिकाः यथा 'मद्गुरुणाम्, पादाङ्गुष्ठोऽपीदृशीः शङ्का असकृत्समाधित किमुत गुरवः "ईदृशीमाशङ्कां सुरगुरुरपि न प्रतिविधातुमीष्टे किमुत त्वम्" "मम माता बन्ध्या योऽहं न जातु भगवन्तमसेविषि" इत्यादौ। अत्र हि पूर्ववाक्यस्य वाच्यार्थबाधोऽपि मुख्यतात्पर्यार्थबाधाददोषः। एवमेव वेदेऽपि वनस्पतय इत्यादिवाक्यं न स्वाक्षरार्थे पर्यवसिततात्पर्यं येन तद्बाधो दूषणमानोढुं शक्नुयात् किन्तु वनस्पत्यादयो जडा अपि सत्रमनुतष्ठुः किमुत विद्वान्सः सत्रमनुतिष्ठेयुरित्यत्र संशय इति रीत्या प्रकृतस्य सत्रस्य स्तुतावेव तस्य तात्पर्यम्। अस्मिंश्च तात्पर्यार्थे स्तुतिरूपे किं नाम बाधसाध्वसम्। एवमेव निन्दावाक्येषु "अपशवो वा अन्ये गोऽश्वेभ्यः" इत्यादिष्वपि बोध्यमिति। अत एव वेदविषये माधवपाराशरे आचारकाण्डे यदर्थं सृष्टिसंहारौ संक्षिप्योक्तौ तत् प्रवाहनित्यत्वमिदानीमाह-पराशरः—

न कश्चिद् वेदकर्त्ता च नेदं स्मृत्वा चतुर्मुखः।
तथैव धर्मान् स्मरति मनुः कल्पान्तरेऽन्तरे॥

स्मृतिनिर्णेतॄणां मन्वादीनां स्मृतिकर्त्तृत्वदर्शनात् तथैव श्रुतिनिर्णेतॄणामपि वेदकर्त्तृत्वमाशङ्क्य निराचष्टे। न कश्चिदिति। न तावत् व्यासो वेदकर्त्ता, तस्य विभागमात्रकारित्वात्। नापि चतुर्मुखः ईश्वरेण चतुर्मुखाय वेदप्रदानात्। नापि जगदीश्वरः, तस्य सिद्धवेदाभिव्यञ्जकत्वात्।

ननु शास्त्रयोनित्वाधिकरणे ब्रह्मणः सर्वज्ञत्वसर्वशक्तित्वदार्ढ्याय वेदकर्तृत्वं व्यासेन सूचितम्। तेनैव देवताधिकरणे वेदनित्यत्वमपि ( अत एव च नित्यत्वम् शा. १।३।२९ ) प्रदर्शितम्। एवं तर्हि विरोधः परिहर्तव्यः। उच्यते वर्णानां पदार्थतत्सम्बन्धानां वाक्यानां चानित्यत्वं वैशेषिकनैयायिकादयो वर्णयन्ति। तान् प्रति मीमांसकाः प्रथमपादे कालाकाशादीनामिव वर्णानां नित्यत्वं वर्णयामासुः "व्यवहारे भट्टनयः" इत्यभ्युपगमं सूचयितुं देवताधिकरणे तदेव व्यावहारिकं नित्यत्वं सूत्रितम्। अतः कालिदासादिग्रन्थेष्विव वेदेष्वर्थावबोधपूर्विकायाः पदविशेषावापोद्वापाभ्यां प्रवृत्ताया वाक्यरचनाया अभावादपौरुषेयं युक्तम्। ब्रह्मविवर्तत्वं वियदादेरिव वेदस्याप्यस्तीति मत्वा शास्त्रयोनित्वाधिकरणे वेदकर्त्तृत्वं ब्रह्मणो दर्शितम्। अत एव भट्टपादाः सत्यपि पुरुषसम्बन्धे स्वातन्त्र्यं निवारयामासुः "यत्नतः प्रतिसंध्या नः पुरुषाणां स्वतन्त्रता"।

## आगमप्रामाण्यवादः

अष्टादशभिर्विद्याप्रस्थानैव बृंहितः वेद एव प्रमाणं स्यान्न तु तद्वाह्य आगमः। ततश्च पौरुषेयाऽपौरुषेयभेदेन निगमागमव्यवहारो मुख्यः, अतएवोच्यते प्रमाणनयतत्त्वालोकालङ्कारे देवसूरिभिः (४-१) 'आप्तवचनादाविर्भूतमर्थविशेषसंवेदनमागमः', उपचारादाप्तवचनञ्च—**आगमो ह्याप्तवचनम्, आप्तिं दोषक्षयं विदुः। क्षीणदोषोऽनृतं वाक्यं न ब्रूयाद् हेत्वसम्भवात्।**

आप्तः क्षीणदोष इति। शब्दकल्पद्रुमे तु एवमुदाहृतम्—

सृष्टिश्च प्रलयश्चैव देवतानां तथार्च्चनम्।
साधनञ्चैव मन्त्राणां पुरश्चरणमेव च॥
षट्कर्मसाधनञ्चैव ध्यानयोगश्चतुर्विधः।
सप्तभिर्लक्षणैर्युक्तं त्वागमं तद्विदुर्बुधाः॥
कर्त्तव्यत्वेन वै यत्र चातुरात्म्यमुपासते।
क्रमागतैः स्वसंज्ञाभिर्ब्राह्मणैरागमं तु तत्॥

आगमपदं शास्त्रमात्रे मन्वादिभिः प्रयुज्यते—

प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम्।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता॥

(१२।१०५)

हरिरप्याह वाक्यपदीये—

प्रज्ञाविवेकं लभते विभिन्नागमदर्शनैः।
अनुपासितवृद्धानां विद्या नाति प्रसीदति॥

ततश्च शब्दप्रमाणमात्रे इदानीमागमपदं प्रयुज्यते। तथा तन्त्रमपि मन्त्रपदप्रतिद्वन्द्वितया प्रयुज्यते, 'स्वतन्त्रः' 'परतन्त्रः' इत्यादौ 'तन्त्र' पदम् 'अधीन' मित्यर्थमवगमयति; ततोऽपि पुरुषाधीनमिति शक्यते समुल्लिखितुम्। न्यायभाष्ये तु (१।२।२६) 'इतरेतराऽभिसम्बन्धस्यार्थजातस्य उपदेशः शास्त्रतन्त्रम्' इत्युक्तम्।

तन्त्रलक्षणमप्येवं तन्त्रविद्भिरुदीर्यते ( शैवदर्शने सर्वदर्श० )—

त्रिपदार्थं चतुष्पादं महातन्त्रं जगद्गुरुः।
सूत्रेणैकेन संक्षिप्य प्राह विस्तरतः पुनः॥

'चतुष्पादमि' त्यनेन विद्याक्रियायोगचर्याख्यैश्चतुर्भिः पादैः सहितः प्रबन्धः महातन्त्रमिति सिध्यति । विष्णुसंहितायां तु सप्तमपटले—

सर्वेऽर्था येन तन्यन्ते, जायन्ते च भयाज्जनाः ।
इति तन्त्रस्य तन्त्रत्वं तन्त्रज्ञाः परिचक्षते ॥

अनेन 'मननान्मन्त्रः, तननात्तन्त्रः' इति सिद्ध्यति । तपोविशेषेण मनसा साक्षात्कृतो मन्त्रः, तदर्थस्य विस्तरेण निरूपणात्तन्त्रः । अयमपि विभागः पौरुषेयाऽपौरुषेयरूप इत्येव फलति । अत एव वाराहतन्त्रे तन्त्रलक्षणमेवमुक्तम्—

सर्गश्च प्रतिसर्गश्च मन्त्रनिर्णय एव च ।
देवतानां च संस्थानं तीर्थानां वर्णनं तथा ॥
तथैवाश्रमधर्मस्य विप्रसंस्थानमेव च ।
संस्थानं चैव भूतानां यन्त्राणां चैव निर्णयः ॥
उत्पत्तिर्विबुधानां च तरूणां कल्पसंज्ञितम् ।
संस्थानं ज्योतिषाञ्चैव पुराणाख्यानमेव च ॥
कोशस्य कथनञ्चैव व्रतानां परिभावनम् ।
शौचाशौचस्य चाख्यानं नरकाणाञ्च वर्णनम् ॥
हरचक्रस्य चाख्यानं स्त्रीपुंसोश्चैव लक्षणम् ।
राजधर्मो दानधर्मो युगधर्मस्तथैव च ॥
कथ्यते व्यवहारश्च तथा चाध्यात्मवर्णनम् ।
इत्यादिलक्षणैर्युक्तं तन्त्रमित्यभिधीयते ॥

एतेन सर्वसंग्रहस्तन्त्रप्रबन्ध इति विस्तरार्थकतनुधातुनिष्पन्नस्तन्त्रशब्द इति युक्तमुत्पश्यामः । यामललक्षणमप्येवमेव समुदाहृतम्—

**"सृष्टिश्च ज्योतिषाख्यानं नित्यकृत्यप्रदीपनम् क्रमसूत्रं वर्णभेदः,
जातिभेदस्तथैव च, युगधर्मश्च संख्यातो यामलं चाष्टलक्षणम्" ।**

एवञ्च प्राणभृतां सर्वव्यवहारानुकूलः सर्वशास्त्रसंग्रहस्तन्त्रप्रबन्ध इति । अत्राप्यागमेषु बहवो मन्त्राः श्रूयन्ते, तेषां कल्पमन्त्रा इति नाम । तेऽपि सप्तकोटिमहामन्त्रान्तर्गता वैदिका एवेति सिद्धान्तः । कल्पपदमपि मन्त्रब्राह्मणात्मकवेदलक्षणप्रयोगशास्त्रपरतया मीमांसकैर्व्यवह्रियते—

वेदादृतेऽपि कुर्वन्ति कल्पैः कर्माणि याज्ञिकाः ।
न तु कल्पैर्विना केचिन्मन्त्रब्राह्मणमात्रकात् ॥

तन्त्रवार्तिके ( २।१।४८ ) **तानेव वैदिकाञ्शब्दान् भारतादिनिवेशितान् स्वाध्यायनियमं हित्वा लोकबुद्ध्या प्रयुज्यते'** इति । आगमपदाभिधेयानामेतेषां

प्रबन्धानां चतुर्दशविद्यास्थानेषु धर्मशास्त्रेऽन्तर्भावं प्रकाशयन्ति पूर्वाचार्यैः ( दर्शनोदये आगमसारः पृ. ३९०–९३ )।

'प्रमाणं परमं श्रुतिः' इति वचनेन मनुना बुद्धादिशास्त्राप्रामाण्यं सूचितम्। यच्चापि पूर्वमीमांसासूत्रे वेदविरोधतः, हेतुदर्शनतश्चोक्तं प्रमाणत्वेऽनपेक्षितं तद्बौद्धाद्यागमांल्लक्ष्यीकृत्यैवेति। ततोऽपि तेषामेवाऽनपेक्षत्वादप्रामाण्यं भवेदिति।

"ततश्चैवमवधारयामः, अनादेः कालान्निगमविरुद्धप्रस्थाननिष्ठैः सौगतार्हताभिः आगमसम्प्रदायः समाश्रितः। ततश्च निगमसम्प्रदायनिष्ठैरपि निगमाऽनुकूल्येन सकलजनश्रेयः कामनया आगमसम्प्रदायः प्रवर्तित इति। ततश्च वैदिकागमोऽवैदिकागम इति विभागः परिनिष्पन्नः, तथापि केचिद्विद्याधीराः निगमसंरक्षणाय आगममात्रस्याऽप्रामाण्यं साधयन्ति। ते चाऽऽगमाः तन्त्रवार्तिके एवमनूदिताः—

'यान्येतानि त्रयीविद्भिर्न परिगृहीतानि, किञ्चित्तन्मिश्रधर्मकञ्चुकच्छायापतितानि, लोकोप्रसंग्रहलाभपूजाख्यातिप्रयोजनपराणि त्रयीविपरीताऽसम्बद्धदृष्टशोभादिप्रत्यक्षाऽनुमानार्थापत्तिप्रायःयुक्तिमूलोपनिबद्धानि, सांख्ययोगपाञ्चरात्रपाशुपतशाक्यनिर्ग्रन्थपरिगृहीतधर्मनिबन्धनानि, विषचिकित्सावशीकरणोच्चाटनोन्मादनादिसमर्थकतिपयमन्त्रौषधिकादाचित्कसिद्धिनिदर्शनबलेनाऽहिंसासत्यवचनदमदानदयादिश्रुतिस्मृतिसंवादिस्तोकार्थगन्धवासितजीविकाप्रायार्थान्तरोपदेशीनि, यानि बाह्यतराणि म्लेच्छाचारमिश्रकभोजनाचरणनिबन्धनानि, तेषामेवैतत् श्रुतिविरोधहेतुदर्शनाभ्यामनपेक्षणीयत्वं प्रतिपाद्यत्वे" ( १, ३, ४ )

अत्र बाह्यानि बाह्यतराणि इति द्वेधाविभागोऽवगम्यते। सांख्यतत्त्वकौमुद्यां वाचस्पतिमिश्रेण—"आप्तग्रहणेन चाऽयुक्ताः शाक्यभिक्षुनिर्ग्रन्थकसंसारमोचकादीनामागमाभासाः परिहृता भवन्ति। अयुक्तत्वं चैतेषां विज्ञानाद्, विच्छिन्नमूलत्वात्, प्रमाणविरुद्धार्थाभिधानाच्च, कैश्चिदेव म्लेच्छादिभिः पुरुषापसदैः पशुप्रायैः परिग्रहाद् बोध्यम्' इति आगमाभासाः परिगणिताः ( दर्श० आ० सा० )।

कतमोऽसावागम आप्तोक्तः, किं शाक्यभिक्षुकदिगम्बरसंसारमोचकादीनामागमाः, किं वा वेदा इति? तत्र शाक्याद्यागमानां प्रणेतार इति स्फुटतरमस्ति स्मरणम्, न तूक्तलक्षण ईश्वरस्तेषां कर्त्तेति। न चैते शौद्धोदनिप्रभृतयः तनुभुवनादिनां कर्त्तारो येन सर्वज्ञा इति निश्चीयेरन्, तदुपायाऽनुष्ठानेन तु सम्भाव्येतैषां सर्वज्ञता, न च संभावनामात्रेण तत्प्रणीतेष्वागमेष्वाश्वासः प्रेक्षावतां भवितुमर्हति। न चैतेषामागमा वर्णाश्रमाचारव्यवस्थाहेतवः, नो खलुः निषेकाद्याः क्रियाः श्मशानान्ताः प्रजानामेते विदधाति। नहि प्रमाणीकृतबौद्धाद्यागमा अपि लोकयात्रायां श्रुतिस्मृतीतिहासपुराणनिरपेक्षागममात्रेण प्रवर्तन्ते। अपि तु तेऽपि सांवृत्तमेतद्' इति ब्रुवाणा लोकयात्रायां श्रुत्यादीनेवाऽनुसरन्ति। तस्माद्, भवतु वेदेषु जगन्निर्मातृकर्तृकत्वस्मृतिः,

मा वाभूत्, त एव तु ईश्वरप्रणीता इति पश्यामः। न ह्येते चैत्यवन्दनादिवाक्यवद्, अन्यकर्तृकाः स्मर्यन्ते, न चान्य आगमो लोकयात्रामुद्वहन्महाजनपरिगृहीत ईश्वरप्रणीततया स्मर्यमाणो दृश्यते। न चेश्वरोऽनुपादिशन्नवस्थातुमर्हति इत्युक्तम्। तत्, पारिशेष्याद् वेद एव सकललोकयात्रामुद्वहन्तो हिताहितप्राप्तिपरिहारोपायमुपदिशन्त ईश्वरप्रणीता इत्यवगच्छामः। तथा ह्येत एव त्रैवर्णिकैरध्ययावत् प्रयत्नेन गृह्यन्ते, धार्यन्ते च। तदर्थपालनायां च महर्षिपरम्पराभिरङ्गोपाङ्गेतिहासपुराणधर्मशास्त्राणि प्रणीतानि। बुद्धादिवाक्यानि तु न लोकयात्रामुद्वहन्ति, न च तत्र लौकिकानामविगानम्, न च विगायतां सांवृत्तमित्युक्त्वाऽपि तदर्थानुष्ठानम्। तस्माद् विगानात्, कैश्चिदेव म्लेच्छादिभिर्मनुष्यापसदैः पशुप्रायैः परिग्रहान्नैतेषामाप्तोक्तत्वसम्भवः। न चैतेषां मन्वादिवाक्यवद्वेदमूलकतया प्रामाण्यमिति साम्प्रतम्? अध्येत्रध्यापयित्रनुष्ठातृकर्तृसामान्यस्य वेदमूलकत्वानुमानालिङ्गस्य स्मृतिवेदयोरिव बुद्धादिवाक्येष्वभावात्। तत्सर्वज्ञत्वसन्देहेन चाऽनुभवमूलकत्वाऽनिश्चयात्[१]।

कः पुनरयं महाजनपरिग्रहः? हेतुदर्शनशून्यैर्ग्रहणधारणार्थाऽनुष्ठानादिः। स ह्यत्र न स्यात् कृते निमित्तम्। न ह्यत्रालस्यादिर्निमित्तम्, दुःखमयकर्मप्रधानत्वात्। नाऽप्यन्यत्र सिद्धप्रामाण्येऽभ्युपायेऽनधिकारेणाऽस्मिन्ननन्यगतिकतयाऽनुप्रवेशः, परैः पूज्यानामप्यत्राऽप्रवेशात्। नाऽपि भक्ष्यपेयाद्यद्वैतरागः तद्विभागव्यवस्थापरत्वात्। नाऽपि कुतर्काऽभ्यासाहितव्यामोहः, आकुमारं प्रवृत्तेः, नाऽपि सम्भवद्विप्रलम्भपाखण्डसंसर्गः, पित्रादिक्रमेण प्रवर्त्तनात्। नाऽपि योगाभ्यासाऽभिमानिनाव्यग्रताऽभिसन्धिः, प्राथमिकस्य कर्मकाण्डे सुतरां व्यग्रत्वात्। नाऽपि जीविका, प्रागुक्तेन न्यायेन दृष्टफलाभावात्। नाऽपि कुहकवञ्चना, प्रकृते तदसम्भवात्।

सम्भवन्ति चैते हेतवो बौद्धविद्यागमपरिग्रहे। तथाहि—भूयस्तत्र कर्मलाघवमित्यत्र इतः पतितानामप्यनुप्रवेश इत्यनन्यगतिकाः, भक्षाद्यनियम इति रागिणः, स्वेच्छया परिग्रह इति कुतर्काभ्यासिनः, पित्रादिक्रमाभावात् प्रवृत्तिरिति पाषण्डसंसर्गिणः; उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते' इत्यादि श्रवणादव्यग्रताभिमानिनः, सप्तघटिकाभोजनादिसिद्धेर्जीविकेत्ययोग्याः; आदित्यस्तम्भनं पाषाणवाहनं शाखाभङ्गो भूतावेशः प्रतिमाजल्पनं धातुवाद इत्यादिधन्धनात्कुहकवञ्चिताः; ततस्तानुपरिगृह्णन्तीति संभाव्यते; अतो न ते महाजनपरिगृहीता इति विभागः[२]।

तथा चानेन दृष्टान्तेन महाजनपरिगृहीतत्वात् वेदा अपि सर्वज्ञपूर्वका इत्युन्नीयते। ननु महच्छब्दो यद्यत्र पूज्यप्रामाणिकवचनस्तदा सन्दिग्धासिद्धविशेषणो हेतुः; अथ बह्वर्थः, तदा सुगताद्यागमैरनैकान्तः, तेषामपि वा सर्वज्ञपूर्वकत्वमिति चेत्?

---

१. अ० २ आ० १ सू० ६८ पृ० ३००।
२. कुसु० २, ३।

न, बहुत्वातिशयविवक्षितत्वात् । कोऽतिशयः ! सर्वदर्शनान्तःपातित्वम् । कस्तैः परिग्रहः ? अर्थानुष्ठानम्, यत्र सांवृत्तमित्युक्त्वाऽपि गर्भाधानाद्यन्त्येष्टिपर्यन्तां वैदिकीं क्रियां जनो नाऽनुतिष्ठति, स्पृश्यास्पृश्यादिविभागं वा जनो नाऽनुमते, व्यतिक्रमे वा आचमनस्नानादिप्रायश्चित्तं नाऽनुतिष्ठन्ति । न सर्वथा सर्वोजन एवमिति चेत् ? माभूत्, नहि सर्वत्र सर्वैर्योगिभिरायुर्वेदार्थो नाऽनुष्ठीयत इति न तस्य महाजनपरिग्रहः, अपि तु सर्वदर्शनान्तःपातिभिरित्येव । तथाऽपि न सर्वो वेदार्थ एवमिति चेत् ? मा भूत्, नहि सर्वो वैद्यकार्थ एवमपि तु कश्चिदपि केनाऽपि । एवं तर्हि सौगताद्यागमार्थोऽपि कश्चिदहिंसादिः सर्वदर्शनान्तःपातिभिरनुष्ठीयत एव कैश्चिदिति सोऽपि महाजन परिगृहीतः स्यात् ? न, सन्देहात्; किमहिंसादिवैदिक एवार्थो विडालव्रतन्यायेन श्रद्धापादनाय शौद्धोदनप्रभृतिभिरुपनिबद्धः, आहोस्वित्स्वयं प्रदृष्ट एवेति ? न तावत्स्वयं दृष्ट एवेति, श्रमणाद्यागमसाधारणत्वात् । यस्त्वसाधारणो मण्डलीकरणादिः, केशोल्लुञ्चनादिर्वा, नाऽसौ सर्वैरनुष्ठीयते । वैदिकैस्तु असाधारण एव निषेकादिस्तथेति ।

" …तस्मात्सर्वाऽभ्युपेतव्यवहारव्याकरणादिपालनीयत्वमपि वेदानामेव, नाऽन्येषाम्; सर्वाभ्युपेतप्रामाण्यैरायुर्वेदादिभिः स्वीकृतश्चैषामर्थः, प्रतिपदं तदीयशान्तिकपौष्टिकप्रायश्चित्ततपोजप्यदानहोमाऽभ्युपदेशात् । न चैष भागस्तत्राऽप्रमाणमेव, तुल्ययोगक्षेमत्वात् । एतदेवाऽसिद्धम्, प्रक्षेपस्याऽपि सम्भवादिति चेत् ? न, अध्येत्रध्यापयितृसम्प्रदायाऽविच्छेदात्; अन्यथाकरणे चाऽस्य बहुभ्यः स्यान्निवारणम् । ( श्लो० वा० सू. २ श्लो. १५०) इति न्यायात् । तस्माद्, एवं रूपोऽपि महाजनपरिग्रहो वेदानामेवेति, सोऽयमीदृशो महाजनपरिग्रहो वेदस्याऽसर्वज्ञपूर्वकत्वेऽसम्भवन् सर्वज्ञपूर्वकत्वे व्याप्यते । तस्मान्महाजनपरिगृहीतपूर्वपूर्वागमपूर्वकत्वाद्वा, प्रवाहनित्यत्वाद्वा प्रलयविच्छेदे सर्गादौ सर्वानुविधेयपुरुषधौरेयपूर्वकत्वाद्वा महाजनपरिग्रहः, न तु पूर्वागमाऽनपेक्षयाऽर्वाचीनपुरुषपशुपूर्वकत्वात् ।… तस्मात्, सर्गादिमहाजनमन्वादिपरिग्रहपूर्वकोऽग्रमद्ययावदनुवर्तत इति नाऽनवसरदोषाऽवकाशोऽपीति युक्तमुत्पश्यामः । तदेव कथं मन्वादिभिः परिगृह्णन्तां वेदा इति चेत् ? आयुर्वेदवदाप्तोक्तत्वनिश्चयात्, स एव कुत इति चेत् ? अध्यक्षतास्तेषामप्यतीन्द्रियार्थदर्शितत्वात् । तादृशानां तेषां परिग्रहेण किं प्रयोजनमिति चेत् ? अस्माद् व्यवहारेण अस्मदपत्यानि व्युत्पाद्यन्ताम्, तथा च धर्मसम्प्रदायः प्रवर्ततामिति भूतदयास्वाधिकारसम्पादनञ्च, अथवा सर्गान्तरगृहीतव्याप्तिप्रादुर्भावे सुप्तप्रतिबुद्धवत् पितृत्वेनाऽविप्रलम्भकत्वमुच्चावचभूतनिर्माणदर्शनेन सार्वज्ञमनुमाय, आप्तत्वनिश्चयस्तेषां तस्य । यद्वा भगवानेव सम्प्रदायप्रवर्त्तनव्यसनव्यग्रः कायसहस्राणि व्युत्पाद्यव्युत्पादनभावव्यवस्थितानपि निर्माय तदातनं महाजनं परिग्रहीतवान् नटनोपाध्यायवत् स्वयं नटित्वेति सर्वं सुस्थम् ।"

---

१. आत्मतत्त्ववि० परि० ४ पृ० ५१६-२८ ।

कथं पुनः सुगताद्यागमेषु अनादरश्छान्दसानाम् ? वेदविद्वेषिदर्शनान्तःपाति-पुरुषप्रणीतत्वादिति मा शङ्किष्ठाः, जिनेन्द्रजगदिन्दुप्रणीतेष्वपि आदरात्, तत्कस्य हेतोः ? महाजनपरिगृहीतपूर्वागमाविरुद्धतया तदनुसरित्वात् । कुतस्तर्हि ? सिद्धप्रामाण्यवेद-विरोधात् । कथं तर्हि कतिपयैरपि तत्परिग्रहः ? अलसभिरुभिर्दुःखमयजात्यकर्मविद्वेषात्, उत्तरगर्त्तीयतन्तुवायवत्; नत्वेवं वेदे, कर्मण्येव निर्भरत्वात्;त्रैवर्णिकबहिष्कृतैरनधिका-रिभिरनन्यगतिकत्वात्, कीर्तिप्रज्ञाकरवत्; नत्वेवं श्रुतौ, परैःपूज्यमानामप्यत्राऽप्रवेशात्; इतःपतितानामपि परैरुपादानात्; भक्ष्यपेयाद्वैतरुचिभिश्च रागात्, शरभादिवत्; नत्वेवमाम्नाये, तद्विभागव्यवस्थापनात्; कुतर्काभ्यासिभिश्च मोहात्, काणाचार्यादिवत्; न त्वेवं ब्रह्मणि, आबालभावं प्रवृत्तेः; अविवेकिभिश्च पाखण्डिसंसर्गात्, शौण्डिकादिवत्; न त्वेवं प्रकृते पित्रादिक्रमेण प्रवर्त्तनात्; योगाभ्यासाऽभिमानिभिरव्यग्रताऽभिसन्धेः, सुभूत्यादिवत्; न त्वेवं प्रस्तुते, प्रथमतः कर्मकाण्ड एव नियोगात्; अयोग्यैराजीवनात्; सामान्यश्रमणकवत्; न त्वेवं प्रकृते, आगन्तुकानामनधिकारात्; कुहकवञ्चितैः समी-चीनप्रत्ययात्, दीपांकरसुषिर्दाशिबालिशवत्; न त्वेवं प्रकृते, तदभावात् । किन्तु महा-जनपरिग्रहाद् वक्तृप्रामाण्यमनुमाय, आयुर्वेदे नैरुज्यकामवदिति[1] ।

ये तु सौगतसंसारमोचकागमाः पापकाचारोपदेशिनः, कस्तेषु प्रामाण्यमार्योऽनु-मोदते;

बुद्धशास्त्रे हि विस्पष्टा दृश्यते वेदबाह्यता ।
जातिधर्मोचिताचारपरिहाराऽवधारणात् ॥
संसारमोचकाः पापाः प्राणिहिंसापरायणाः ।
मोहप्रवृत्ता एवेति न प्रमाणं तदागमः ॥
निषिद्धसेवनप्रायं यत्र कर्मोपदिश्यते ।
प्रामाण्यकथने तस्य कस्य जिह्वा प्रवर्त्तते ?
ततो यद्यपि सिद्धिः स्यात्कदाचित् कस्यचित् क्वचित् ।
ब्रह्महत्यार्जितग्रामभोगवन्नरकाय सा ॥
निषिद्धाचरणोपात्तं दुष्कृतं केन शाम्यति ।
अतः कालान्तरेणापि नरके पतनं पुनः ॥

यत्त्वत्र चोदितम्--परेषु पूर्वोक्तक्रमेण बुद्धाद्याप्तकल्पनां कुर्वत्सु किं प्रतिविधेय-मिति तत्रोच्यते; महाजनप्रसिद्धयनुग्रहे हि सति सुवचमाप्तोक्तत्वं भवति, नाऽन्यथा; महा-जनश्च वेदानाम्, वेदार्थानुगामिनाञ्च पुराणधर्मशास्त्राणाम् वेदाऽविरोधिनाञ्च । केषा-ञ्चिदागमानां प्रामाण्यमनुमन्यते; न वेदविरुद्धानां बौद्धाद्यागमानामिति कुतस्तेषामाप्त-

---

१. तदेव, परि० ४ पृ० ४३०-३३ ।

प्रणीतत्वम् ? मूलान्तरं हि तत्र सुवचम् अज्ञानलोभादीत्येवमभिधाय वेदस्पर्धिनो बौद्धादयो निषेधव्याः । आह—

कोऽयं महाजनो नाम, किमाकारः किमास्पदः, किं सङ्ख्यः, किं समाचारः ? अपि च बौद्धादयः, बुद्धादीनामाप्तान्स्वागमप्रामाण्यसिद्धये वदन्ति, ते महाजनमपि निजं तत्सिद्धये वृन्दादिकं वदेयुरेव; कस्तत्र प्रतीकारः ? उच्यते; चातुर्वर्ण्यं चातुराश्रम्यञ्च यदेतदार्यदेशप्रसिद्धं स 'महाजन' उच्यते । आकारस्तु, तस्य कीदृशं पाणिपादम्, कीदृशं शिरोग्रीवं वा, कियती तस्य सङ्ख्येति पुरुषलक्षणानि गणयितुं न जानीमः । चातुर्वर्ण्यचातुराश्रम्यरूपैश्चैष महाजनो वेदप्रथमप्रवृत्त आगमान्तरवादिभिरप्रत्याख्येय एव । तथा चैते बौद्धादयोऽपि दुरात्मानो वेदप्रामाण्यनियमिता एव चण्डालादिस्पर्शं परिहरन्ति; निरस्ते हि जातिवादावलेपे वा क्व चाण्डालादिस्पर्शे दोषः ? येऽपि अन्ये केचिदशुचिभक्षणाऽगम्यागमनादिर्निर्विकल्पदीक्षाप्रकारमकार्यमनुतिष्ठन्ति, तेऽपि चातुर्वर्ण्यादिमहाजनभीतास्तन्तं रहसि कुर्वन्ति, न प्रकाशम्; निर्विशङ्कं हि तच्छास्त्रप्रत्यये किमिति चौर्यवत्तदर्थाऽनुष्ठानम् ? अत एव न निजो महाजन उत्थापयितुं शक्यते वृन्दकादिः; किन्त्वयमेव चातुर्वर्ण्यादिमहाजनः; स चैष महाजनो वेदविरुद्धमागमं परिहरत्येव नानुमोदते ।

संसारमोचकं स्पृष्ट्वा शिष्टाः स्नान्ति सवाससः ।
बौद्धैरपि सहैतेषां व्यवहारो न कश्चन ॥
वेदधर्मानुवर्त्ती च प्रायेण सकलो जनः ।
वेदबाह्यास्तु यः कश्चिदागमो वञ्चनैव सा ॥

ईदृश्चायमनन्यसामान्यविभवो महाभागो वेदनामा ग्रन्थराशिः, यदन्ये बाह्यागमवादिन एवमेव स्पर्धन्ते । ते हि स्वागमप्रामाण्यमभिवदन्तो वेदरीत्याभिदधति, वेदे यथा तथा प्रवेष्टुमिहन्ते, वैदिकानर्थानन्तराऽन्तरा स्वागमेषु निबध्नन्ति, वेदस्पर्शपूतमिवात्मानं मन्यन्ते, तेषामप्यन्तर्हृदये ज्वलतीव प्रामाण्यम् । अत एवंविधाया महाजनप्रसिद्धेरागमान्तरेष्वदर्शनान्न तेषामाप्तप्रणीतत्वम् । आह—

महाजनप्रसिद्ध्यैव वेदप्रामाण्यनिश्चयात् ।
किमर्थः कण्ठशोषोऽमियानार्येण संश्रितः ?

वेदप्रामाण्यसिद्ध्यर्थं हि इदं शास्त्रमारब्धमिति गीयते, वेदप्रामाण्यस्य च महाजनसिद्ध्यैव सिद्धत्वात्, किं शास्त्रेण ? अलं क्षुद्रचोद्यैरीदृशैः—

महाजनप्रसिद्धं हि केचिद् विप्लावयन्त्यपि ।
अतस्तदुपघाताय शास्त्रमस्त्रं प्रयुज्यते ॥

तस्मात्पूर्वोक्तानामेव प्रामाण्यमागमानाम्; न वेदबाह्यानामिति स्थितम्[१] ।

---

१. न्यायम० आ० ४ पृ० २६५–६७ ।

मनौ बुद्धादिशास्त्राणां सङ्केतोऽपि न लभ्यते, नाऽपि तत्पूर्वमीमांसासूत्रे शाबरे-भाष्ये च। यन्मेधातिथिभाष्यादौ, यदि वा तन्त्रवार्तिके, बौद्धादिनिन्दनं तत्तु द्विष्टदृष्टि-विवर्तितम्। आर्षग्रन्थाश्रयादेव बुद्धशास्त्रादिखण्डनं प्रभात्रोत्पाटकं मत्वा भट्टकुमारिलः, मनौ बुद्धागमद्वेषं मीमांसादर्शनेऽपि चाप्रसक्तमपि स्वान्तः सक्तमेव व्यवर्तयत्।

शाक्यादिवचनानि तु कतिपयदमदानादिवचनवर्जं सर्वाण्येव समस्तचतुर्दश-विद्यास्थानविरुद्धानि, त्रयीमार्गव्युत्थितविरुद्धाचरणैश्च बुद्धादिभिः प्रणीतानि, त्रयीबाह्येभ्यश्चतुर्थवर्णनिरवसितप्रायेभ्यो व्यामूढेभ्यःसमर्पितानीति न वेदमूलत्वेन सभाव्यन्ते। स्वधर्मातिक्रमेण च येन क्षत्रियेण सता प्रवक्तृत्वप्रतिग्रहौ प्रतिपन्नौ, स धर्ममविप्लुतमुप-देक्ष्यतीति कः समाश्वासः? उक्तञ्च—

परलोकविरुद्धानि कुर्वाणं दूरतस्त्यजेत्।
आत्मानं योऽति सन्धत्ते, सोऽन्यस्मै स्यात्कथं हितः?

बुद्धादेः पुनरयमेव व्यतिक्रमोऽलंकारबुद्धौ स्थितः, येनैवमाह—

**कलिकलुषकृतानि यानि लोके, मयि निपतन्तु, विमुच्यतां तु लोकः।** स किल लोकहितार्थं क्षत्रियधर्ममतिक्रम्य ब्राह्मणवृत्तं प्रवक्तृत्वं प्रतिपद्य प्रतिषेधाऽतिक्रमाऽ-समर्थैर्ब्राह्मणैरननुशिष्टं धर्मं बाह्यजनानुशासद्धर्मपीडामप्यात्मनोऽङ्गीकृत्य परानुग्रहं कृत-वानित्येवंविधैरेव गुणैः स्तूयते। तदनुशिष्टानुसारिणश्च सर्व एव श्रुतिस्मृतिविहितधर्माति-क्रमेण व्यवहरन्तो विरुद्धाचारत्वेन ज्ञायन्ते।

**तेन प्रत्यक्षया श्रुत्या विरोधे ग्रन्थकारिणाम्, ग्रहीत्राचरितृणां च ग्रन्थ-प्रामाण्यबाधनम्।** न ह्येषां पूर्वोक्तेन न्यायेन श्रुतिप्रतिबद्धानां स्वमूलश्रुत्यनुमान-सामर्थ्यमस्ति। **न शाखान्तरोच्छेदः कदाचिदपि विद्यते, प्रागुक्ताद्वेदादनित्यत्वान्न चैषां दृष्टमूलता।** न हि यथोपनयनादिस्मृतीनां शाखान्तरदृष्टश्रुतिसंवादः। एवं चैत्य-करणतद्वन्दनशूद्रसम्प्रदानकदानादीनां संवादः संभवति; मूलान्तरकल्पनं च प्रागेव प्रत्याख्यातम्।

लोभादिकारणश्चात्र बह्वेवाऽन्यत्प्रतीयते।
यस्मिन् सन्निहिते दृष्टे नास्ति मूलान्तराऽनुमा॥

शाक्यादयश्च सर्वत्र कुर्वाणा धर्मदेशनाम्।
हेतुजालविनिर्मुक्तां न कदाचन कुर्वते॥

न च तैर्वेदमूलत्वमुच्यते गौतमादिवत्।
हेतवश्चाभिधीयन्ते ये धर्मा दूरतः स्थिताः॥

एत एव च ते येषां वाङ्मात्रेणापि नाऽर्चनम्।
पाखण्डिनो विकर्मस्था हेतुकाश्चैत एव हि॥

एतदीया ग्रन्था एव मन्वादिभिः परिहार्यत्वेनोक्ता—

'ये वेदबाह्याः स्मृतयो याश्च काश्चित् कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रोक्तास्तमोनिष्ठा हि ताः स्मृताः" ॥

तस्माद्धर्मं प्रति त्रयीबाह्यमेवं जातीयं प्रामाण्येनाऽनपेक्ष्यं स्यादिति सिद्धम्[१] ।

यत्तर्हि वेदविहितं न बाधते, शिष्टान्वा वेदविदो न कोपयति विहारारामामण्डलकरणवैराग्यध्यानाभ्यासाऽहिंसासत्यवचनदमदानदयादि, तद्बुद्धादिभाषितं प्रमाणेनाऽविरुद्धमिति चेत् ? न **शास्त्रपरिमाणत्वात्**; परिमितान्येव हि चतुर्दशाष्टादश वा विद्यास्थानानि धर्मप्रमाणत्वेन शिष्टैः परिगृहीतानि वेदोपवेदाङ्गोपाङ्गाष्टादशधर्मसंहितापुराणशास्त्रशिक्षादण्डनीतिसंज्ञकानि, न च तेषां मध्ये बौद्धहितादिग्रन्थाः स्मृता गृहीता वा ।

प्रतिकञ्चुकरूपेण पूर्वशास्त्रार्थगोचरम् ।
यदन्यत् क्रियते तस्य धर्मं प्रत्यप्रमाणता ॥

तथा च प्रायश्चित्तदानादिकाले यो वाक्यमात्मीयमन्यकविकृतं वा श्लोकं सूत्रं वोच्चार्य मानवादिप्रायश्चित्तं दद्यान्न कश्चिदपि धर्मार्थप्रतिपद्येत । **वेदेनैवाऽभ्यनुज्ञाता येषामेव प्रवक्तृता नित्यानामभिधेयानां मन्वन्तरयुगादिषु तेषां विपरिवर्तेषु कुर्वतां धर्मसंहिताः, वचनानि प्रमाणानि; नाऽन्येषामिति निश्चयः** । तथा च '**मनोर्ऋचः सामिधेन्यो भवन्ति**' इत्यस्य विधेर्वाक्यशेषे श्रूयते—"**मनुर्वै यत्किञ्चिदवदत्तद् भेषजं भेषजतायै**" इति प्रायश्चित्ताद्युपदेशवचनं पापव्याधेर्भेषजम् ।

इतिहासपुराणञ्च कृत्रिमत्वेन निश्चितम् ।
तथाप्यकृत्रिमे वेदे तद्विद्यात्वेन सम्मतम् ॥

एवं ह्युपनिषत्सूक्तम्—'**ऋग्वेदं भगवोऽध्येमि, यजुर्वेदम्, सामवेदमथर्ववेदं चतुर्थमितिहासपुराणं पञ्चमम्**' इति । तेन प्रतिकल्पमन्वन्तरयुगनियतऋषिनामाभिधेयकृत्रिमविद्यास्थानकारा ये वेदेऽपि मन्त्रार्थवादेषु श्रूयन्ते, तत्प्रणीतान्येव विद्यास्थानानि धर्मज्ञानाङ्गत्वेन सम्मतानि ।

**तस्माद् यान्येव शास्त्राणि वेदमूलाऽनतिक्रमाद् अवस्थितानि, तैरेव ज्ञातो धर्मफलप्रदः । यथैवाऽन्यायविज्ञाताद्वेदाल्लेख्यादिपूर्वकात् शूद्रेणाधिगताद्वापि धर्मज्ञानं न सम्मतम्** । यथैवाऽन्यायविज्ञाताद्वेदाल्लेख्यादिपूर्वकात्, शूद्रेणाधिगताद्वापि धर्मज्ञानं न सम्मतम्, **तथाऽतिक्रान्तवेदोक्तमर्यादाव्यवहारिणां संवादिष्वपि वाक्येषु नेष्यते धर्महेतुता । स्मर्यन्ते च पुराणेषु धर्मविप्लुतिहेतवः कलौ शाक्यादयस्तेषां को वाक्यं श्रोतुमर्हति ? यथा कृतकर्पूरसुवर्णादिषु दीयते यद्बीजं, तदपि व्यक्तमग्राह्यत्वात्प्रलीयते ।**

---

१ तन्त्रवा० अ० १ पा० ३ सू० ४ ।

तेन कर्मानुरूप्यसामान्यतो दृष्टार्थापत्तिबलात्तदभिप्रायकल्पितधर्माभासमध्यपतितं सन्मूलमप्यहिंसादि श्वदृतिनिक्षिप्तक्षीरवदनुपयोग्यविश्रम्भणीयं च तन्मात्रोपलब्धं भवतीत्यवश्यं यावत्परिगणितधर्मशास्त्रेभ्यो नोपलभ्यते, तावदग्राह्यं भवति;

यदा शास्त्रान्तरेणैव सोऽर्थः स्पष्टोऽवधार्यते ।
तदा तेनैव सिद्धत्वाद्, इतरत्स्यादनर्थकम् ॥

तस्माद्यावत्परिगणितवेदादिशास्त्रव्यतिरिक्तनिबन्धनं तद् धर्मप्रमाणत्वेन नापक्षेतव्यमिति ।[१]

नन्वेवं वेदमूलत्वेन प्रामाण्ये वर्ण्यमाने बाह्यस्मृतीनामपि प्रामाण्यं बदन्तः प्रावादुकाः कथं प्रतिवक्तव्याः ? उच्यते; प्रत्युक्ता एव ते तपस्विनः; उक्तं हि भगवता जैमिनिना—'**अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात्**' (अ.१ पा.३ सू २) कर्तृसामान्यादिति कोऽर्थः? 'एकाधिकाराऽवगमादिति; य एव वेदार्थानुष्ठानेऽधिकृताः, कर्त्तारस्त एव स्मृत्यर्थाऽनुष्ठाने, आचमनादिस्मार्त्तपदार्थसंवलितवेदिस्तरणादिवैदिकपदार्थप्रयोगदर्शनात्। नत्वेवमेकाऽधिकाराऽवगमो बाह्यस्मृतिषु विद्यते; तस्मान्मन्वादिस्मृतय एव प्रमाणम्, न बाह्यस्मृतयः ।[२]

श्रुतेः परप्रमात्वोक्तेः सामान्यात्तद्विरोधिनां सर्वेषां स्मृतिवाक्यानामप्रामाण्यमिहेष्यते । एवमेवाह मीमांसाभाष्ये श्रीशबरो मुनिः विरोधे त्वनपेक्ष्यत्वे मन्वाद्युक्तं निदर्शयन्। "**विरोधेत्वनपेक्ष्यं स्यादसति ह्यनुमानम्; हेतुदर्शनाच्च**[३]" इति जैमिनिसूत्रयोः शाबरभाष्यमत्राऽपि परमश्रौतत्वेनाऽभिमतं वैदिकस्मृतिवचनमेवाऽनूद्य शबरस्वामिभिस्तस्याऽनपेक्षत्वं प्रदर्शितम्; तदिदं बौधायनधर्मसूत्रेऽपि दृश्यते। तथा हि—"**अष्टाचत्वारिंशद्वर्षाणि पौराणं वेदब्रह्मचर्यम्; चतुर्विशतिं द्वादश वा प्रतिवेदम्; संवत्सरावमं वा प्रतिकाण्डम्; ग्रहणान्तं वा, जीवितस्याऽस्थिरत्वात्। कृष्णकेशोऽग्नीनादधीतेति श्रुतिः**" (बौधा. १।३।१-६) इत्येभिः सूत्रैः पूर्वोत्तरपक्षाभ्यां श्रुतिविरोधे वैदिकस्मृतेरपि त्यागो विहितः । एवं हि तद्विवरणं प्राह गोविन्दस्वामी— '**अधुना ग्रहणान्तपक्षमेव स्थापयितुमाह--पौराणिकादिवेदब्रह्मचर्यचरणं न कार्यम्, श्रौतस्य कर्मणोऽग्निहोत्रादेर्विच्छेदप्रसङ्गात्; किमिति विच्छेदः ? जीवितस्याऽस्थिरत्वात्, ननु कश्चित्कर्त्ता तावन्तं कालं जीवेदिति तेनैवाग्निहोत्रादि करिष्यते । तस्मान्न पूर्वेषां पक्षाणां त्यागो युक्त इत्याशङ्क्य श्रुतिविरोधमेव दर्शयन्ति, अनया श्रुत्या विरोधात् स्मार्तानां पूर्वेषां पक्षाणां त्यागः**' इति। एतदेव श्रौतर्षिबौधायनमतमनुसृत्य मीमांसाभाष्यकारः शबरमुनिः "अपुंस्त्वं प्रच्छादयन्तश्च अष्टाचत्वारिंशद्वर्षाणि

---

१. तन्त्र० १।३।५-७।
२. न्यायमं० आ० ४ पृ० २६३।
३. मीमा० द० अ० १ पा० ३ सू० ३-४।

वेदब्रह्मचर्यं चरितवन्तः; तत एषा स्मृतिरित्यवगम्यते'' इत्येवमस्याः स्मृतेरनपेक्ष्यत्वमर्थादप्रामाण्यमुक्तवान् । एवमेव श्रुतिविरोधहेतुदर्शनाभ्यामनपेक्षत्वेन तादृशाऽन्यस्मार्त्तवाक्यानामप्यप्रामाण्यमेव सर्वथा शबराऽभिमतम् । किं बहुना, सर्वस्मृतिधुरि कीर्तनीयायाः समस्तश्रौतधर्मशास्त्रशिरोरत्नायमानायाः सर्वज्ञानमयवेदार्थगर्भायाः सर्वज्ञमनुप्रणीतायाः स्मृतेरपि बहूनि श्रुतिविरुद्धहेतुदर्शनमूलानि वचनानि, कैश्चित्प्रक्षिप्तानीव मत्वा, शबरस्वामिना प्रामाण्येऽनपेक्षणीयान्यभिमतानीति दृश्यते; तथा हि–मीमांसादर्शने षष्ठाध्याये क्रतुषु स्त्रिया अप्यधिकाराधिकरणे (६।१।३) पूर्वपक्षे––

भार्या, पुत्रश्च, दासश्च त्रय एवाधनाः स्मृताः ।
यत्ते समधिगच्छन्ति, यस्य ते तस्य तद्धनम् ।।
( मनु० ८।४१६ )

इति मनुस्मृतिवचनमुद्धृत्य, 'फलोत्साहाऽविशेषात्तु' ( मीमांसा० ६।१।१३) 'तु' शब्दः पक्षं व्यावर्तयति; न चैदस्ति, निर्धना स्त्रीति । द्रव्यवती हि सा, फलोत्साहाऽविशेषात् । स्मृतिप्रामाण्यादस्वया तया भवितव्यम्, फलार्थिन्यापि । श्रुतिविशेषात्, फलार्थिन्या यष्टव्यम्; यदि स्मृतिमनुरुध्यमाना परवशा, निर्धना च स्यात्, 'यजेत' इत्युक्ते सति न यजेत; तत्र स्मृत्या श्रुतिर्बाध्येत । न चैतन्न्यायम्; तस्मात् फलार्थिनी सती स्मृतिमप्रमाणीकृत्य द्रव्यं परिगृह्णीयाद् यजेति चेति। "अर्थेन च समवेतत्वात्" (मीमां० ६।१।१४)अर्थेन चास्याः समवेतत्वं भवति एवं दानकाले संवादः क्रियते–"धर्मे चार्थे च कामे च, नातिचरितव्येति ।" यत्तु उच्यते, 'भार्यादयो निर्धना' इति; स्मर्यमाणमपि निर्धनत्वमन्याय्यमेव, श्रुतिविरोधात् । तस्मादस्वातन्त्र्यमनेन प्रकारेणोच्यते, संव्यवहारप्रसिद्धयर्थम् । 'क्रयस्य धर्ममात्रत्वम्' ( मीमां० ६।१।१५ ) यत्तु क्रयः श्रूयते, धर्ममात्रं तु तत्; नाऽसौ क्रय इति । क्रयो हि उच्चनीचपण्यपणो भवति; नियतं त्विदं दानम्; शतमतिरथं शोभनाऽशोभनाश्च कन्यां प्रति । स्मार्त्तश्च श्रुतिविरुद्धं विक्रयं नानुमन्यन्ते; तस्मादविक्रयोऽयमिति'' इत्येवमादि शाबरभाष्येऽभिहितम् । अनेन सुस्पष्टतरमेवैतदस्ति यदुत श्रुतिविरोधे लोभादिहेतुमूलत्वे च निश्चिते सति वैदिकस्मृतीनामप्यनपेक्ष्यत्वमार्यमीमांसासम्मतम्; न तु केवलं वेदबाह्यत्वेन कल्पितानां बुद्धाद्यागमानामेव सर्वथा सर्वशः । तस्मात् तद्विषयं कुमारिलोत्प्रेक्षितमनार्यमतमेव प्रेक्षावद्भिः सद्भिरनपेक्षणीयं चेति सुधियो विमर्शकाः प्राहुः ।

तद्वेदविरुद्धांशे बौद्धादेश्चाप्रमाणता तुल्यन्यायेन युज्येत; न सर्वांशेष्विति स्थितिः । भट्टादेः 'श्वदृतिक्षीर' न्यायस्त्वन्यायमूलकः शुद्धोपशब्द एवाऽतः प्रेक्षावद्भिरुपेक्ष्यते – "सन्मूलमपि ( बुद्धोपदिष्टम् ) अहिंसादि, श्वदृतिनिक्षिप्तक्षीरवदनुपयोगि, अविश्रम्भणीयञ्च'' ( तन्त्रवा० ) ।

"शाक्योक्ताऽहिंसनं धर्मो न वा ? धर्मः श्रुतत्वतः ।
न धर्मो न हि पूतं स्याद् गोक्षीरं श्वदृतौ धृतम् ।।

"**ब्रह्मचर्यमहिंसा चाऽपरिग्रहं च सत्यञ्च यत्नेन रक्षेद्**" इति श्रुतावहिंसादिधर्मत्वेनोक्तः, स एव धर्मः शाक्येनाऽभ्युक्तः; तस्मात् शाक्यस्मृतिर्धर्मे प्रमाणमिति चेत् ? न, स्वरूपेण धर्मस्याऽपि गोक्षीरन्यायेन शाक्यसम्बन्धे सति अधर्मत्वप्रसङ्गात्, तदीयग्रन्थेन अहिंसादिर्नाऽवगन्तव्यः; तस्मान्न सा स्मृतिर्धर्मे प्रमाणम्"[१]।

उक्त कौमारिलन्यायो मन्वादिष्वपि बुद्धवत्प्रायोक्तुं शक्यते नूनं तद्युक्त्यैवानयासतः; तस्मादप्यस्य दुष्टत्वं स्वपक्षप्रतिबन्दिता, केवलं द्वेषमूलत्वं व्याहतत्वञ्च दृश्यते। यतः सर्वमनुष्येभ्यस्त्वविशेषात्प्रवर्तते शूद्रसाधारणेभ्योऽत्र समा बुद्धस्य देशना तद्धेतोरपि यत्तस्या अप्रामाण्यप्रकल्पनं तत्तु वेदविरुद्धत्वादेवोपेक्ष्यं मनीषिभिः—

'यद्यसौ वेदमूलः स्यात् वेदवादिभ्य एव तु उपदेशं प्रयच्छेयुः, यथा मन्वादयस्तथा; यतस्तु मूर्खशूद्रेभ्यः कृतं तैरुपदेशनं ज्ञायते तेन दुष्टं तत्सांवृतं कूटकर्मवत्। ये तु मन्वादयः सिद्धाः प्राधान्येन त्रयीविदां त्रयीविदाश्रितग्रन्थास्ते वेदप्रभवोक्तयः। नाऽदृष्ट्वा वेदवाक्यानि, शिष्येभ्यश्चाऽप्रदर्श्य वा ग्रन्थप्रणयनं तेषामर्पणं चोपपद्यते[२]।"

"न चाऽपि स्मृत्यविच्छेदात्सर्वज्ञः परिकल्प्यते; विगानाच्छिन्नमूलत्वात्कैश्चिदेव परिग्रहात्। सान्निध्यमात्रतस्तस्य पुंसश्चिन्तामणेरिव, निःसरन्ति यथाकामं कुडवादिभ्योऽपि देशनाः; एवमाद्युच्यमानन्तु श्रद्दधानस्य शोभते; कुड्यादिनिःसृतत्वाच्च नाऽऽश्वासोदेशनासु नः। किन्तु बुद्धप्रणीताः स्युः किमु वा कैश्चिद्दुरात्मभिः ? अदृश्यैर्विप्रलम्भार्थं पिशाचादिभिरीरिताः[३]।" इत्येवमादि बुद्धविषयं कौमारिलमधिक्षेपमनूद्य, शान्तिरक्षितेन तत्त्वसङ्ग्रहे (श्लो० ३५६७–९०) इत्थं प्रतिविहितम्—

वेदमूलं च नैवेदं बुद्धानामुपदेशनम्।
निष्कलङ्कं हि तत्प्रोक्तं सकलङ्कं श्रुतौ पुनः॥

स्वार्थसंसिद्धये तेषामुपदेशो न तादृशः।
आरम्भः सकलस्त्वेष परार्थं कर्तुमीदृशः॥

तस्माज्जगद्धिताधानदीक्षिताः करुणात्मकाः।
अनिबन्धनबन्धुत्वादाहुः सर्वेषु तत्पदम्॥

ये हि लोभभयद्वेषमात्सर्यादिवशीकृताः।
प्रादेशिकी भवेत्तेषां देशना निःकृपात्मनाम्॥

कारुण्यपरतन्त्रास्तु स्पष्टतत्त्वनिदर्शिनः।
सर्वापवादनिःशङ्काश्चक्रुः सर्वत्र देशनाम्॥

---

१. जै० न्या० मं० १।३।४।

२. तत्त्वसं० श्लो० ३२२६--२९।

३. चोदनासूत्रे श्लोकवा० १३३. तथा १३८-४०; एतत्तत्त्वसङ्ग्रहेऽपि किञ्चित्पाठान्तरेणाऽनूदितं दृश्यते श्लो० ३२४१-४६।

यथा यथा च मौर्ख्यादिदोषदुष्टो भवेज्जनः ।
तथा तथैव नाथानां दया तेषु प्रवर्त्तते ॥
नैवावाहविवाहादिसम्बन्धो वाञ्छितो हि हितैः ।
उपकारस्तु कर्त्तव्यः साधुगीतमिदं ततः—

विद्याचरणसम्पन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पाण्डिताः समदर्शिनः'' इत्यादि ।

ज्ञानवान्मृग्यते कश्चित्तदुक्तप्रतिपत्तये ।
अज्ञोपदेशकरणे विप्रलम्भनशङ्किभिः ॥
तस्मादनुष्ठेयगतं ज्ञानमस्य विचार्यताम् ।
कीटसङ्ख्यापरिज्ञानं तस्य नः क्वोपयुज्यते ॥
हेयोपादेयतत्त्वस्य साऽभ्युपायस्य वेदकः ।
यः प्रमाणसमाविष्टो न तु सर्वस्य वेदकः ।
दूरं पश्यतु वा मा वा तत्त्वमिष्टन्तु पश्यतु ;
प्रमाणं दूरदर्शी चेद् ? एत गृध्रानुपास्महे ।
साधनं करुणाऽभ्यासात्सा बुद्धेर्देह संश्रयात् ;
असिद्धोऽभ्यास इति चेत् नाश्रय प्रतिषेधतः ।
दयावान्दुःखहानार्थमुपायेष्वभियुज्यते ।
परोक्षोपेयेतद्धेतोस्तदाख्यानं हि दुष्करम् ॥
परार्थवृत्तेः खड्गादेर्विशेषोऽयं महामुनेः ।
उपायाऽभ्यास एवाऽयं तादर्थ्याच्छासनं मतम् ॥
निष्पत्तेः प्रथमं भावाद्धेतुरुक्तमिदं द्वयम् ।
हेतोः प्रहाणं त्रिगुणं सुगतत्वमनिश्रयात् ॥
तायात् तत्वस्थिराऽशेषविशेषज्ञानसाधनम् ।
बोधार्थत्वाद्गमेः बाह्यशैक्षाऽशैक्षाधिकस्ततः ॥
परार्थज्ञानघटनं तस्मात्तच्छासनं ततः ।
दयापरार्थतन्त्रत्त्वं सिद्धार्थस्याऽविरामतः ॥
दयया श्रेय आचष्टे ज्ञानात्सत्यं ससाधनम् ।
तच्चाभियोगवान्वक्तुं यतस्तस्मात्प्रमाणता ॥
उपदेशतथाभिभावस्तुतिस्तदुपदेशतः ।
प्रमाणतत्त्वसिद्धचर्थम् अनुमानेऽप्यावरणात् ॥
प्रयोगदर्शनाद्वाऽस्य यत्किञ्चिदुदयात्मकम् ।
निरोधधर्मकं सर्वं तदित्यादावनेकधा ॥
अनुमानाश्रयो लिङ्गमविनाभावलक्षणम् ।
व्याप्तिप्रदर्शनाद्धेतोः साध्येनोक्तं च तत्स्फुटम् ॥

मन्वादेर्वेदमूलत्वे बौद्धादेरपि प्रामाण्यविषये जयन्तभट्टेन न्यायमञ्जर्यां सप्रमाणमित्थं निरूपितम्—

अन्ये सर्वागमानां तु प्रामाण्यं प्रतिपेदिरे ।
सर्वत्रबाधसन्देहरहितप्रत्ययोदयात् ॥
सर्वत्रवेदवत्कर्त्तुराप्तस्य परिकल्पना ।
दृष्टार्थेष्वेकदेशेषु प्रायः संवाददर्शनात् ॥

यत्पुनरत्रोक्तं सर्वं एवागमाः परस्परविरुद्धार्थोपदेशत्वादप्रमाणं स्युरिति, तत्रोच्यते; आप्तप्रणीतत्वेन तुल्यकक्ष्यत्वादन्यतमदौर्बल्यनिमित्ताऽनुपलम्भाच्च न कश्चिदागमः किञ्चिद्बाधते । विरोधमात्रन्तु अकिञ्चित्करम्, प्रमाणत्वाभिमतेषु वेदवाक्येष्वपि परस्परविरोधदर्शनात् । पुरुषशीर्षस्पर्शनसुराग्रहगवालभ्भादिचोदनासु वचनान्तरविरुद्धमर्थजातमुपदिष्टमेव । किञ्च, आगमानां विरोधोऽपि नाऽतीव विद्यते, प्रमाणानां पुरुषार्थे सर्वेषामविवादात् ।

नानाविधैरागममार्गभेदैरादिश्यमाना बहवोऽभ्युपायाः ।
एकत्र ते श्रेयसि संपतन्ति सिन्धौ प्रवाहा इव जाह्नवीयाः ॥

तथाहि अपवर्ग उपेयः सर्वशास्त्रेषु निर्दिश्यते ज्ञानविषये तु विवदन्ते तत्राऽपि प्रायश आत्मविषयतायां बहूनामविप्रतिपत्तिः । प्रकृतिपुरुषविवेकज्ञानपक्षे तु प्रकृतेर्विविक्ततया पुरुष एव ज्ञेयः । नैरात्म्यवादिनस्तु आत्मशैथिल्यजननायाऽपदिशन्ति । स्वच्छं तु ज्ञानतत्त्वं यत्तैरिष्यते, तत्स्वातन्त्र्यादनाश्रितत्वादात्मकल्पमेव; कूटस्थनित्यत्वे प्रवाहनित्यत्वे च विशेषः । एवं प्रधानयोस्तावदुपायोपेययोरविवादः । क्रिया तु विचित्रा प्रत्यागमं भवतु नाम, भस्मजटापरिग्रहो वा, दण्डकमण्डलुग्रहणं वा, रक्तपटधारणं वा, दिगम्बरता वाऽवलम्ब्यताम्, कोऽविरोधः ? वेदेऽपि किमल्पीयांसः पृथगिति कर्त्तव्यताकलापखचिताः स्वर्गीयापरचोदिताः ? तस्मात्परस्परावरोधेऽपि न प्रामाण्यविरोधः । अतश्च यदुच्यते—

कपिलो यदि सर्वज्ञः सुगतो नेति का प्रमा ?
अथोभावपि सर्वज्ञौ मतभेदस्तयोः कथम् ?

इति, तदपास्तं भवति; प्रधाने सति भेदाऽभावात्, क्वचिच्च तद्भावे प्रामाण्यविरोधात् । न च क्रोशनहेतुकर्मोपदेशाद् आगमान्तराणामप्रामाण्यम् ? तस्याप्रमाणतायामप्रयोजकात् ।

विचिकित्सा हि नृशिरः कपालाद्यशनेषु या ।
साऽप्यन्यदर्शनाऽभ्यासभावनोपनिबन्धना ॥

तथा च शान्तचित्तानां सर्वभूतदयावताम् ।
वैदिकीष्वपि हिंसासु विचिकित्सा प्रवर्त्तते ।।

अभिचारादिहिंसायां वैदिक्यामपि भवतु हृदयोत्कम्पः, करणांशोपनिपातिनी हिंसेति लिप्सा ततस्तस्यां प्रवृत्तिः । यत्त्वग्नीषोमीयादिपशुहिंसेतिकर्त्तव्यतांशस्तथा, यस्यां क्रत्वर्थो हि शास्त्रादवगम्यते इति वैदिकी प्रवृत्तिः तस्यामपि कारुणिको लोकः सविचिकित्सो भवति, वदति च—यत्र प्राणिवधो धर्मस्त्वधर्मस्तत्र कीदृशः ? इति । न चैतावता वेदस्याऽप्रामाण्यम्, एवमागमान्तरेष्वपि भविष्यति । यत्त्वागमान्तरेभ्यः कौलादिभ्यः खेचरताद्यर्थसिद्धावपि निषिद्धाचरणकृतः कालान्तरे प्रत्यवायोऽवश्यं भवतीत्युक्तम्, तदपि न युक्तम्; तस्यार्थस्य तदागतनिषिद्धत्वाऽभावात्; आगमान्तरनिषिद्धत्वेऽपि वैकल्पिकत्वकल्पनोपपत्तेः । पुरुषार्थप्राप्त्युपायत्वाच्च तस्य तस्मिन् सिद्धे कुतः प्रत्यवायः ? भवतु वा कालान्तरे ततः प्रत्यवायः, तथाऽप्यधिकारिभेदेन तत्फले कर्मणि चोद्यमाने श्येनादाविव नाऽऽगमप्रामाण्यमत्र हीयते । 'श्येनेनाऽभिचरन्यजेत' इत्यत्र 'अभिचरन्' इति शता, लङ्घितनिषेधमधिकारिणमाचष्टे; तस्य च श्येनयागश्चोदितः, स च तत्प्रयोगस्कृतवधः प्रत्यवैत्येव, न च वेदस्याप्रामाण्यम् ।

उक्तञ्च ( शाबरभाष्ये १।१।२) 'उभयमिह चोदनया लक्ष्यते,' 'अर्थोऽनर्थश्चेति' । अधिकारभेदाच्च विचित्रकर्मचोदना नाऽनुपपन्ना; मरणकामस्य सर्वस्वारः चोदितः, आयुष्कामस्य कृष्णलचरुः । तस्मादेतदपि नाऽप्रमाणनिमित्तम् । यद्यपि बौद्धागमे जातिवादनिराकरणम्, तदपि सर्वानुग्रहप्रवणकरुणातिशयप्रशंसापरम्, न च यथाश्रुतमवगन्तव्यम्, तथा च तत्रैतत्पठ्यते—"**न जातिकायदुष्टान् प्रव्राजयेत्**" इति । तस्मात्सर्वेषामागमानामाप्तैः कपिलसुगतार्हत्प्रभृतिभिः प्रणीतानां प्रामाण्यमिति युक्तम् । अन्ये मन्यन्ते, सर्वागमानामीश्वर एव भगवान् प्रणेतेति; स हि सकलप्राणिनाम् कर्मविपाकमनेकप्रकारमवलोकयन् करुणयाताननुग्रहीतुमपवर्गप्राप्तिमार्गं बहुविधमुत्पश्यन् आशयाऽनुसारेण केषाञ्चित्कर्मणि योज्यतामवगम्य तं तमुपायमुपदिशति; स्वविभूतिमहिम्ना च नानाशरीरपरिग्रहास्त एव संज्ञाभेदानुपगच्छति, अर्हन्निति कपिल इति सुगत इति स एवोच्यते भगवान्; नाना सर्वज्ञकल्पनायां यत्नगौरवप्रसङ्गात् । ननु बुद्धः शुद्धोदनस्याऽपत्यं स कथमीश्वरो भवेत् ? परिहृतमेतद् भगवता कृष्णद्वैपायनेन--यदा यदा हि धर्मस्य ग्लानिर्भवति भारत, अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् इति ।

शरीरमेवशुद्धोदनस्याऽपत्यं नाऽऽत्मा; अतः प्रतियुगं विष्णुरेव भगवान् धर्मरूपेणाऽवतरतीत्यागमविदः प्रतिपन्नाः । ननु वेदसमानकर्त्तृकेष्वागमान्तरेषु कथं तादृशो महाजनसम्प्रत्ययो नास्ति ? एवं नास्ति, तेन वर्त्मना भगवता कतिपये प्राणिनोऽनुगृहीता, येषां तादृश आशयो लक्षितः, वैदिकेन तु वर्त्मना निःसङ्ख्यकाः प्राणिनोऽनुगृहीता इति तत्र महानादरः, आगमान्तरेषु कृश इति । एककर्तृके परस्परविरोधः

कथमिति चेत् ? वेदैरेवाऽत्र वर्णितः समाधिः; तेष्वपि भूम्नः परस्परविरोधस्य दर्शनादित्युक्तम् । तस्मादीश्वरप्रणीतत्वादेव सर्वागमानां प्रामाण्यम् । अपरे पुनर्वेदमूलत्वेन सर्वागमप्रामाण्यमभ्युपागमन्; यो हि मन्वादिदेशनानां वेदमूलतायां न्याय उक्तः—

भ्रान्तेरनुभवाद्वाऽपि पुंवाक्याद्विप्रलम्भकात् ।
दृष्टाऽनुगुणसामर्थ्याच्चोदनैव लघीयसी ॥

स सर्वागमेषु समानः । न च मन्वादिस्मृतीनां मूलभूता श्रुतिरुपलभ्यते; अनुमाने न तु तत्कल्पनमागमान्तरेष्वपि तुल्यम् । ननु चोक्तम् 'अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्याद्' इति, तच्चेह नास्तीति कथं श्रुत्यनुमानम् ? नैष दोषः ।

कर्तृसामान्यशून्यत्वादथमूलान्तरोदयः, तदसद्बाधकाभावाद् भ्रान्त्यादिप्रतिषेधनात्; प्रत्यक्षमूलतायां तु गुर्वी भवति कल्पना; वेदस्त्वनन्तशाखत्वान्मूलं तत्र स्वसङ्गतम् । नन्वत्र वेदमूलत्वे द्वेषो वेदविदां कथम् ? गत्वा त एव पृच्छ्यन्ताम् येषां द्वेषादि विद्यते । गोवधे वा कथं तेषां द्वेषः सुस्पष्टवैदिके ? प्रत्युक्तश्च विरुद्धत्वं शाखाऽनन्त्याच्च दुर्गमम् । किमियद्वेदसर्वस्वं यावदस्मन्मुखे स्थितम् ? शाखान्तराद्वा संवादो न लभ्यतेति का प्रमा ?

तथा च साङ्ख्यशास्त्रप्रसिद्धत्रिगुणात्मकप्रकृतिसूचनपरम् "**अजामेकां लोहितशुक्लकृष्णाम्**" इति वैदिकलिङ्गमुपलभ्यते; निर्ग्रन्थकथितवचसः चित्तत्वज्ञानशंसी चाऽयमनुवादो दृश्यते—'मुनयो वातरशनाः' इति, एवं रक्तपटपरिग्रहभस्मकपालधारणादिमूलमप्यभियुक्ता लभन्त एव ।

मन्वादिस्मृतिवत्कर्तृसाम्यस्याऽसम्भवेऽप्यतः प्रमाणं वेदमूलत्वाद् वाच्या सर्वागमा स्मृतिः । ततश्च – "यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः । स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः" इत्यत्र यथा मनुग्रहणं गौतमयमाऽऽपस्तम्बसंवर्तकात्यायनादि स्मृत्यन्तरोपलक्षणम्, एवमर्हत्कपिलसुगताद्युपलक्षणपरमपि व्याख्येयम् । इत्यतो वेदमूलत्वात्सर्वागमः प्रमाणम् । सर्वागमप्रमाणत्वे नन्वेवमुपपादिते अहमप्यद्य यत्किञ्चिदागमं रचयामि चेत्; तस्याऽपि हि प्रमाणत्वं दिनैः कतिपयैर्भवेत्; तस्मिन्नपि न पूर्वोक्तन्यायो भवति दुर्वचः ? जरत्पुस्तकलिखितं यदपि तदपि किञ्चिदिदानीं केनाऽपि धूर्तेन प्रख्याप्यते ?

महाजनसमूहे ये प्रसिद्धिं प्रापुरागमाः, कृतश्चबहुभिर्येषां शिष्टैरिह परिग्रहः, अद्य प्रवर्तमानश्च नाऽपूर्वा इव भान्ति ये, येषां न मूलं लोभादि येभ्योनोद्विजते जनः, तेषामेव प्रमाणत्वमागमानामिहेष्यते, न मृष्यते तु यत्किञ्चित्प्रमाणं कुट्टिनीमतम् । तथाहि—

"अमितैकपटनिवीताऽनियतस्त्रीपुंसविहितबहुचेष्टम्, नीलाम्बरव्रतमिदं किल कल्पितमासीद्विटैः कैश्चित् तदपूर्वमिति विदित्वा निवारयामास धर्मतत्त्वज्ञो राजा शङ्करवर्मा, न पुनर्जैनादिमतमेवम्। इत्याप्तोक्तत्वहेतोः परिमुषितपरोदीरिताऽशेषदोषात् एषां वेदागमानां सुदृढमुपगते मानभावे प्ररोहम् तन्मूलत्वात्तथात्वं पुरुषवचनतो वाऽस्तु शास्त्रान्तराणाम्, तद्द्वारेणाऽपि वक्तुं न खलु कलुषता शक्यते वेदवाचाम्।"

( न्यायम् ४ पृ० २६७-२७२ )

इत्थं वाचस्पतिमिश्रगुरुणा जयन्तभट्टाचार्येण तु न्यायमञ्जर्यामधिकारिभेदेन सर्वेषामागमानां प्रामाण्यं व्यवस्थापितम्; प्रायः स एव मार्गः वीरमित्रोदयादिप्रबन्धैरनुसृतः इति विज्ञायते[१]।

ननु साङ्ख्ययोगपञ्चरात्रपाशुपताद्यागमाः किं धर्मे प्रमाणमुत न ? तेऽपि वेदाऽविरुद्धाः प्रमाणमेव; तथा च योगियाज्ञवल्क्यः-

न वेदशास्त्रादन्यत्तु किञ्चिच्छास्त्रं विद्यते।
निः सृतं सर्वशास्त्रं तु वेदाशास्त्रात्सनातनात्॥
दुर्बोध्यं तु भवेद्यस्माद्ध्येतुं नैव शक्यते।
तस्मादुद्धृत्य सर्वं हि शास्त्रम् तु ऋषिभिः कृतम्॥
पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥
साख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा।
अतिप्रमाणान्येतानि हेतुभिर्न विरोधयेत्॥

अत्र साङ्ख्यं योगः पञ्चरात्रम्' इत्युपक्रम्य, 'हेतुभिर्नविरोधयेद्' इत्युक्तेस्तेषामदूष्यत्वमात्रे तात्पर्यं न तु प्रामाण्यम् इत्यपरार्कवचनं सिद्धान्तेन समीचीनः। यत्तु बृहत्पराशरविष्णुधर्मोत्तरादिवचनमाश्रित्य अपरार्कवचनमनादरणीयमित्युद्घोषितम्[१] केचित्तत्तु जल्पनमात्रम्। यतो हि तेषां प्राशस्त्यं समुपस्थापितं न तु प्रामाण्यम्। दृश्यते स्पष्टं यद् बुद्धस्यावतारस्वीकारेऽपि शाक्यवचनानामप्रमाणत्वं प्रतिपादितमस्ति।

नवमाऽवतारत्वेऽपि वैदिकार्यैर्बुद्धादेशो वेद बाह्यागम एव। अधोलिखितकारिकया संदेहस्य, यत्र तत्र, स्थापना कृताऽस्ति—

---

१. दर्शनो० आगम० पृ० ४९५।

१. इन्दिरारमणः, मानवधर्मशास्त्रस्य [ मनुस्मृतेः ] मानवार्षभाष्यम्; प्रथम काण्डम्, पृ. ४४७-४४९।

ज्ञानेनाऽऽकाशकल्पेन धर्मान्यो गगनोपमान् ।
ज्ञेयाऽभिन्नेन सम्बुद्धस्तं वन्दे द्विपदां वरम् ॥

आकाशेनेषदसमाप्तमाकाशकल्पमाकाशतुल्यमेतत्; तेन आकाशकल्पेन ज्ञानेन किम् ? धर्मानात्मनः, किं विशिष्टान् ? गगनोपमान्, गगनमुपमा येषां ते गगनोपमाः, तानात्मनो धर्मान् । ज्ञानस्यैव पुनर्विशेषणम् ज्ञेयैर्धर्मैरात्मभिरभिन्नम्, अग्न्युष्णवत्सवितृप्रकाशवच्च ज्ञानम्, तेन ज्ञेयाऽभिन्नेन ज्ञानेनाकाशकल्पेन ज्ञेयात्मस्वरूपाऽव्यतिरेक्तेन, गगनोपमान् धर्मान्, यः सम्बुद्धः, सम्बुद्धवानिति अयमेवेश्वरो यो नारायणाख्यः, तं 'वन्दे' अभिवादये, द्विपदां वरम् द्विपदोपलक्षितानां पुरुषाणां वां प्रधानम्, पुरुषोत्तमित्यभिप्रायः । उपदेष्टृनमस्कारमुखेन ज्ञानज्ञेयज्ञातृभेदरहितं परमार्थतत्त्वदर्शनमिहप्रकरणे प्रतिपिपादयिषितं प्रतिपक्षप्रतिषेधद्वारेण प्रतिज्ञातं भवति (शाङ्करभाष्यम्)। स्पष्टं यदत्र शाङ्करभाष्येऽपि नारायणाख्यः पुरुषोत्तमः सम्यक् सम्बुद्धो बुद्ध एवाऽभिप्रेतः । भगवतो बुद्धस्य च नारायणाऽवतारत्वमितिहासपुराणादिषूपवर्णितम्, मनुष्यरूपत्वेन 'द्विपदां वरम्' च जगति प्रसिद्धमेव परञ्च बुद्धस्योपदेशाः वेदबाह्या अत एव प्रमाण्य विरहा एव । अन्यदपि---

अशक्तिरपरिज्ञानं क्रमकोपोऽथवा पुनः ।
एवं हि सर्वथा बुद्धैरजातिः परीदीपिता ॥

उपलम्भात्समाचारादस्ति वस्तुत्ववादिनाम् ।
जातिस्तु देशिता बुद्धैरजातेस्त्रसतां सदा ॥

अवस्त्वनुपलम्भं च लोकोत्तरमिति स्मृतम् ।
ज्ञानं ज्ञेयञ्च विज्ञेयं सदा बुद्धैः प्रकीर्तितम् ॥

आदिबुद्धाः प्रकृत्यैव सर्वे धर्माः सुनिश्चिताः ।
यस्यैवं भवति क्षान्तिः सोऽमृतत्वाय कल्पते ॥

अलब्धावरणा सर्वे धर्माः प्रकृतिनिर्मलाः ।
आदौ बुद्धास्तथा मुक्ता बुध्यन्त इति नायकाः ॥

क्रमते नहि बुद्धस्य ज्ञानं धर्मेषु तायिनः ।
सर्वे धर्मास्तथा ज्ञानं नैतद् बुद्धेन भाषितम् ॥

"यस्मान् न हि क्रमते 'बुद्धस्य' परमार्थदर्शिनो ज्ञानं विषयान्तरेषु धर्मेषु धर्मसंस्थम्, सवितरीव प्रभा; तायिनः तायोऽस्यास्तीति तायी, सन्तानवतो निरन्तरस्याकाशकल्पस्येत्यर्थः, पूजावतो वा; प्रज्ञावतो वा 'सर्वे धर्मा' आत्मनोऽपि, 'तथा' ज्ञानवदेवाकाशकल्पत्वान्न क्रमन्ते क्वचिदप्यर्थान्तरे इत्यर्थः । यदादावुपन्यस्तम्--- 'ज्ञानेनाकाशकल्पेन' इत्यादि, तदिदमाकाशकल्पस्य तायिनो बुद्धस्य, तदनन्यत्वादाकाशकल्पं ज्ञानम्, न

क्रमते क्वचिदप्यर्थान्तरे; तथा धर्मा इति। आकाशमिवाचलमविक्रियं निरवयवं नित्यमद्वितीयमसङ्गमदृश्यमग्राह्यमशनायाद्यतीतं ब्रह्मात्मतत्त्वम्, 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' ( बृ. उ. ४।३।२३ ) इति श्रुतेः। ज्ञानज्ञेयज्ञातृभेदरहितं परमार्थमद्वयम् 'एतन् न' बुद्धेन भाषितम्; यद्यपि बाह्यार्थनिराकरणम्, ज्ञानमात्रकल्पना च अद्वयवस्तुसामीप्यमुक्तम्; इदं तु परमार्थतत्त्वमद्वैतं वेदान्तेष्वेव विज्ञेयमित्यर्थः'' ( शाङ्करभाष्यम् )।

अत्राऽयमाशयः---तायतेऽनेनेति तायः' सुदृष्टमार्गोपदेशः, सोऽस्याऽस्तीति 'तायी' ( प्र० वा० वृत्तौ परि० १-३ पृ० ५२० ), तस्य तायिनो भगवतो बुद्धस्य. 'ज्ञानं' 'धर्मेषु' ध्रियन्त इति धर्माः, सत्तावन्तः पदार्थास्तेषु 'न क्रमते' न प्रवर्तते, भगवान् बुद्धः स्वज्ञानविषयतया किमपि वस्तु सद्रूपं न स्वीकरोति इत्यर्थः, तन्मते सर्वेषां धर्माणामाकाशकल्पत्वाद्, गगनोपमशून्यरूपत्वाद्वा अतः 'बुद्धेन' परमार्थदर्शिना भगवता शौद्धोदनिना प्रज्ञावता 'सर्वे धर्माः' निखिलज्ञेयविषयाः, 'तथा ज्ञानम्' च सर्वज्ञेयभूतधर्मविषयम्, 'नैतत्' न, 'एतत्' इत्येवं रूपेण निषेधविधयैव 'भाषितम्' प्रतिपादितम्, लोकेभ्यः उपदिष्टम्; अर्थात्, किमपि ज्ञेयं वस्तु भगवता बुद्धेन सद्भूतं न मतम्, न वाऽस्तीति विधिमुखेन प्रतिपादितम्; किन्तु सर्वमेव वस्तुजातं 'गगनोपम् एव दृष्टम्, 'सर्वं शून्यमिति' अत एव, 'न एतत्' इति प्रतिषेधमुखेनैव सर्वं निर्दिष्टं च; एतदेव बुद्धेन दृष्टं परमार्थतत्त्वमिति। एतदेव बुद्धदर्शनम्, सम्यग् दर्शनमिति तदुपजीविना गौडपादाचार्येणाभ्युपगतम्, स्वग्रन्थोपान्त्यश्लोकेनोपसंहृतञ्चेति।

यद्यपि मूले---'नेति नेति' इति वैदिकन्यायेन, 'न एतद्' इत्येव जगद्विषयं बुद्धभाषितमुपश्लोकितम्, तथापि 'एतन्न' इति निषेधेनैव निषिध्यमानस्य समीपतरवर्तिन एतदोऽपेक्षयाऽवशिष्टं किञ्चित्तत्त्वमवगम्यते, तत्तु संबोद्धैव स्याद् यः खलु 'एतन्न' इति संबुद्धः। अतो भगवता बुद्धेन यद् 'एतन्न' इति भाषितम्, तेन यद्यपि शब्दार्थमात्रतः बाह्यार्थनिराकरणमात्रमवबुध्यते, तथापि, एतदः समीपतरवस्तुसापेक्षत्वात्तत्प्रतिषेधेनाऽवशिष्टाऽद्वयवस्तुसामीप्यमर्थादेवोक्तं भवति, ज्ञानमात्रकल्पना च सूच्यते; तस्माद् बुद्धेन शब्दतः साक्षादनुक्तमपि ज्ञानज्ञेयज्ञातृभेदरहितं परमार्थाऽद्वयतत्त्वम् 'एतन्नेति' प्रतिषेधाऽनुयोगितया सुतरामेव सिध्यति। तदिदं परमार्थतत्त्वमद्वैतं बुद्धेन 'एतन्नेति' प्रतिषेधविधया सूचितम्, विधिमुखेन वेदान्तेष्वेव विज्ञेयमिति शङ्कराचार्योऽभिप्रैति। तदित्थम् 'एतन्न' इति बुद्धभाषिते, अहमिति योजनेन, 'अहम् एतत् न' इति सम्पूर्णं महावाक्यं भवति, बौद्धौपनिषददर्शनयोश्चैक्यं सम्पद्यत इति शङ्कराचार्याऽभिप्रायसारः।

एतत्प्रकरणादौ यद् गौणपादेन सम्यक्संबुद्धो द्विपदां वरो भगवान्बुद्धोऽपि वन्दितः, यच्चाऽनेनाऽऽचार्येण प्रकरणान्ते 'तायिनः' बुद्धस्य 'भाषितम्' सिद्धान्तत्वेनोपसंहृतं तदेतदुभयमपि भगवति बुद्धे तदीयश्रद्धाऽतिशयम् बुद्धदेशनासु तस्याऽतोवाश्वासम्, च दृढतरमभिव्यनक्ति न तु धर्मे प्रामाण्यम्।

अत्र स्वकारिकायां गौडपादस्य बुद्धविशेषणतया 'तायि' प्रयोगोऽपि अमुमेवार्थमवगमयति। दृश्यते हि 'तायि' शब्दो बौद्धसम्प्रदायेऽतितरां समादृतः सुप्रयुक्तश्च भूयसा तन्महापाण्डितैः। तथाहि दिङ्नागस्य प्रमाणसमुच्चये—

'प्रमाणभूताय' जगद्धितैषिणे, प्रणम्य शास्त्रे सुगताय तायिने,
प्रमाणसिद्धचै स्वकृतिप्रकीर्णनान्निबध्यते विप्रसृतं समुच्चितम्''

इति पद्यमादावेव विद्यते। अन्यत्र ( प्र० वा० वृत्तिपरिशिष्टे १-३ पृ० ५१८ ) एतत्पद्योत्तरार्धम्, पाठान्तरेणेत्थमुद्धृतं दृश्यते---'प्रमाणसिद्धचै स्वमतात्समुच्चयः करिष्यते विप्रसृतादिहैकतः'' इति। ''तत्र यथा प्रत्यक्षादिप्रमाणम्, पुरुषार्थोपयोगिनोऽनधिगतस्यार्थस्य प्रकाशकं संवादकं च, तथा भागवनपि ( बुद्धः ); यत्रोत्कृष्टः पुरुषार्थः प्रतिबद्धश्चतुरार्यसत्यलक्षणे तत्त्वे, तद्विषयं हि ज्ञानमासाद्य मोक्षार्थिना मोक्षाधिगमात्, तस्य ह्यनाधिगतस्य प्रकाशकोऽविसंवादकश्च भगवान्न्याय इति प्रमाणसाधर्म्यात्प्रमाणम्; भूत उत्पन्नः 'भूत' वचनम्, अप्रजातस्येश्वरादेः परपरिकल्पितनित्यस्य प्रतिषेधार्थम्, स्वार्थस्तु सामर्थ्यगत इति न तदर्थमेतदिति वक्ष्यते; प्रमाणं चाऽसौ भूतश्चेतिप्रमाणभूतः, तस्मै प्रमाणभूताय प्रणम्येति योज्यम्। 'जगद्धितैषिणे' इति; जगद्धितं हेयोपादेययोरात्यन्तिके हानोपादाने, तदेषणशीलाय, प्रणम्य इति सम्बन्धः। 'सुगताय' इति; सुष्ठु गतः प्राप्तः सर्वथा सर्वहेयप्रहाणं ज्ञानादि सम्पदं चेति सुगतः, शोभनं वागतोऽनुबुद्धवानिति सुगतः ज्ञानार्थोऽत्र गतिः पूर्वत्र तु प्राप्तिवचनः। अनेन तु स्वार्थं सम्पत्फलाऽवस्थाभाविन्युक्ता, पूर्वन्तु हेतुभाविनी परार्थसम्पदुक्ता; निरूपमां फलाऽवस्थाभाविनीं परार्थसम्पदमाह---'तायिने' इति। तायतेऽनेनेति 'तायः' सुदृष्टमार्गोपदेशः, सोऽस्यास्तीति इति 'तायी'।[1]

---

१. तायः स्वदृष्टमार्गोक्तिः, वैफल्याद्वक्ति नाऽनृतम्;
दयालुत्वात्परार्थं च सर्वारम्भाऽभियोगतः,
तस्मात्प्रमाणम्; 'तायो' वा चतुः सत्यप्रकाशनम्,

दुःखहेतुनिवर्तकत्वेन 'स्वयं दृष्टस्य मार्गस्योक्ति', देशना 'तायः' कारणं कार्योपचारात्; तथा हि सत्त्वान् तायते, तद्योगात् तायित्वम्। स च 'वैफल्याद् वक्ति नाऽनृतम्', आत्मसुखाद्यभिलाषादिना कश्चिदसत्यं वदति, अज्ञानाद्वा; प्रहीणात्मदर्शनस्य साक्षात्कृततत्त्वस्य तदुभयं नास्ति।

विशेषतः सत्याविधानहेतुरेव कृपाऽस्तीत्याह--दयालुत्वाच्च परार्थं च, सर्वस्य' मार्गाभ्यासादेः, 'आरम्भेऽभियोगतः' परमार्थमेवोद्दिश्य भगवानभिसंबुद्धः, कथन्तस्य मिथ्याभिधानेन सत्त्ववञ्चनाशङ्कापि? 'तस्मात्' तायित्वात् प्रमाणं भगवान् ( बुद्धः )। यथादृष्टार्थप्रवक्तृत्वं हि संवादित्वमेवेति प्रथमप्रमाणलक्षणयोगात्प्रामाण्यमनेनोक्तम्। द्वितीयलक्षणयोगमप्याह—'तायो वा चतुः सत्यप्रकाशनम्' परैरज्ञातस्य सत्यचतुष्टयस्य ( दुःखसमुदयनिरोधमार्गसंज्ञस्य ) प्रकाशनं वा 'तायः' तद्योगात् 'तायी' प्रमाणं भगवानुक्तम् ( प्र० वा० वृत्तौ परिच्छे० १ श्लोक १४७-१४८; पृ० ६१-६२ )।

श्लोकश्चाऽयं प्रामाणकथनप्रस्तावाद् भगवत्प्रामाण्यसाधकोऽनुलोमप्रतिलोमतो ज्ञेयः। प्रमाणं भगवान् जगद्धितैषित्वात्, यतश्च जगद्धितैषी अतः शास्ता, यतश्च शासकोऽतो गोत्रभेदेन प्राज्ञजातीयत्वात्सुगतः, सुगतत्वाच्च सर्वजगत्त्रायकोऽतोऽयं प्रमाणमिति अनुलोमव्याख्या।

प्रतिलोमस्तु—प्रमाणं तायित्वात्, तायित्वं सुगतत्वात्, तच्च शास्तृत्वात्, एतच्च जगद्धितैषित्वात्। कार्यतः कारणानुमानमिति व्याख्याभेदः (प्र० वा० वृत्तौ० परिशि० १३ पृ० ५१८-२१)। 'सुगतश्च सर्वज्ञो यदि परामार्थतो नेष्यते ? तर्हि कथं 'प्रमाणभूताय' इत्यादिनाऽसौ समर्थितः, स्तुतश्चाऽद्वैतादिप्रकरणानामादौ दिङ्नागादिभिः सद्भिः" ? (प्रमेयकमलमार्त्तण्डे पृ० २१)। इत्थं वेदाऽविरोधेन सर्वाप्तागममानता, तद्विरोधे तु सर्वेषामप्रामाण्यमिति स्थितम्।



# विधेः स्रोतांसि (१)

## वेदापौरुषेयत्वम्

ऐहिकामुष्मिकः सर्वोऽपि साध्यसाधनभावः प्रमाणमूलक एव प्रसिद्ध्यति। प्रमाणञ्च प्रमाकरणमेव। प्रमात्वञ्चानधिगताबाधितविषयज्ञानत्वमेव। असन्दिग्धाविपरीतानधिगतविषया चित्तवृत्तिः प्रमाणम्। बोधश्च पौरुषेयः फलं प्रमा। एतेन संशयविपर्ययस्मृतिसाधनेषु नातिव्याप्तिः। चैतन्यप्रतिबिम्बविशिष्टबुद्धिवृत्तिः, वृत्तिप्रतिबिम्बितचैतन्यं वा फलपदार्थः। स एव मुख्यप्रमापदवाच्यः। तत्करणत्वेन वृत्तेः प्रमाणत्वम्। वृत्तिकरणत्वेनेन्द्रियादीन्यपि प्रमाणपदवाच्यानि भवन्ति।

नैयायिकादिरीत्या त्विन्द्रियत्वेन रूपेणेन्द्रियजन्यं ज्ञानं **प्रत्यक्षम्**। ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्। वेदान्तरीत्या वृत्तिजननेऽप्येतेषां सम्बन्धानामुपयोगः। सांख्यदृष्ट्या प्रतिविषयाध्यवसायः प्रत्यक्षलक्षणम्। श्रीमद्भागवते त्वेकादशवृत्तयोऽङ्गीकृताः—

एकादशासन् मनसो हि वृत्तय आकूतयः पञ्च धियोऽभिमानः।
मात्राणि कर्माणि पुरञ्च तासां वदन्ति हैकादश वीर भूमीः॥ (५।११।९)

सत्वोद्रेके प्रमारूपा वृत्तयो भवन्ति। रजसा दोषैश्च संशयविपर्ययौ भवतः। तमसा निद्रारूपा वृत्तिर्जायते। दैवस्य फलाभिमुखस्य प्राक्तनकर्मणो दैवस्य देवसमूहस्य परमेश्वरस्य देहादेश्च सर्वकार्येष्विवात्रापि हेतुत्वम्—

अधिष्ठानं तथा कर्त्ता करणञ्च पृथग्विधम्।
विविधाश्च पृथक् चेष्टा दैवञ्चैवात्र पञ्चमम्॥
(श्रीमद्भाग. १८।१४)

नानुमानं प्रमाणमिति वदता चार्वाकेण कथमन्यगता विप्रतिपत्तिः, प्रतिपित्सा, संशीतिर्विपरीतावगतिरनवगतिश्च प्रत्यक्षेणावगन्तुं शक्या? अनुमानन्तु तेन नाभ्युपगम्यते। अनवधृताज्ञानसंशयविपर्ययस्तु यं कञ्चन प्रति प्रतिपादयितुं प्रवर्त्तमानः प्रमत्त एव स्यात्। मुखाकृत्या, व्यवहारेण, वचनेन वा तदनुमानेऽ**नुमानप्रामाण्या**भ्युपगम एवं बलाच्छिरसि निपतितः।

एवमेव **शब्दप्रामाण्यम्**। बौद्धो वैशेषिकाश्चानुमानव्यतिरेकेण शब्दस्य प्रामाण्यं नाभ्युपगच्छतः। प्रमाणाभासतो यथा लिङ्गेन स्फुटार्थानवभासः, तथैव नानार्थभ्रम-

कारिणि शब्देऽपि कुत्रचिच्छब्दात्प्रतिभाते आप्तवादत्वलिङ्गेन निश्चिता मतिर्जायते। अत एव शब्दस्याप्याप्तवादाविसंवादसामान्यानुमानतामेव बौद्धवैशेषिकौ मन्येते।

शब्दोऽनुमानान्नातिरिच्यत इति यदुक्तम्, तन्न; अभिन्नविषयत्वासिद्धेः। अर्थमात्रं शब्दस्य विषयः, साध्यधर्मविशिष्टो धर्मी विषयोऽनुमानस्य। किञ्च, सामान्यमात्रविषयत्वेन विषयाभेदः किं सामान्यमात्रविषयतया, तद्वन्मात्रविषयतया ? उत सम्बद्धार्थप्रतिपत्तिहेतुतया वा ? नाद्यः, वेदान्तरीत्या सकलव्यक्ति-अनुस्यूत-नित्यैकत्वादिधर्मोपेतरूपस्य सामान्यस्यासिद्धेः, अन्यापोहविषयत्वरूपस्य च सामान्यस्य निराकरिष्यमाणत्वात् , नित्यादिस्वभावसामान्यविषयत्वे चानयोर्मीमांसकमतप्रवेशोऽपि स्यात्। अत एव सम्बद्धार्थप्रतिपत्तिहेतुत्वेन शब्दानुमानयोरभेदोऽपि प्रत्याख्यातः, प्रत्यक्षस्यापि सम्बद्धार्थावगमहेतुत्वेनानुमानत्वप्रसङ्गात्। पर्वतादिवत् शब्दो धर्मी स्थायीत्यनुमानकाले लोकेन नहि शब्दोऽर्थवत्त्वेन ज्ञायते। किन्तु शब्दात् पृथगेवार्थः प्रतिपद्यते। तस्माद् धर्मविशिष्टस्य साध्यस्येहासम्भवान्न शब्दलिङ्गयोरैक्यम्।

यदुक्तमभिन्नसामग्रीसमन्वितत्वेन शब्दानुमानयोरभेद इति, तन्न; पक्षधर्मत्वादीनां शब्देऽसम्भवात्। तथाहि—शब्दस्य पक्षधर्मत्वं न सम्भवति, धर्मिण एवात्र कस्यचिदभावात्। देशे काले च शब्दार्थयोरननुगमान्नान्वयव्यतिरेकावपि सम्भवतः। शब्दो नानुमानं तद्भिन्नविषयत्वात् तद्भिन्नसामग्रीकत्वाच्च प्रत्यक्षवत्। ऋष्यार्यम्लेच्छादिभिः शब्दस्य यथेष्टं नियुज्यमानस्याप्यर्थप्रतीतिहेतुत्वं दृश्यते, न तथा कृतकत्वं नित्यत्वसाधनाय धूमत्वादिकं वा जलादिसाधनाय नियुज्यमानं तत्प्रतीतिहेतुर्भवति।

न्यायमतेनाऽपि शब्दो नानुमानम्, अनाप्तप्रणीतत्वेनैवाव्यभिचारिज्ञानजनकत्वात्। कृतकत्वादिहेतोस्तु साध्यव्यभिचारज्ञानेऽविनाभाव एव निमित्तं नानाप्ताप्रणीतत्वादिकम्। आप्तोपदेशसामर्थ्याच्छब्दादर्थसम्प्रत्ययः ( न्यायसू० २।५२ )। सूत्रार्थस्तु—आप्तस्य भ्रमादिशून्यस्य च उपदेशः शब्दस्तत्र यत्सामर्थ्यम्, आकाङ्क्षायोग्यतादिमत्त्वं ततोऽर्थसम्प्रत्ययः। तेन व्याप्तिनिरपेक्षादाकाङ्क्षादिज्ञानादर्थे सम्प्रत्ययः शाब्दबोधो भवति। शब्दादमुमर्थं प्रत्येमि, न त्वनुमिनोमीत्यनुव्यसायात्। शब्दार्थयोः संकेतरूपसम्बन्धसत्त्वेऽपि न प्राप्तिलक्षणः सम्बन्धः। येनेन्द्रियेण शब्दो गृह्यते, न तेनार्थः। अतीन्द्रियोऽप्यर्थः शब्दस्य विषयो भवति, तयोः प्राप्तिलक्षणे सम्बन्धे गृह्यमाणे शब्दान्तिकेऽर्थः स्यादर्थान्तिके वार्थः स्यादुभयं वोभयं स्यात्। जातिविशेषे चानियमात् ( न्या० सू० २।५६ ) ऋष्यार्यम्लेच्छानां यथाकामं शब्दविनियोगोऽर्थप्रत्यायनाय प्रवर्त्तते, तेन सामयिकः सम्बन्धो न स्वाभाविकः। यथा तैजसप्रकाशस्य रूपप्रत्ययहेतुत्वं न जातिविशेषे व्यभिचरति, न तथात्र। आर्या यवशब्दाद् दीर्घशूकं प्रतियन्ति। म्लेच्छास्तु कङ्गुम्। नानाशक्तावपि यस्य यत्र शक्तिग्रहः, तस्य तदर्थोपस्थितिः। तथा च सिद्धान्तेऽप्यर्थव्यवस्थोपपत्तिः। **तस्माच्छब्दस्य स्वतन्त्रमेव प्रामाण्यमव्याहतम्।**

**बाधविचारः**

यत्र शुक्तिरजतादौ नेदं रजतमित्यर्थान्यथात्वज्ञानं जायते, तत्र त्वर्थान्यथात्वरूपाऽप्रमाणता शीघ्रगम्यैवेति नानवस्थाशङ्कापि, तदपवादात्मनस्तस्य तद्बाधमन्तरा नुत्पत्तेः। पूर्वं तु परस्याजातत्वाततदबाधितत्वैव जायते। **पूर्वं परमजातत्वादबाधित्वैव जायते। परस्यानन्यथोत्पादान्न त्वबाधेन सम्भवः॥** एतेन रजतज्ञानस्य ज्यायसः कनीयसा नेदं रजतमिति ज्ञानेन कथं बाधः, ज्यायसा कनीयस एव बाधौचित्यादित्यपास्तम्। अनपेक्षितस्य ज्यायस्त्वं बाध्यत्वे हेतुर्न **बाधकत्वे** इत्युक्तमेव—

पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम्।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्॥

ततश्चात्र पूर्वस्य निरपेक्षत्वेऽपि पूर्वाबाधेनोत्पत्तिमेवानासादयतोत्तरेणेत्युत्पत्त्यवस्थायामेवार्थान्यथात्वरूपाप्रामाण्यबोधनाल्लाघवमेव।

**ख्यातिविचारः**

अख्यातिवादरीत्या बाध्यप्रत्ययो न भवत्येव, बाधार्थनिरूपणात्। तथाहि—यदि नाश एव बाधः, स न तेषामेव, बुद्धेबुद्ध्यन्तराद्विरोधः सकलबोधसाधारणत्वात्। अथ सहानवस्थानम्, तदपि समानम्, अबाधितानामपि ज्ञानानां सहावस्थानासम्भवात्। अथ संस्कारोच्छेदो बाधः, सोऽपि तथाविधः, सम्यक् प्रत्ययजनितसंस्कारस्याप्युच्छेददर्शनात्। विषयापहारो बाध इत्यपि न, प्रतिभासत्वेन विषयापहारासम्भवात्। नहि बाधकज्ञानेन पूर्वप्रतिभानापलापः। तदभावग्रहोऽपि न बाधः, तस्य कालान्तरभावित्वे मुद्गरदलितघटाभावग्राहिणोऽपि विज्ञानस्य बाधकत्वप्रसङ्गात्। तात्कालिकत्वे तु प्रत्ययद्वयसमर्पितद्वितययोगाद् उभयात्मकमेव तद्वस्तु। किं कस्य बाधकम्? फलापहारोऽपि न बाधः, ज्ञानस्य प्रमाणफलस्योत्पन्नत्वेनापरिहरणीयत्वात्। नहि यदुत्पन्नं तदनुत्पन्नं वदति बाधकः। दानादिफलापहारो बाध इत्यपि न, तस्य पुरुषेच्छाधीनत्वेन प्रमाणफलत्वाभावात्।

किञ्च, बाध्यबाधकभावः समानविषयोर्भवति भिन्नविषयोर्वा? नाद्यः, धारावाहिज्ञानेष्वदृष्टत्वात्। नान्त्यः, घटकुण्डचोपलम्भयोस्तदभावात्। यदि पूर्वज्ञानेन गृहीतादर्थाद्भिन्नोऽर्थ उत्तरेण ज्ञानेन गृह्यते, तदापि न बाधसिद्धिः। किञ्च, प्राप्तप्रतिष्ठे पूर्वस्मिन् प्रत्यये पश्चाद्भावी प्रत्यय एव दुर्बलत्वाद् बाधितुं योग्यः। न चैवं दृश्यते, तस्मान्न बाध्यं ज्ञानं भवतीति न तद् दृष्टान्तेन साधर्म्यनिबन्धनः संशयः, तदभावात् संवादाद्यनपेक्षणान्न परतः प्रामाण्यमिति।

ननु तर्हि शुक्तिरजतादिग्राहिणः विपरीतप्रत्यया अबाधिता एवेति चेन्न विपरीतग्राहिप्रमाणासिद्ध्या तदसिद्धेः। न चेन्द्रियं विपरीतग्राहकम्, तथात्वे सर्वदा तदुत्पादप्रसङ्गात्। न च दोषदुष्टं तत्तथा स्वकार्यकरणे क्षीणशक्तिकत्वात्। दोषाणां कार्यप्रति-

बन्धकत्वमेव भवति न विलक्षणकार्यकारित्वम्, तथात्वे दुष्टेभ्यः शालिबीजेभ्यो यवाङ्कुरोत्पत्तिप्रसङ्गात्। किन्तु शुक्तिरजतस्थले ग्रहणस्मरणरूपं प्रत्ययद्वयमेव विवेकग्रहणाद् विपरीतप्रत्ययत्वेनाख्यायते । अतः एवाननुभूतरजतस्यानुद्‌बुद्धसंस्कारस्य न 'रजत' मिति ज्ञानं भवति। स्मरणमपि दोषवशात् प्रमुष्टतत्ताकं भवति। तेन पुरोवस्थिति भास्वराकारधर्मिप्रतिभासरूपस्येदमनुभवस्य प्रमुष्टतत्ताकस्य रजतमिति स्मरणस्य विवेकाग्रहणादिदं रजतमित्याख्यातिरेवोच्यते।

**विपरीताख्यातौ** रजतमन्यदेशकालस्थमत्रालम्बनम्? शुक्तिका वा निगूहिताकारा सती परिगृहीतरजताकारा? अथवाऽन्यदालम्बनम् अन्यदाभातीति? अत्र प्रकारत्रयमेव सम्भवति। प्रथमे **असत्ख्यातिरेव**, असतो रजतस्य प्रतिभासात् देशकालान्तरे सतोऽप्यत्र तदसत्त्वात्। यदि देशकालौ सन्तावेव भासेते, तदा न भ्रान्तिः। यद्यसन्तौ तदा कथमालम्बनं स्फुरति? स्मृतेरनर्थजत्वं रूपमेवेति चेत्तदापि तया कथमिह रजतं सन्निधापयितुं शक्यम्? तस्मादसन्निहितावलम्बना विपरीतख्यातिरसत्ख्यातिरेव। द्वितीयोऽपि पक्षो निर्मूल एव, यदि रजतप्रतीतिस्तर्हि कथं शुक्तिरालम्बनम्? बाधकप्रत्ययादेवमिति चेन्न, ज्ञानान्तरेणास्य विषयव्यवस्थापनात्। तस्माद्यदेव चकास्ति तदेवाऽस्य विषयः। शुक्तिस्तु निगूहिततनुरित्यपि न युक्तम्, तथात्वे विषयत्वानुपपत्तेः न च सन्निधानेनालम्बनता, तथात्वे तत्रत्यभूप्रदेशस्यालम्बनतापत्तेः। तेन यस्यां बुद्धौ योऽवभासते स एव तद्विषयः। न अन्यद् भाति, अन्यदालम्बनम्। यदि रजतमेव बुद्धिग्राह्यम्, तच्चासच्चेत् तदा सत्ख्यातिरपि नोपपद्यते।

अत्रौपनिषदास्तु विषयस्यापरोक्षावभासहेतुत्वेन विषयमन्तरापरोक्षावभासानुपपत्त्या स्मर्यमाणस्य रजतस्य परोक्षदेशकालावस्थायित्वेनात्र तदभावान्न तद्धेतुत्वं सम्भवति। परमार्थसतो बाध्यत्वानुपपत्त्या चानिर्वचनीयरजतस्यैव शुक्तिरजतप्रतीतौ विषयत्वम्। तत्र रजतं तदाकारवृत्तिश्चेत्युभयमप्यनिर्वचनीयम्। शुक्तीदमंशाकारवृत्त्यनावृत्तशुक्त्यवच्छिन्नचैतन्यनिष्ठायाः शुक्तित्वविषयिण्या अविद्यायाः संस्कारसादृश्यादिसध्रीचीनाया रजताकारेण परिणामः। वृत्त्यवच्छिन्नचैतन्यनिष्ठायास्तादृश्या अविद्याया रजतवृत्त्यात्मना परिणामः। नेदं रजतमिति बाधकज्ञानेन सकारणयोरुभययोर्निवृत्तिरेव बाधः। अत एव सविषयं रजतज्ञानं बाध्यते। तत्रेदं रजतमिति प्रतीतिः शुक्तित्वाज्ञानवशात् तदाश्रयशुक्त्यवच्छिन्नचैतन्यात्मना रजतमवगाहते। तेनैव तस्य भ्रमत्वम्। तस्य नेदं रजतमिति रजतात्मताया इदमो रजतस्य बाधो भवति। बाध्यत्वं नाम शुक्तित्वसाक्षात्कारेण रजतकारणाविद्यायाः स्वरूपतः समूलस्य रजतस्य वा स्वरूपहानिः। प्रतीतिदशायां सदित्यपरोक्षतया प्रतीयमानं नासत्। व्यवहारदशायामेव शुक्तित्वज्ञानबाध्यत्वान्न स्वरूपतः सदिति सदसद्विलक्षणम्।

वस्तुतस्तु अन्यस्यान्यथाभानं नामान्यरूपेण स्थितस्यान्यरूपेण भानम्, तच्च रूपभेदप्रयुक्तमेव न तु धर्मभेदप्रयुक्तम्। रूपं नाम स्वरूपं धर्मस्तु स्वभाव इति विवेकः।

तथा च कूटरजतस्य सत्यरजतरूपेण भानमिव शुक्तिरजतस्यापि सत्यरजतरूपेण भानं नान्यथाख्यातिः, रूपभेदाभावात्। अत एव नेदं सत्यरजतमिति शतवारमुपदिष्टमपि कूटरजतं सत्यरजतरूपं न परित्यजति। तेन यदेव सत्यरजतरूपं तदेव कूटरजतस्यापि। यदि रूपभेदाभावेऽपि धर्मभेदे सत्यन्यथाख्यातिरवर्जनीयेत्याग्रहस्तदा विशेषणगतमेव तदन्यथाभानं न विशेष्यमतमिति कृत्वा विशेष्यरूपभाने नान्यथाख्यातिः। अत एव दुष्टपुरुषे शिष्टपुरुष इति ज्ञानं भ्रम इत्युक्तौ पुरुषे पुरुषज्ञानं भ्रमो न भवति, किन्तु दुष्टे शिष्टज्ञानमेव भ्रमः। तस्मादपरमार्थरजतस्य परमार्थरजतात्मनाख्यातत्वेऽपि रजतमेव रजतात्मना ख्यातमिति कृत्वा नान्यथाख्यातिसिद्धिः।

वस्तुतस्तु असत्ख्यात्यात्मख्यातिवादिनो बाह्यानपहाय अख्यात्यन्यथाख्याति-सत्ख्यात्यनिर्वचनीयख्यातिवादिनः सर्वेऽपि वेदानां प्रामाण्यमूरीकुर्वन्ति।

**विधिवाक्यार्थ**विचारोप्यावश्यकः। "स्वाध्यायोऽध्येतव्यः" (श॰ ११।५।६।३) इत्यध्ययनविधिरुक्तविधिविध्यर्थज्ञानमन्तरेण क्रियमाणं धर्मानुष्ठानं विफलमेवेति वदन् मीमांसकानां मन्वादीनामद्ययावदनुवर्तमानधर्मानुष्ठानहेतुरित्यनुमानमिति तद्धेतुभूत-मुक्तप्रवर्त्तनाज्ञानं वाऽनाहार्य्याप्रामाण्यज्ञानास्कन्दितनिश्चयरूपं गमयतीति मीमांसकैः प्रत्यक्षानुमानप्रामाण्यवादीनां शैली धर्ममूलविचारे परिपाल्यते। तथा च "स्वर्गकामो यजेत" (ता॰ ब्रा॰ १६।३।३) इति वाक्ये यागः स्वर्गसाधनम्, स्वर्गकामकर्त्तव्यतया आप्तप्रवर्तनाविषयत्वादिति मन्वादिभिः क्रियमाणायामनुमितौ पक्षादिकं स्पष्टमेव। तत्र कीदृशं हेतुस्वरूपं पुरस्कृत्यानुमितिः क्रियते स्म इति विचारे हेतुज्ञानमनुमितेः प्राणास्तदत्र प्रवर्त्तनाविषयत्वहेतुकानुमाने त्रैविध्यं लोके दरीदृश्यते।

प्रभुशक्तिसमृद्धराजाज्ञारूपप्रवर्त्तनाविषयत्वहेतुना इष्टानिष्टसाधनत्वे अनुमाय लोको नियमितो राजशासनेषु। तत्र हि हेतुतावच्छेदककोटौ राजा, तस्य प्रभुशक्ति-समृद्धिश्चेति द्वयं वर्तमानतयाऽनुभूयमानमपेक्ष्यते।

अनुमेयगतेष्टसाधनानिष्टसाधनत्वविषयकप्रमात्मकज्ञानवत्पुरुषसमवेतप्रवर्तना-विषयत्वहेतुकानुमितिस्थले दृश्यते। यथा लौकिकाप्तोच्चरितवाक्येषु। अत्र हेतुताव-च्छेदककोटौ प्रवर्त्तकपुरुषस्यानिष्टसाधनत्वविषयकयथार्थज्ञानवत्त्वमवश्यं ज्ञातव्यं भवति। केवलप्रवर्त्तनाविषयत्वं च तादृशस्थले प्रवर्त्तकस्य तादृशयथार्थज्ञानवत्त्वानिश्चये प्रयोजकत्वशङ्काकवलितशिथिलमूलमेव भवति। 'बुद्धमुहम्मदयीशु' इत्यादिप्रणीतधर्मे स्वयमेव प्रकार आदृतः।

अनादिसिद्धसजातीयोच्चारणसापेक्षोच्चारणाकानुपूर्वीसम्बन्धिप्रवर्तनाविषयत्वेन हेतुनाहि यागादौ स्वर्गादिसाधनत्वमनुमीयते। मन्वादिभिः क्रियमाणाय धर्मानुष्ठानमूल-भूतानुमितौ तृतीय एव प्रकारः। मन्वादयश्च प्रथितप्रभावा ऐतिहासिकैरप्यभ्युपेयन्ते।

तेऽपि कर्त्तारं न स्मरन्ति, किन्तु 'प्रजापतिना वेदशब्देभ्यः सृष्टिः कृता' इत्यपि वर्णयन्ति—"वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्" इति ।

## प्रामाण्यस्वतस्त्वम्

प्रामाण्यमप्रामाण्यञ्चोभयं स्वत इति सांख्याः । उभयं परत इति तार्किकाः । अप्रामाण्यं स्वतः प्रामाण्यं परत इति बौद्धाः । प्रामाण्यं स्वतः, अप्रामाण्यं परत इति मीमांसकाः ।

यत्तु—किमिदं प्रामाण्यस्य स्वतस्त्वम् ? न स्वत एव जन्म, स्वस्य स्वहेतुत्व-विरोधात् । न वा प्रमाणादेव प्रामाण्यस्य जन्म तत्त्वम्, ज्ञानस्य गुणत्वेन स्वप्रामाण्य प्रति समवायिकारणत्वानुपपत्तेः । नापि ज्ञानसामग्रीतो जन्म, तस्योपाधित्वे जातित्वे च जन्मासम्भवात् । अनधिगतार्थविषयस्य ज्ञानस्य बाधात्यन्ताभावस्य प्रामाण्ये न तज्जन्म सम्भवति, अत्यन्ताभावत्वादेव । जातिरूपत्वे नित्यत्वादेव न तज्जन्मसम्भवः । एवं ज्ञानसामग्रीजन्यत्वमपि प्रमाया न प्रामाण्यस्वतस्त्वम्, अप्रमाया अपि ज्ञानसामग्री-जन्यत्वेनातिप्रसङ्गात् । न च ज्ञानसामग्रीमात्रजन्यत्वोक्त्यापि निस्तारः, विकल्पा-सहत्वात् । तथाहि—दोषाभावसहकृतज्ञानसामग्रीजन्यत्वमात्रं पदार्थः, दोषासहकृतज्ञान-सामग्रीजन्यत्वं वा ? नाद्यः, परतः प्रामाण्यवादिमतप्रवेशापत्तेः । न द्वितीयः, विशेष-दर्शनस्य भ्रमनिवृत्तिहेतुत्वे तद्विपर्ययस्य भ्रमहेतुत्ववद् दोषसहकृतज्ञानसामग्रीजन्य-ज्ञानस्याप्रमात्वे प्रमां प्रति दोषाभावस्य हेतुत्वमपि सिद्धत्येव ।

ननु प्रमासामग्र्यां दोषाभावस्याकाशस्येवावर्जनीयतया सान्निध्येऽपि ईश्वरज्ञान इव प्रमायां न हेतुत्वम् । न चेश्वरज्ञाने दोषाभावः प्रयोजकः, तत्प्रयुक्तत्वस्य तदन्तर्गत-सामग्रीजन्यत्वानतिरेकात् । न च, नित्यस्य तस्य सामग्रीजन्यत्वमुपपद्यत इति चेन्न, नित्यद्रव्येषु तत्सामग्रीजन्यत्वाभावेऽपि गुणवत्त्वप्रयुक्तद्रव्यत्ववत्तत्प्रयुक्तत्वोपपत्तेः । न च दोषाभावस्याभावत्वादेवाकारणत्वम्, विशेषदर्शनाभावस्य भ्रमहेतुत्ववदनुपलम्भस्या-भावप्रमितिहेतुवत्तदुपपत्तेः । तदुक्तमुदयनाचार्येण—भावो यथा तथाऽभावः कारणं कार्य-वन्मतम् ( न्या० कु० १।१० ) । न च निःस्वभावत्वेनाभावस्य न कारणत्वम्, तदसिद्धेः । स्वरूपसत्त्वरहितत्वं त्वभावस्यासिद्धमेव, तदप्युक्तम्—नह्यसौ विधिरूपेण तुच्छ इति स्वरूपेणापि तथा, इतरथा भावस्यापि तथात्वापातात् । किञ्चाभावस्य कार्यत्वानङ्गीकारे प्रध्वंसानुपपत्त्या घटस्य नित्यत्वत्वापत्तिः । यदि कार्यत्वं सम्भवति तर्हि किमपराद्धं कारणत्वेनेति तन्न, विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तहेतुत्वजन्यत्वस्य प्रामाण्यस्वतत्वे दोषाभावात् । कार्यकारणादेव कार्येण सहोत्पत्तिरेव प्रामाण्यस्य स्वत स्त्वम्, कार्यशक्तेरसति बाधके कार्यकारणत्वोत्पत्तिः सर्वैरप्यङ्गीकार्या, अन्यथा दाहादि-शक्तेः कारणान्तरादुत्पत्तावुत्पन्नस्याप्यग्नेरदाहकत्वापत्तिः स्यात् । वह्निश्च स्वाश्रयं दहन्नेव जायते ।

न चैवमप्रामाण्यमपि स्वत एवास्त्विति वाच्यम्, तस्य दोषान्वयव्यतिरेकानुविधायित्वेन तद्धेतुमात्रजन्यत्वाभावात्। न चाजन्यत्वादीश्वरज्ञान उक्तलक्षणाव्याप्तिरिति वाच्यम्, तस्याजन्यत्वेऽपि ज्ञानसामग्रीजन्यत्वे सत्यतिरिक्तकारणाजन्यत्वलक्षणविशिष्टधर्मत्त्वाभावात्। तेन विज्ञानसामग्रीजन्यत्वे सति तदरिक्तसामग्रीजन्यत्वात्यन्ताभाववत्त्वं प्रामाण्यस्वतस्त्वलक्षणम्। न चात्र मानाभावः, कार्यशक्तो कारणाजन्यत्वेन तदनुमातुं शक्यत्वात्। तथाहि—ज्ञानस्य प्रामाण्यं ज्ञानसामग्रीजन्यत्वे सति तदरिक्तहेतुजन्यं न भवति, शक्तित्वात्, वह्निशक्तिवत्। न च शक्तिरसिद्धा, तस्याः साधयिष्यमाणत्वात्। प्रमा विज्ञानसामग्रीजन्यत्वे सति तदरिक्तजन्या न भवति, अप्रमातिरिक्तत्वात्, पटादिवत्। न च ज्ञानाधिकरणत्वमुपाधिः, ईश्वरज्ञाने साध्याव्याप्तेः। यदुक्तम्—ज्ञानसामग्र्यजन्यत्वमुपाधिः, न चायमीश्वरज्ञाने, साध्येऽव्याप्तः, तस्य नित्यत्वे सुतरां ज्ञानसामग्र्यजन्यत्वसिद्धेरिति, तन्न, व्यतिरेके सोपाधिकतया साध्याव्यापकत्वात्। तथाहि—यज्ज्ञानसामग्रीजन्यं तज्ज्ञानसामग्रीजन्यत्वे सत्यतिरिक्तजन्यमप्रमाणवदिति व्यतिरेकिव्याप्तावप्रमात्वस्यैवोपाधित्वात्। यदुक्तम्—अनीश्वरप्रमा विज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वाद् घटवत्। ननु ज्ञानत्वाश्रयभूताज्ञानव्यक्तिः प्रमात्वाश्रयभूतायाः प्रमाव्यक्तेर्भिन्ना अभिन्ना वा? प्रथमे प्रत्यक्षज्ञानव्यक्त्या व्यभिचारः, प्रत्यक्षज्ञानव्यक्तेर्ज्ञानहेत्वतिरिक्तहेत्वधीनताभावात्। अन्त्ये च अनीश्वरज्ञानरूपाऽपि प्रमा न ज्ञानहेत्वतिरिक्तहेतुजन्येति बाध इति चेन्न, ज्ञानव्यक्तिप्रमाव्यक्त्योर्भेदाभावेऽपि विज्ञानत्वप्रमात्वयोर्भेदेन प्रमाया अपि द्रव्यत्वपृथिवीत्वघटत्वादीनां विभिन्नप्रयोजकप्रयोज्यत्वसाधन इव ज्ञानत्वप्रयोजकव्यतिरिक्तप्रयोजसाधने दोषाभावात्। यदि ज्ञानमात्रप्रयोजकप्रयोज्या प्रमापि स्यात्तदा प्रयोज्यज्ञानवृत्तिज्ञानत्ववत् प्रमात्वमप्रमायामपि स्यादिति बाधकतर्काच्चेति तन्न, प्रमा दोषव्यतिरिक्तहेत्वतिरिक्तजन्या न भवति ज्ञानत्वादप्रमावदिति सत्प्रतिपक्षसम्भवात्। विज्ञानसामग्रीमात्रादेव प्रमोत्पत्तिसम्भवे तदरिक्तगुणस्य दोषाभावस्य वा हेतुत्वकल्पने गौरवरूपबाधकतर्काच्च। न चैवं प्रमात्वस्य विज्ञानसामग्रीमात्रप्रयोज्यत्वे ज्ञानत्ववदप्रमावृत्तित्वं च स्यादिति वाच्यम्, प्रयोजकाभावेन तदप्रसक्तेः। दोषासहकृतज्ञानसामग्रीप्रयोज्यप्रमात्वस्य दोषसहकृततत्प्रयोज्यायामप्रमायामसम्भवात्। न च दोषस्याप्रमाहेतुत्वे तदभावस्य प्रमाहेतुत्वमन्वयव्यतिरेकसिद्धमेवेति वाच्यम्, विरोध्यप्रमाप्रतिबन्धकत्वेन तयोरन्यथासिद्धत्वेन कारणत्वासाधकत्वात्। यथा च पिङ्गलताया अग्निवदेव दाहेन सहान्वयव्यतिरेकयोः सतोरपि न दाहं प्रति कारणता, अनन्यथासिद्धयोरेव तयोः कारणत्वावेदकत्वात्। गुणेभ्यो दोषाणामभाव एव जायते न तु प्रामाण्योत्पत्तिः। दोषाभावाच्च न प्रामाण्योत्पत्तिः, किन्तु मिथ्यात्वसंशयत्वलक्षणस्याप्रामाण्यद्वयस्य निवृत्तिरेव जायते। अनुत्पत्तिलक्षणस्याप्रमाण्यस्यानाद्यभावतया दोषादुत्पत्त्यसम्भवेन तदभावेनाभावस्याप्यसम्भवेनोत्सर्गो ज्ञानसामग्रीप्रयुक्तत्वलक्षणोऽनपोदितस्तिष्ठति। तदुक्तं भट्टपादैः—

"तस्माद् गुणेभ्यो दोषाणामभावस्तदभावतः । अप्रामाण्यद्वयासत्त्वं तेनोत्सर्गोऽनपोदितः" (चो० सू० वा० ६५) ।

ननु यथा संस्कारस्यानुभवनाशकत्वेऽपि स्मृतिजनकत्वं भवति तथैव दोषाभावस्य विरोध्यप्रमानाशकत्वेऽपि प्रामाण्यजनकत्वमस्तु, इति चेन्न, तत्र स्मृतेः संस्कारातिरिक्तकारणान्तरानिरूपणे संस्कारस्योभयहेतुत्वेऽपि प्रकृते तद्वैषम्यात् । न च नित्यद्रव्येषु गुणनाशस्य गुणान्तरोत्पादनियतत्वेन तत्रापि संस्कारनाशात् स्मृतिरस्त्विति वाच्यम्, स्मृत्युत्पत्तिव्यतिरेकेण संस्कारनाशासम्भवात् । प्रकृते तु ज्ञानसामग्रीत एव प्रामाण्योत्पत्तिसम्भवे दोषाभावस्य तद्धेतुत्वकल्पनाया वैयर्थ्यात् । न च दोषाणामप्यप्रामाण्योत्पत्तौ गुणाभावेनान्यथासिद्धिरिति वाच्यम्, अभावस्य हेतुत्वानुपपत्त्या कारणान्तरानुपपत्त्या च दोषाणामेव तत्कारणत्वोपपत्तेः । न च सामग्र्यैक्ये ज्ञानप्रमालक्षणकार्यभेदानुपपत्तिरेव बाधिकेति वाच्यम्, एकस्मादग्निसंयोगात् पार्थिवपरमाणौ रूपरसगन्धस्पर्शादीनां बहूनामङ्गीकारात् ।

यत्तु प्रामाण्यप्रागभावस्य प्रामाण्योत्पत्तौ हेतुत्वे परतस्त्वापत्तिरिति तन्न, प्रागभावाभावे कार्याभावलक्षणव्यतिरेकाभावात्, विशेषस्याकारणत्वात् । प्रामाण्योत्पत्तिस्वतस्त्ववत् प्रामाण्यज्ञप्तेरपि स्वतस्त्वम्, विज्ञानज्ञापकसामग्रीत एव तज्ज्ञानसिद्धेः ।

ननु न घटसंवेदनस्य प्रामाण्यं घटसंवेदनेनैव ज्ञातुं शक्यते, घटसंवेदनस्य घटं प्रत्येव प्रत्यक्षत्वमिन्द्रियार्थसन्निकर्षोत्पन्नत्वात्, स्वप्रामाण्यपरिच्छित्तौ तु न तत्प्रमाणम्, तस्य बहिरिन्द्रियैरसन्निकर्षात् । मनः सन्निकर्षेण तत्परिच्छित्तिरपि न वक्तुं शक्या, प्रामाण्यस्य मनः सन्निकर्षसमये तत्सत्त्वार्थं तदाश्रयज्ञानस्यापि सत्त्वं वक्तव्यम् । तथा च न तदेव ज्ञानं स्वाश्रितप्रामाण्येन्द्रियसन्निकर्षादुत्पत्तुमर्हति, सिद्धस्वभावत्वात्, ज्ञानान्तरोत्पत्तौ तु परतः प्रामाण्यप्रसक्तिः । लिङ्गादिजन्यत्वाभावादनुमित्यादिशङ्कापि न भवति । तत्रापीदं प्रामाण्यमिति रूपेण, तत्तेन गृह्यते तत्प्रामाण्यमिति रूपेण वा ? आद्ये ज्ञाननिष्ठतया अग्रहणाद् गृहीतेऽपि तस्मिन् संशयप्रसङ्गः । द्वितीये स्वविशेषितप्रामाण्यग्रहणे स्वग्रहापत्तिः । किञ्च, तद्विज्ञानस्यैव प्रामाण्यं गृह्णाति, तत्प्राकट्यलक्षणस्य फलस्य वा ? भाट्टमतरीत्या प्राकट्यलिङ्गेन विज्ञानमनुमीयते । न चाप्रत्यक्षगतं प्रामाण्यं प्रत्यक्षं भवितुमर्हति । न च यथा वाय्वाकाशयोरप्रत्यक्षत्वेऽपि स्पर्शशब्दयोः प्रत्यक्षत्वम्, तथैवेहापि भविष्यतीति वाच्यम्, जातेरिव व्यक्तिप्रत्यक्षतानियतप्रत्यक्षत्वात् । फलस्य तु स्वप्रकाशतया बाह्येन्द्रियाविषयत्वेन तद्गतयथार्थविलक्षणप्रामाण्यस्यापि बाह्येन्द्रियप्रत्यक्षविषयत्वानुपपत्तेः । यदि तु तद्वेदनग्राहकमात्रग्राह्यत्वेन स्वतोग्राह्यत्वमुच्यते, तदापि ज्ञानं प्रमाणमप्रमाणं वेति संशयाभावप्रसङ्गः ।

ननु यथा ज्ञानग्राहकमात्रग्राह्यत्वेऽप्यर्थविशेषितस्य सांशयिकत्ववत् प्रामाण्यस्यापि सांशयिकत्वमुपपद्यते । यथा कुम्भज्ञानस्य कुम्भवत्तदम्भोऽपि विषयो भवति न वेति

ल्लेखः कृतः[१] । वसिष्ठेनाऽप्यनुकृतः[२] । मन्वादिस्मृतिकारा अपि स्मरन्ति गौतमम्[३] । गौतमधर्मसूत्रस्य भाष्यकारो हरिदत्तः ।

बौधायनगृह्ये पदकारादीनामित्थमुल्लेखः—"अथ दक्षिणतः प्राचीनावीतिनो वैशम्पायनाय फलिङ्गवे तित्तिरये उखायोख्यायात्रये आत्रेयाय पदकाराय कौडिन्याय वृत्तिकाराय कण्वाय बोधायनाय प्रवचनकारायापस्तम्बाय सूत्रकाराय सत्याषाढाय हिरण्यकेशाय वाजसनेयाय याज्ञवल्क्याय भरद्वाजाग्निवेश्यायाचार्येभ्य ऊर्ध्वरेतोभ्यो वानप्रस्थेभ्यो वंशस्थेभ्य एकपत्नीभ्यः कल्पयामिति[४]"। हिरण्यकेशीगृह्येऽपि (२।२०।१) "आत्रेयाय पदकाराय कौडिन्याय वृत्तिकाराय सूत्रकारेभ्यः सत्याषाढाय प्रवचनकर्तृभ्य आचार्येभ्यः"। तथैवाऽस्ति भारद्वाजगृह्ये—"बोधायनाय भरद्वाजाय सूत्रकारायापस्तम्बाय सर्वेभ्यः सूत्रकारेभ्यः।" प्रायेण ग्रन्थकाराः स्वमतं परापदेशेन कथयन्ति[५]। बौधायनधर्मसूत्रविषये गोविन्दाचार्यमतम्—"ननु द्विजातिषु स्वकर्मस्थेषु इति सूत्रयितव्ये किमिति सूत्रद्वयारम्भः। सत्यम्, अयं ह्याचार्यो नातीव ग्रन्थलाघवाभिप्रायो भवति"। बौधायनधर्मसूत्रेऽनेकग्रन्थानामुद्धरणानि सन्ति[६] । अन्यधर्मशास्त्रकाराणां मतसाम्यमपि विद्यते[७]ऽत्र । बौधायनधर्मसूत्रस्य प्राचीनभाष्यकारो भवस्वामीति ।

---

१. आप० २।१-३; वैखा० ४।३४, ३६ ।

२. गौ० ३।३१-३३, वसि० ९।१-३; गौ० ३।२६, वसि० ९।१०; गौ० १।४४, वसि० ३।३७; गौ० १।४०, वसि० ३।३८; गौ० १।४५-४६, वसि० ३।४८; गौ० १।२८, वसि० ३।४९; गौ० १४।५-७, वसि० ४।२४-२६ ।

३. मनु० ३।१६; याज्ञ० १।५, अपरार्कः ( पृ० १०७६ ); कुल्लूकः ( मनु० ११।१४८ ), मेधातिथिः ( मनु० २।६; ८।१२५ ); पराशरमा० १।१ पृ० ७ ।

४. बौधा० गृ० ३।९।६ ।

५. बौ० ध० सू० १।४।१५, २४; ३।५।८; ३।६।२० ।

६. छान्दोग्य० ( बौ० २।७।१५ ); गौतम० ( बौ० २।२।१७ ) ।

७. आप० १।१।२।३०, बौ० १।२।४०-४१; आप० १।२।६।८-९, बौ० १।२।३९; आप० १।५।१५।८. बौ० १।२।३१; आप० १।२।३१,१६, बौ० २।३।३९; २।१।४२; आप० १।९।२७।११, बौ० २।२।३४-३६; आप० २।६।१३।६, बौ० २।१०।६३; आप० २।९।२१।१०, बौ० २।७।२२-२३; आप० २।४।९।१३, बौ० २।६।३६; आप० २।९।२४।८ ।

वसि० १।१५, बौ० १।१।२८; वसि० ३।५।६, ११, २०, ५६, बौ० १।१।१०, ११, १२, ८; १।५।५८; वसि० ६।२०।२१, बौ० २।७।२३; वसि० ७।१७, बौ० २।२।१; वसि० ११।२७-२८, बौ० २।८।२१-२२; वसि० १६।३४, बौ० १।१०।३५; वसि० १७।७३, बौ० ४।१।१७; वसि० १७।८६, बौ०

त्रिंशत्प्रश्नविभक्तस्य कृष्णयजुर्वेयीयतैत्तिरीयशाखाया आपस्तम्बधर्मसूत्रस्य विलक्षणसम्बन्धः पूर्वमीमांसया सह दृश्यते। यथा—श्रुतिर्हि बलीयस्यानुमानिकादाचारात् ( आप० ध० सू० ) विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम् (पू० मी०)। विप्रतिषेधे श्रुतिलक्षणं बलीयः ( आप० ध० सू० १।११।३०।९ )। यत्र तु प्रीत्युपलब्धितः प्रवृत्तिर्न तत्र शास्त्रमस्ति ( आप० ); यस्मिन्प्रीतिः पुरुषस्य तस्य लिप्सार्थलक्षणाविभक्तत्वात् ( पूर्व० मी० १।३।४ )। 'अङ्गानां तु प्रधानैरव्यपदेश इति न्यायवित्समयः'' ( आप० २।४।८।१३ ) अत्र न्यायवित्पदेन मीमांसाया ग्रहणं स्पष्टं दृश्यते। अन्यत्रापि उभयोः सम्बन्धोऽतीवप्रत्यक्षः—अथापि नित्यानुवादमविधिमाहुर्न्यायविदः ( आप० २।६।१४।१३ ), अर्थवादो वा विधिविशेषत्वात्तस्मान्नित्यानुवादः ( पूर्वमी० ६।७।३० )। तस्यां क्रयशब्दः स्तुतिमात्रम्। धर्माद्धि सम्बन्धः ( आप० ध० २।६।१३।११-१२ )। क्रयस्य धर्ममात्रत्वम् ( पू० मी० ६।१।१५ )। विद्यां प्रत्यनध्यायः श्रूयते न कर्मयोगे मन्त्राणाम् ( आप० ध० सू० १।४।१२।९ ), विद्यां प्रति विधानाद्वा सर्वकालं प्रयोगः स्यात्कर्मार्थत्वात्प्रयोगस्य ( पू० मी० १२।३।१९ )। ''यथैव स्मृतिः 'धर्मे चार्थे च कामे च नातिचरितव्या' इति 'धर्मप्रजासम्पन्ने दारे नान्यां कुर्वीत' इति च एवमिदमपि स्मर्यत एव 'अन्यतरापायेऽन्यां कुर्वीत इति' ( शबरः ), 'धर्मप्रजासम्पन्ने दारे नान्यां कुर्वीत। अन्यतराभावे कार्या प्रागग्न्याधेयात्' ( आप० २।५।११।१२-१३ )। एतेन देशकालधर्मा व्याख्याता इत्येव आपस्तम्बवचनम् (२।६।१५।१) अवलम्ब्य तन्त्रवार्तिके लिखितम्—प्रतिदेशं व्यवस्थया। आपस्तम्बेन संहृत्य दुष्टादुष्टत्वमादृतम् ( पृ० १३८ )। 'यापि चापस्तम्बस्मृतिवचनात्तुल्यबलत्वाशङ्का भवेत्साऽपि ब्राह्मणः सुरां न पिबेदिति एतेन प्रत्यक्षश्रुतिविधिना निराकृतेति नैवं विप्राचारप्रामाण्यमाशङ्कितव्यम्'।

शङ्कराचार्येणाऽपि स्वस्मिन् भाष्ये उद्धृतमापस्तम्बवचनम्—( ब्रह्म सू० ४।२।१४ )—''परमात्मानमेव प्रकृत्यापास्तम्बः पठति 'तस्मात्कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकः स नित्यः''। आम्रे फलार्थे इत्यादि ह्यापस्तम्बस्मृतेर्वचः ( बृहदारण्यकभाष्यवार्ति० )। अन्यत्रापि आपस्तम्बवचनान्युपलब्धानि[1]। हरदत्तस्योज्वलवृत्तिटीका प्राप्यते, आपस्तम्बधर्मसूत्रोपरि। अन्येऽपि धर्मशास्त्रकारा उद्धरन्ति आपस्तम्बवचानानि।

---

१।५।१०२; वसि० २२।१०, बौ० १।१।३३; २।८।२१-२२; १।१०।३५; मनु० ३।१२५-१२६; ८।९८; वसि० स्मृ० ३।४१; बौ० १।५।२०; वसि० ३।५७, बौ० १।६।१९-२०।

१. याज्ञवल्क्यस्मृतिभाष्ये सुरेश्वरः विंशतिवारम् प्रस्तौति आपस्तम्बसूत्राणि। विश्वरूपमेधातिथ्यपरार्कादिभिरपि उद्धृतमापस्तम्बमतं यथास्थाने।

तैत्तिरीयशाखया सह सम्बद्धो हिरण्यकेशीधर्मसूत्रस्य साम्यमस्ति आपस्तम्बेन[1]। न केवलं धर्मसूत्रयोः साम्यमपि तु महादेवस्य हिरण्यकेशीधर्मसूत्रोपरि उज्ज्वला टीका त्वनुकृतिमात्रमस्ति हरदत्तस्योज्ज्वलवृत्तेः। वासिष्ठं बह्वृचैरेवेति कुमारिलमतेन वसिष्ठधर्मसूत्रस्य सम्बन्धः ऋग्वेदेन सह स्पष्टमस्ति, परञ्च अस्य प्रामाण्यं सर्वेषां चरणानां कृते मान्यं विद्यते। वसिष्ठधर्मसूत्रस्य १७ अध्याये २६ अध्याये चानेकेषामृग्वेदीयानां मन्त्राणामुल्लेखः प्राप्यते[2]। विष्णुधर्मसूत्रे मनुस्मृतौ च साक्षात्सम्बन्धो लब्धः[3]। तथैवास्ति श्रीमद्भगवद्गीतायाज्ञवल्क्यस्मृतिविषयेऽपि[4]। आर्यावर्त्तस्य परिभाषाऽपि विष्णुधर्मसूत्रेण कृता—

चातुर्वर्ण्यव्यवस्थापनं यस्मिन्देशे न विद्यते।
स म्लेच्छदेशो विज्ञेय आर्यावर्त्तस्ततः परः॥

आश्चर्यमेतद् यद् याज्ञवल्क्यस्मृत्या सह विष्णुधर्मसूत्रोक्तप्रत्यक्षसम्बन्धेऽपि विश्वरूपेण विष्णुधर्मसूत्रं न क्वाऽपि उद्धृतम्, एकमप्रत्यक्षोदाहरणं विहाय—स्मृत्यन्तरेभ्यश्च विष्णवादिभ्यो विशेषतश्चतुर्विधः पारिव्राज्यप्रकारभेदोऽभ्युप-

---

१. आप० १।७।२०—२१=हिरण्य० १।६।२१—२२; आप० १।९।२४=हिर०१।६।२३; आप० १।९।२५।४—१३; ९।२६।१—१०=हिर० १।७।२४; आप० १।९।२६।११—१४; १।९।२७=हिर० १।७।२५; आप० १।१०।२८=हिर० १।७।२६; आप०१।११।३१।१—१०=हिर० १।८।२९; आप० १।११।३१।११—२३=हिर० १।८।३०।

२. ऋ० १।२१।५; १।१२४।७; ५।४।१०; १।१६४; १०।८८; १०।९।

३. वि० २।३=मनु० २।१६, वि० ३।४।६=मनु० ७।६७—७०; वि० ३।७—१०=मनु० ७।११५; वि० ३।११—१५=मनु० ७।११६—११७; वि० ४।१—१३=मनु० ८।१३२—१३७; वि० ५।४—७=मनु० ९।२३७; वि० २०।१—२१=मनु० ६७—७३; वि० ५१।७—१०=मनु० ४।२०९—२१२; वि० ५९।२१—२५=मनु० ३।७०; वि० ६२।२२४=मनु० २।५९; वि० ७१।४८—५२=मनु० ४।८०; वि० ९६।१४—१७=मनु० ६।४६।

४. वि० २०।४८—४९, ५१—५२=गीता० २।१३,२२, २८; वि० ७२।७=गीता० १३।१४—१८; वि० ९६।९७—९८=गीता० १३।१—२; वि० ६।४१=याज्ञ० २।५३; वि० ८।३८=याज्ञ० २।७९; वि० ९।३३=याज्ञ० २।९७; वि० १७।१७=याज्ञ० २।१३८; वि० १७।२३=याज्ञ० २।१०; वि० ६२।९=याज्ञ० १।२१; वि० ६३।५१=याज्ञ० १।११७; वि० ३।७२—७४=याज्ञ० २।१—४; वि० ३।८२=याज्ञ० १।३१८—२०; वि० ५।६५—६९=याज्ञ० २।२१७—२१०; वि० ५।७३=याज्ञ० २।२२१; वि० ४५।३—१२=याज्ञ० ३।२०९—२११; वि० ६०।२४=याज्ञ० १।१७; वि० ९६।५५—७९=याज्ञ० ३।८४—९०; वि० ९६।८०—८८=याज्ञ० ३।१००—१०२; वि० ९६।८९—९२=याज्ञ० ३।९३—९९।

गन्तव्यः । मेधातिथिरुद्धरति विष्णुम्—अष्टौ विप्रसूतःषट्राजन्याश्चतुरो वैश्या द्विगुणं प्रसूतेति शूद्रायाः कालनियमः स्यात्संवत्सरमित्येके ( मनु० ९।७६ तुल० वसिष्ठ० १७।७८ ) । विष्णुरुद्धृतोऽस्ति मिताक्षरया त्रिंशत्वारम् (याज्ञ० ३।२३, २४, २७, २९-३० ) । मेधातिथिः—यथाह विष्णुः । दत्वैवापहृतं द्रव्यं स्वामिने व्रतमाचरेदिति विष्णुः—दत्वैवापहृतं द्रव्यं धनिकस्याप्युपायतः । प्रायश्चित्तं ततः कुर्यात् कल्मषस्यापनुत्तये ।। मिताक्षराकारेणाऽपि विष्णुवचनानि उद्धृतानि—

ओष्ठौ विलोमकौ स्पृष्ट्वा वासो विपरिधाय च

(याज्ञ० १।१९५ )

अप्रशस्तास्तु कानीनगूढोत्पन्नसहोढजाः ।
पौनर्भवश्च नैवैते पिण्डरिक्थांशभागिनः ।।

( याज्ञ० २।१३२ )

अपुत्रपौत्रसन्ताने दौहित्रा धनमाप्नुयुः ।
पूर्वेषां तु स्वधाकारे पौत्रा दौहित्रिका मताः ।।

( याज्ञ० २।१३५ )

आक्रुष्टस्ताडितो वापि धनैर्वा विप्रयोजितः ।
यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम् ।।
ज्ञातिमित्रकलत्रार्थं सुहृत्क्षेत्रार्थमेव च ।
यमुद्दिश्य त्यजेत् घातकम् ।।
उद्दिश्य कुपितो हत्वा तोषितः श्रावयेत्पुनः ।
तस्मिन् मृते न दोषोऽस्ति द्वयोरुच्छ्रावणे कृते ।।

( याज्ञ० ३।२२७ )

स्त्रीणामर्धं प्रदातव्यं वृद्धानां रोगिणां तथा ।
पादो बालेषु दातव्यः सर्वपापेष्वयं विधिः ।।

( याज्ञ० ३।२४३ )

गोघ्नस्य पञ्चगव्येन मासमेकं पलत्रयम् ।
प्रत्यहं स्यात्पराको वा चान्द्रायणमथापि वा ।।

( याज्ञ० ३।२६३ )

अपरार्कः स्मृतिचन्द्रिकाञ्चोद्धरतः विष्णुधर्मसूत्रवचनान्यनेकशः प्रस्तौति[१] । विष्णुधर्मसूत्रे वेदसंहितावचनान्युपलब्धान्यासन्[२] । विष्णुस्मृतौ याज्ञवल्क्यस्मृतौ च

१. याज्ञ० १।२, १०६, १०७; २।६०, १०२ ।

२. विष्णु० ६।१५।४५; ३०।३,३८;२८।२५; ८३।६; ८३।७; ३।७०।३८; ८३।७; ३।७०,-३०, ७३।१६; ८३।८; ३।७०।३०, ३८ ।

नरकस्य संख्या समानैव[1]। भट्टपादेन धर्मसूत्राणां परिगणने विष्णुधर्मसूत्रस्योल्लेखः परित्यक्तः। बृहद्विष्णोरप्युद्धरणानि प्राप्यन्ते[2]। लघुविष्णुरप्युद्धृतोऽपरार्केण[3]। नन्दनपण्डितस्य वैजयन्तीटीकाऽस्ति प्रशस्ता विष्णुधर्मसूत्रोपरि। सरस्वतीविलासे भारुचिव्याख्याऽप्युपलभ्यते। "यथाह भारुचिरेतद्विष्णुवचनव्याख्यानावसरे बीजशब्दः पिण्डवाचीति"। अत्र भारुचिर्भिन्नोदराणामिति निर्धारणे षष्ठी।

कुल्लूकभट्टो **हारीतस्य** वचनान्युद्धृतवान्—"अथाऽतो धर्मं व्याख्यास्यामः। श्रुतिप्रमाणको धर्मः। श्रुतिश्च द्विविधा, वैदिकी तान्त्रिकी च" ( मनु० २।१ )। अपरार्कोऽप्युद्धरत्येकवचनम्—अथातस्त्रिनयनोक्तस्य तुलापुरुषस्य कल्पं व्याख्यास्यामः ( याज्ञ० १।८३; १।१५४; ३।१३५ )। आचार्यपदेन 'एक' पदेन च हारीतस्योल्लेखाः प्राप्यन्ते—तन्मात्रच्छेदनमेके वाससाम्। न वा साधारणत्वात्। साधारणं हि वास इत्याचार्याः। तस्मात्सर्ववाससामुपघातापनोदनादेव शुद्धिः ( याज्ञ० १।१९५ विश्वरूपः )। आहारशुद्धौ सत्त्वशुद्धिरित्याचार्याः ( याज्ञ० १।१५४ अपरार्कः )। न ह्यशुद्धानामयं लोको न पर इत्याचार्याः ( मद० पा० पृ० ७०४ )। मतान्तरोल्लेखपूर्वकं तेषां खण्डनमपि करोति सः ( मद० पा० पृ० ६०७, ७०७; स्मृ० च० ३ पृ० ४२२; याज्ञ० २।१२७ अपरार्कः )। यानशयनान्यपरिहार्याण्येके मन्यन्ते। तन्न। वर्णविशेषात् शुक्लमलिनसंसर्गदर्शनात् पापसंसर्गयोगाच्च तस्मात् पृथक् शौचाच्छ्रेयांसः। हारीतेनोद्धृतानि सन्ति वेदाङ्गानि—वेदा अङ्गानि धर्मोध्यात्मं विज्ञानं स्थितिश्चेति षड्विधं श्रुतम् ( स्मृ० चं० ३ पृ० २९० )। हारीतो वर्णयति द्विविधाः स्त्रियः। ब्रह्मवादिन्यः सद्योवध्वश्च। तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे च भिक्षाचर्या (स्मृ० च० १- पृ० २४ )। अन्ये धर्मशास्त्रकारा अप्युल्लिखिताः सन्ति हारीतेन—

राजधर्मोऽयमित्येवं प्रसङ्गात् कथितो मया।
कात्यायनेन मनुना याज्ञवल्क्येन धीमता॥
नारदेन च संप्रोक्तं विस्तरादिदमेव हि।
तस्मान्मया विस्तरेण नोक्तमत्र नृपोत्तम॥
( आनन्दाश्रम० ७।२७०-७२ )

तन्त्रवार्त्तिके ( पृ० १३९ ) 'स्मार्तधर्माधिकारे हि **शङ्खलिखिताभ्यामुक्तम्**—आम्नायः स्मृतिधारकश्च'। महाभारते शान्तिपर्वणि **शङ्खलिखितयोरुल्लेखः**

३. याज्ञ० ३।२२२-२२४; विष्णु० ४३।१-२२।

४. मिता० (याज्ञ० ३।२४२; ३।२६१); स्मृ० चं० २ पृ० २९८; मिता०(याज्ञ०३।२६७)।

५. याज्ञ० ३।२५८।

प्राप्यते[१] । धर्मशास्त्रप्रयोजकेषु शङ्खलिखितयोः परिगणनं विद्यते[२] । युगपरिगणने पाराशरेणानयोर्मतं स्वीकृतम्[३] । विश्वरूपः ( याज्ञ० ३।२४८ ) उद्धरति—

समीक्ष्य निपुणं धर्ममृषिभ्यो मनुभाषितम् ।
आम्नायात्सम्यगुद्धृत्य शङ्खश्च लिखितस्तथा ।।

दायभागे (पृ० २१०) शङ्खस्य मतम्—"भार्याः कार्याः स्वजातीयाः श्रेयस्यः सर्वेषां स्युरिति पूर्वकल्पः । ततोऽनुकल्पश्चतस्रो ब्राह्मणस्यानुपूर्व्येण" । परञ्च, शङ्खस्मृतौ "ब्राह्मणी क्षत्रिया वैश्या ब्राह्मणस्य प्रकीर्तिता" । शङ्खलिखित-धर्मसूत्रस्यान्यधर्मसूत्रकाराणां मतैक्यं स्पष्टमस्ति[४] । स्मृतिधर्मशास्त्रकाराणां मध्ये शङ्खलिखितयोः स्थानम् महत्त्वपूर्णम्—

"स्मृतिधर्मशास्त्राणि तेषां प्रणेतारो मनुयमदक्षविष्णवङ्गिरोबृहस्पत्युशन-आपस्तम्बगौतमसंवर्तात्रिहारीतकात्यायनशङ्खलिखितपराशरव्यासशातातपप्रचेतो-याज्ञवल्क्यादयः" (चतुर्वर्ग० पृ० ५२७; वीर० परिभाषा० १ पृ० १६, स्मृचं०)।

याज्ञवल्क्यस्मृतौ शङ्खस्योल्लेखः[५] । शङ्खस्य मतं साङ्कर्ये महत्त्वपूर्णमस्ति—"ब्राह्मणेन क्षत्रियायामुत्पन्नो क्षत्रिय एव भवति" । ( मिता० याज्ञ० १।९१ ) ।

बौधायनधर्मसूत्रस्य व्याख्यायां गोविन्दस्वामिना **वैखानस**शास्त्रस्योल्लेखः कृतः—"वैखानसोऽपि वानप्रस्थ एव । संज्ञान्तरकरणं तु संव्यवहारार्थम् । विखनसा ऋषिणा प्रोक्तं वैखानसशास्त्रम् । तत्र हि बहवो वानप्रस्थस्योक्ता ग्रीष्मे पञ्चतपा इत्यादयः समुदाचाराः" ( बौ० ध० स० २।६।१७ ) । एवमेव वैखानसमतं वसिष्ठगौतममनुप्रभितिभिरुक्तम्[६] ।

---

१. महा० शां० अध्या० २३; १३०।२९; १३२।१५-१६ ।

२. याज्ञ० १।५ ।

३. पाराशर० १।२४ ।

४. नाब्राह्मणोऽतिथिर्ब्राह्मणस्य, वीर०, आह्निक पृ० ४५२; गौ० ध० सू० ५।३९-४२ । दन्तवद्दन्तलग्नेषु, अपरार्कः याज्ञ० १।१९५; गौ० ध० सू० १।४१-४३; न तिष्ठन्त प्रणतो नाङ्गुलिभिः, चतुर्वर्ग० ३।१ पृ० ९७७; गौ० ध० सू० १।५।१५। परश्चार्यावर्त्त-सीमानिर्धारणे मतभेदोऽपि विद्यते—देश आर्यो गुणवान्...प्राक् सिन्धुसौवीराद्दक्षिणेन हिमवन्तः पश्चात्कम्पिल्या उदक्पारियात्रादनवद्यं ब्रह्मवर्चसम् । वीर० परिभाष० पृ० ५७ ।

५. 'षष्ठेष्टमे वा सीमन्तः' ( शङ्खः ) चतुर्वर्ग० ३।२ पृ० ७२४—याज्ञ. १।११; चूडाकर्म यथाकुलम् ( शङ्खः ) चतुर्वर्ग० ३।२ पृ० ७४३—याज्ञ० १।१२ दारानाहरे-त्सदृशानसमानार्षेयानसम्बन्धानासप्तमपञ्चमात् पितृमातृबन्धुभ्यः ( शङ्खः ) आप० ध० सू० २।५।११ अत्र उज्ज्वला—याज्ञ. १।५३ ।

६. बि० ध० सू० ९।१०; गौ० ध० सू० ३।२६; मनु० ६।२१ ।

विशेषपद्धतौ अत्रिस्मृतेः विवरणं प्राप्यते। भाष्यपद्धतौ तेनोक्तम्—अचीर्णप्रायश्चित्तानां यमविषयनरकयातनानिश्च (?) पतितानां यदि कदाचिन्मानुष्यं भवति तदैतच्चिह्नाङ्कितशरीरा जायन्ते। तद्यथा। अनृतवादी खली ब्रह्महा कुष्ठी। रहस्यव्याख्यायां तेनावैदिकसमाजेन सह सम्बन्धविषये व्यवस्थोपस्थापिता—

"अथातो रहस्यं व्याख्यास्यामः। नटनर्त्तकगायनगान्धर्विकश्वपादकारुकवीशोत्कटवीणाशास्त्रशकयवनकाम्बोजबाह्लीकखशद्रविडवङ्गपारशबील्वातदीनां(?) भुक्त्वा प्रतिगृह्य च स्त्रीगमने सहभोजने रहस्ये रहस्यातिप्रकाशे प्रकाश्यानि चरेत्"।

एवमेव स्पर्शास्पर्शविषयेऽपि तेषां विशेषव्यवस्था—

देवयात्राविवाहेषु यज्ञप्रकरणे च।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते॥ (पृ० ३३)

क्षेत्रगतवैशिष्टयनिरूपणे ब्राह्मणास्यापूज्यत्वमपि तेन प्रतिपादितम्—

मागधो माधुरश्चैव कापटः कीटकानुजौ।
पञ्च विप्रा न पूज्यन्ते बृहस्पतिसमा यदि॥ (पृ ४५)

विश्वरूपेण याज्ञवल्क्यस्मृतिव्याख्याने (३।२५७) यदत्रिवचनमुद्धृतं तत्तु प्राप्तात्रिस्मृतावद्य न प्राप्यते—

भुक्त्वा तु प्रतिलोमानां सूतादीनामकामतः।
प्राजापत्यं चरेत्कृच्छ्रं त्रिरात्रं त्वाहृताशनः॥
चण्डालवर्जिते चान्ने स्पृष्ट्वा चैनं विशेषतः।
भुक्त्वा कृच्छ्रमविज्ञाते ज्ञात्वा चान्द्रायणं चरेत्॥

महाभारतेऽपि अत्रेरुद्धरणमस्ति[1]।

**उशना** नीतिकाररूपेण प्रायशः सर्वत्रोद्धृतोऽस्ति। शान्तिर्वपणि विस्तरेण तेषां मतमुद्धृत्य पक्षस्थापनं कृतम्[2]—

श्लोकौ चोशनसा गीतौ पुरा तात महर्षिणा।
तौ निबोध महाराज त्वमेकाग्रमना नृप॥
उद्यम्य शस्त्रमायान्तमपि वेदान्तगं रणे।
निगृह्णीयात्स्वधर्मेण धर्मापेक्षी नराधिपः॥

विनश्यमानं धर्मं हि योऽभिरक्षेत्स धर्मवित्।
न तेन स धर्महा स्यान्मन्युस्तं मन्युमृच्छति॥ (५६।२८-३०)

१. अनुशासनपर्व ६५।१; वनपर्व २००।२८।
२. सभापर्व ५५।१४; ६२।११-१२; अनुशासनपर्व ३९।८-९।

भगवानुशना चाह श्लोकमत्र विशाम्पते ।
तदिहैकमना राजन् गदतस्तं निबोध मे ॥
द्वाविमौ ग्रसते भूमिः सर्पो विलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ (५७।२-३)

श्लोकश्चायं पुरा गीतो भार्गवेण महात्मना ।
आख्याते रामचरिते नृपतिं प्रति भारत ॥
राजानं प्रथमं विन्देत् ततो भार्यां ततो धनम् ।
राजन्यसति लोकस्य कुतो भार्या कुतो धनम् ॥ (५७।४०-४१)

निश्चयः स्वार्थशास्त्रेषु विश्वासश्चासुखोदयः ।
उशना चैव गाथे द्वे प्रह्लादायाब्रवीत्पुरा ॥ (१३९।७०)

नीतिप्रकाशिकायां शुक्रो राजशास्त्रप्रणेतृरूपेण वर्णितोऽस्ति[१] । विश्वरूपः (याज्ञ० १।३०७), मेधातिथिः, कुल्लूकभट्टश्च (मनु० ७।१५१), इमे सर्वे शुक्रमतस्योद्धरणेन विश्लेषणं चक्रुः । ताण्डचमहाब्राह्मणे (७।५।२०) काव्यौशनस उल्लेखेन शुक्रस्य प्राचीनता स्पष्टास्ति । अत्रिमतविपरीतेन शुक्रेण "ब्राह्मणेन क्षत्रियायां जातो ब्राह्मण एव सः" इति मतं प्रतिपादितम । याज्ञवल्क्यस्मृतिवचनमिव ( १।३ ) उशनससोऽपि "चतुर्दशविद्यास्थानानि पुनः षडङ्गाश्चत्वारो वेदा मीमांसा न्याय एव च । धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश" इति वचनम् । 'एके' इति पदेन तेषां मतस्योल्लेखो यत्र तत्र विद्यते – दशरात्रं मातापितृभ्यः सूतकं मातुरित्येके ( गौ० ध० सू० १४।१४ ) इति हरदत्तः । निःसंशयमेतद् यत् शुक्रनीतिः औशनसधर्मशास्त्रतो भिन्नेति । ऋणविषये उशनो मतं महत्त्वपूर्णमस्ति—

दण्डो वा दण्डशेषो वा शुल्कं तच्छेषमेव वा ।
न दातव्यं तु पुत्रेण यच्च न व्यावहारिकम् ॥
(मिता०, अपरार्कः, याज्ञ० २।४७)

आपस्तम्बधर्मसूत्रतः **कण्वकाण्वयोः** सूचना प्राप्यते । श्राद्धविषये आह्निकविषये च कण्वस्य मतमुद्धृतम् – अध्वरे वेदेतिहासपुराणानीति ध्यायन् ब्राह्मेण

---

१. ब्रह्मा महेश्वरः स्कन्दश्चेन्द्रः प्राचेतसो मनुः ।
बृहस्पतिश्च शुक्रश्च भारद्वाजो महातपाः ॥
वेदव्यासश्च भगवान् तथा गौरशिरा मुनिः ।
एते हि राजशास्त्राणां प्रणेतारः परन्तपाः ॥
लक्षाध्यायाञ्जगौ ब्रह्मा राजशास्त्रे महामतिः ।
पञ्चाशच्च सहस्राणि रुद्रः संक्षिप्य चाब्रवीत् ॥

तीर्थेनौष्ठयोः सलोमदेशमुन्मृजेत् ( स्मृ० चं० १ पृ० ९७ )। हरदत्तेनानेकस्थाने कण्ववचनमुद्धृतम्—

संवत्सरेण पतति पतितेन समाचरन्।
यानाशनासनैर्नित्यमित्याहुर्ब्रह्मवादिनः ॥
( गौ० ध० सू० २१।३; २३।३, ११ )

बौधायनेन ( बौ० ध० सू० १।२।२० ) कश्यपवचनं प्रयुक्तं यत्कात्यायनेनापि ( स्मृ० चं० १ पृ० ८७ ) स्वीकृतम्—

क्रीता द्रव्येण या नारी सा न पत्नी विधीयते।
सा न दैवे न सा पित्र्ये दासी तां कश्यपोऽब्रवीत् ॥

वनपर्वणि ( २९।३५-४० ) कश्यपमतं प्राप्यते। विश्वरूपेण कश्यपवचनं प्रमाणत्वेनोद्धृतम्[1]—चण्डालश्वपाकपुल्कसादिसंकरे सव्यवधाने षण्मासान् गोमूत्रयावकाः पञ्चाहकालं पातव्याः। एवं प्रतिमामवृद्ध्या वृद्धिरा परिवृत्तेः सूर्यस्य ( याज्ञ० ३।२५७ )।

गोवधविषये कश्यपस्य मतं महत्त्वपूर्णम्—गां हत्वा तच्चर्मणा परिवृतो मासं गोष्ठेशयस्त्रिषवणस्नायी नित्यं पञ्चगव्याहारः ( हरदत्तः, गौ० २२।१८ )। अन्यत्र हरदत्तोऽन्ये च धर्मशास्त्रकाराः कश्यपकाश्यपवचनान्युद्धृतवन्तः[2]।

वृद्धगार्ग्यवचनस्योद्धरणावसरे विश्वरूपेण ( याज्ञ० १।४-५ ) गार्ग्यवृद्धगार्ग्यवचनमुद्धृतम्—पतिताः स्त्रियस्त्याज्या भर्तृवधप्रतिज्ञायां च[3]। **च्यवनस्य** मतं धर्मशास्त्रकारैरुद्धृतम्[4]। विश्वरूपेण याज्ञवल्क्यस्य ( १।४-५ ) व्याख्यायां

---

१. प्रायश्चित्तमकामावाप्तौ कामकृतेप्येके। ...ब्राह्मणेभ्यो निवेदयित्वा सशिखं वपनं कृत्वा प्राजापत्यं कृच्छ्रमाचरेत्। चीर्णान्ते धेनुं तिलधेनुं दद्यात्।...तेन चर्मणा प्रावृतो मासं गोष्ठे वसेत्। विश्वरूपः ( याज्ञवल्क्य० ३।२६२ )।
बालानामदन्तजातानां त्रिरात्रेण शुद्धिः, मिता० याज्ञ० ३।२३।

२. लशुनपलाण्डुगृञ्जनकुक्कुटभक्षणे मेदःशुक्रपानेऽयाज्ययाजनेऽभोज्यभोजनेऽभक्ष्यभक्षणेऽगम्यागमने चैवं प्रायश्चित्तं ब्राह्मणेभ्यो निवेद्य षड्रात्रोपोषितश्चीर्णान्ते प्राच्यामुदीच्यां दिशि गत्वा यत्र ग्राम्यपशूनां शब्दो न श्रूयते तस्मिन् देशोऽग्निं प्रज्वाल्य ब्रह्मासनमास्तीर्य तत्प्रणीतेन विधिना पुनः संस्कारमर्हति ( हरदत्तः, गौ० २३।२६ ); हारलता, अपरार्कः, याज्ञ० १।६४; ३।२६५; १।२२२-५; ३।२५१, २८८, २९०, २९२; स्मृ० चं० १ पृ० १; सरस्वतीविलासः पृ० १३; पराशर० १ अध्यायः।

३. मिता०, याज्ञ० १।७२; १।९५; ३।३२६; अपरार्कः पृ० १२४, १९०, ३६८, ३२६, ५४४; नित्याचारप्रदीपः पृ० २०।

४. मिता०, याज्ञ० ३।३०; अपरार्कः, याज्ञ० ३।२६४-२६५।

वृद्धयाज्ञवल्क्यस्य वचनस्योद्धरणं दत्तम्, यत्र **जातुकर्णस्य** संकेतः स्पष्टतया प्राप्यते—

भूयांसो धर्मवक्तार उत्पन्ना भाविनस्तथा।
निधानं सर्वधर्माणां वेद एव हि शाश्वतः॥
नारदः पुलहो गार्ग्यः पुलस्त्यः शौनकः क्रतुः।
बौधायनो जातुकर्णो विश्वामित्रः पितामहः॥

स्मृतिचन्द्रिकायामुपस्मृतिरूपेण जातुकर्णस्मृतेः स्मरणमस्ति। हरदत्तादयोऽपि जातुकर्णवचनानामुद्धरणानि दत्तवन्तः।

याज्ञवल्क्यस्मृतिटीकायां मिताक्षराकारेण **देवलोक्त**वचनानि-"शूद्रधर्मो द्विजातिशुश्रूषा पापवर्जनं कलत्रादिपोषणं कर्षणपशुपालनभारोद्वहनपण्यव्यवहार-चित्रकर्मनृत्यगीतवेणुवीणामुरजमृदङ्गवादनादीनि" इत्यादि रूपेणोद्धृतानि। अन्यत्र च—"यथा हि देवलः। द्विविधो गृहस्थो यायावरः शालीनश्च। तयोर्यायावरः प्रवरः याजनाध्यापनप्रतिग्रहरिक्थसंचयवर्जनात्। षट्कर्माधिष्ठितः प्रेष्यचतुष्पदगृहग्रामधनधान्ययुक्तो लोकानुवर्त्ती शालीन इति"[1] पतिशुश्रूषा सहधर्मचर्या तत्पूज्यमानपूजनम् (अपरार्कः, याज्ञ० ३।५८)। महाभारतेऽपि देवलस्योल्लेखो विद्यते—

त्रीणि ज्योतींषि पुरुष इति वै देवलोऽब्रवीत्।
अपत्यं कर्म विद्या च यतः सृष्टाः प्रजास्ततः॥ (सभा०-७२।५)

**पैठीनसि**वचनानि प्राप्यन्ते धर्मशास्त्रटीकासु[2]। अपरार्केण प्रस्तुतवचनम्-"परिषद्गामि वा श्रोत्रियद्रव्यं न राजगामि। न हार्यं राज्ञा देवतागणसंस्थितम् न विक्षेपोपनिधिक्रियाक्रमागतं न बालस्त्रीधनानि। एवं ह्याह। न हार्यं स्त्रीधनं राज्ञा तथा बालधनानि च। नार्याः षडागमं वित्तं बालानां पैतृकं धनम्"।

**बुध**वचनानि सामान्यतः निबन्धकारा उद्धरन्ति[3]- अथातो बुधधर्मशास्त्रं व्याख्यास्यामः (हेमाद्रिः, परि० का० पृ० ३०९)। महाभारते **बृहस्पते**-रुल्लेखो बाहुल्येन प्राप्यते[4]। कामसूत्रे (५-७) बृहस्पतेः स्मरणमित्थम्—प्रजा

१. मिता०, याज्ञ० १।१२८; स्मृ० चं० १ पृ० ६३।

२. मिता०, याज्ञ० १।५३; ३।१७; स्मृ० चं० २ पृ० ११२, २६३; अपरार्कः पृ० २३९, ७४४।

३. अपरार्कः, याज्ञ० १।४-५; परिभाषा० पृ० १६; हेमाद्रिः, चतु० (दानखण्डम्) पृ० ५२७।

४. शान्ति० २३।१५; ५६।३८-३९; ५७।३, ६-७; १०७।१२; अनुशासन० ५८।१३-१४; ६९।२३-२४; ३९।१०-११; वन० १५०।२९, सभा० ५०।९; ५५।६; ७३।७-८; उद्योग० ३३।७१-७२; ५५।६६।

पतिः प्रजाः सृष्ट्वा तासां स्थितिनिबन्धनं त्रिवर्गस्य साधनमध्यायानां शतसहस्रेणाग्रे प्रोवाच। तस्यैकदेशिकं मनुः स्वायम्भुवो धर्माधिकारिकं पृथक् चकार"। नीतिवाक्यामृतस्य प्रथमवचनस्य टीकायां बृहस्पतेरुल्लेखः—बृहस्पतिनीतय इवादेवमातृकाः। याज्ञवल्क्यस्मृतिटीकाकारा बाहुल्येन बृहस्पतेरुल्लेखाः कृताः[1]—

"तथा च बृहस्पतिः 'चोरापहृतन्तु सर्वेभ्योन्विष्य...' (विश्वरूपः याज्ञ० २।३८); तथा च बृहस्पतिः पादोपचयात् क्रमेणेतरेषाम् (विश्व० याज्ञ० २।३९); बृहस्पतिश्च धनस्त्रीहारिपुत्राणां पूर्वाभावे यथोत्तरमाधमर्ण्यं तदभावे क्रमशोन्येषां रिक्थभाजाम् (विश्व० याज्ञ० २।४७); तथा च बृहस्पतिः उपस्थाप्य विपत्तावुपस्थाप्यस्य पुनः प्रतिभूर्दाप्य इति" (विश्व० याज्ञ० २।५५)।

**भरद्वाजो भारद्वाजश्च** धर्मशास्त्रकाररूपेणोद्धृतौ स्तः। विश्वरूपानुसारेण (याज्ञ० १।१५) भारद्वाजमतं म्लेच्छभाषाध्ययनविषये—"न म्लेच्छभाषां शिक्षेत। म्लेच्छो ह वा एष यदपशब्द इति विज्ञायते। तस्माच्छिष्यमुपनीय साधुशब्दान् शिक्षयेत् सन्ध्योपसनाग्नीन्धनानि"। भरद्वाजवचनमप्युद्धृतम्[2] (याज्ञ० १।१८५, २३६; अपरार्कः पृ० ११५५)। स्पष्टं यद् धर्मशास्त्रार्थशास्त्रविषयेऽनयोर्मतानि समानरूपेण प्राप्यन्ते (यशस्तिलक० ४ पृ० १००)। पराशरमाधवीये (३ पृ० २३१) सरस्वती विलासे च (पृ० ३१४) इत्थमेव निर्वचनम्। **शातातपो** याज्ञवल्क्यपाराशारानुसारेण धर्मप्रवक्ता अस्ति। विश्वरूपहरदत्तापरार्कैः शातातपवचानान्युद्धृतानि[3]। **सुमन्तो**ऽपि धर्मसूत्रकाररूपेणोद्धृतः[4]।

स्मृतिशब्दस्य प्रयोगोऽर्थद्वये लभ्यते। प्रथमपक्षे श्रौतगृह्यधर्मसूत्रेभ्य आरभ्य महाकाव्यपर्यन्तं ये स्मृतिग्रन्थास्ते स्मृतिशब्दवाच्याः। द्वितीयपक्षे—"श्रुतिस्तु वेदविज्ञेयो धर्मशात्रं तु वै स्मृतिः" (मनु० २।१०)। तैत्तिरीयारण्यकादारभ्य स्मृतिशब्दस्य प्रयोगो दृश्यते[5]—"स्मृतेर्वा स्याद् ब्राह्मणानाम्" (पू० मी० सू० १२।४।४२); "स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् (वेदान्त० २।१।१)। वेदान्तसूत्रेषु (२।३।४७; ३।१।१४; ४।२।१४) स्मृतिपदेन मनुस्मृतिवचनानीव महाभारतवचनान्यपि गृह्यन्ते। गौतमेनोद्घोषिता धर्मशास्त्रकाराः—"अत्र गौतमः। स्मृतिधर्मशास्त्राणि तेषां प्रणेतारो मनुविष्णु-

---

१. विश्वरूपः, याज्ञ० २।१३८; ३।२६५; हरदत्तः, गौतम० २२।१८।

२. कौटल्य० १२।१; शान्ति० ६७।११; १४० अध्यायः; ५।८।३।

३. याज्ञ० १।४-५; ३।२३६; गौ० ध० सू० २२।१८; हरिवंश० २।३०; हेमाद्रि०३।१।८०।

४. विश्वरूपः, याज्ञ० ३।२२९-३३६, २३७, २६२; मिता०, याज्ञ० २।२१; अपरार्कः, याज्ञ० १।५३, ६५; सरस्वतीविलासः पृ० ३२२, २२३, ३२४।

५. तै० आर० १।२; गौ० ध० सू० १।२; बौ० ध० सू० १।४; आप० ध० सू० २।६।१५-२५।

दक्षाङ्गिरोऽत्रिबृहस्पत्युशनआपस्तम्बगौतमसंवर्त्तात्रेयकात्यायनशङ्खलिखितपराशर-व्यासशातातपप्रचेतोयाज्ञवल्क्यादयः ( ११।१९ )। याज्ञवल्क्य आह –

वक्तारो धर्मशास्त्रकाराणां मनुर्विष्णुर्यमोऽङ्गिराः।
वसिष्ठदक्षसंवर्तशातातपपराशराः॥

आपस्तम्बोशनोव्यासाः कात्यायनबृहस्पती।
गौतमः शङ्खलिखितौ हारीतोऽभिरहं तथा॥ ( याज्ञ० १।४-५ )

वीरमित्रोदये प्रयोगपारिजातवचनम्––

नारदः पुलहो गार्ग्यः पुलस्त्यः शौनकः क्रतुः।
बौधायनो जातुकर्णो विश्वामित्रः पितामहः॥
जाबालिर्नाचिकेतश्च स्कन्दो लौगाक्षिकश्यपौ।
व्यासः सनत्कुमारश्च शन्तनुर्जनकस्तथा॥
व्याघ्रः कात्यायनश्चैव जातुकर्णः कपिञ्जलः।
बौधायनश्च काणादो विश्वामित्रस्तचैव च।
पैठीनसिर्गोभिलश्चेत्युपस्मृतिविधायकाः॥

अपरार्कश्च—"ताश्च मनुविष्णुयमदक्षाङ्गिरोऽत्रिबृहस्पत्युशनापस्तम्बवसिष्ठकात्यायनपराशरव्यासशङ्खलिखितसंवर्तगौतमशातातपहारीतयाज्ञवल्क्यप्रचेतोबुधदेवलसोमजमदग्निविश्वामित्रप्रजापतिनारदपैठीनसिपितामहबौधायनछागलेयजाबालिच्यवनमरीचिकश्यपा इति षट्त्रिंशदेव स्मृत्यन्तरे पठिताः ( पृ० ७ )।

**मनुस्मृतियाज्ञवल्क्यस्मृति**प्रामाण्यं सर्वैः स्वीकृतम्। मनोरनुसरणं वेदैराज्ञातम्– मा नः पथः पित्र्यान्मानवादधि दूरं नैष्ट परावतः ( ऋ० ८।३०।३ )। मनोर्वचनं भेषजमिति मन्तव्यमिति तैत्तिरीयसंहितायां ताण्ड्यमहाब्राह्मणे च संगदितम्– "यद्वै किं च मनुरवदत्तद्भेषजम्" ( तै० सं० २।२।१०।२ ); मनुर्वै यत्किञ्चावदत्तद्भेषजं भेषजतायै ( ताण्ड्य० २३।१६।१७ )। मनुः सृष्टेरादिपुरुषरूपेण आद्रियते—मानव्यो हि प्रजाः। दायादविषये तैत्तिरीयसंहितामैतरेयब्राह्मणं शतपथब्राह्मणञ्चाधृत्य निरुक्तविश्लेषणमित्थम्—"अविशेषेण मिथुनाः पुत्रा दायादा इति। तदेतदृक्श्लोकाभ्यामुक्तम्। अङ्गादङ्गात्संभवसि हृदयादधिजायसे। आत्मा वै पुत्रनामासि स जीव शरदः शतम्॥ इति। अविशेषेण पुत्राणां दायो भवति धर्मतः। मिथुनानां विसर्गादौ मनुः स्वायम्भुवोऽब्रवीत्। गौतमवसिष्ठादयो मनुमनुसरन्ति धर्मज्ञरूपेण[1]—

ऋषीनुवाच तान्सर्वानदृश्यः पुरुषोत्तमः।
कृतं शतसहस्रं हि श्लोकानामिदमुत्तमम॥

१. आप० ध०सू० २।७।१६,१। शान्ति० २१।१२; ५७।४३; ३३६।३८-४५।

लोकतन्त्रस्य कृत्स्नस्य यस्माद्धर्मः प्रवर्तते।
... तस्मात्प्रवक्ष्यते धर्मान् मनुः स्वायम्भुवः स्वयम् ॥
... स्वायम्भुवेषु धर्मेषु शास्त्रे चौशनसे कृते।
बृहस्पतिमते चैव लोकेषु प्रतिचारिते ॥

मनुर्ब्रह्मणः परम्परामनुसरति[1]—तत्रायमाद्यः श्लोकः। आसीदिदं तमोभूतं न प्राज्ञायत किञ्चन। ततः स्वयम्भूर्भगवान् प्रादुरासीच्चतुर्मुखः। नारदश्च स्मरति। शतसाहस्रो ग्रन्थः प्रजापतिना कृतः स मन्वादिभिः क्रमेण संक्षिप्त इति मेधातिथिः ( मनु० १।५८ )।" भार्गवीया नारदीया च बार्हस्पत्याङ्गिरस्यपि। स्वायम्भुवस्य शास्त्रस्य चतस्रः संहिता मताः ( चतुर्वर्ग०, दान० पृ० ५२८; संस्कारमयूखः पृ० २ )। अपरार्कस्तथैव—"येषु पापेषु दिव्यानि प्रतिशुद्धानि यत्नतः। कारयेत्सज्जनैस्तानि नाभिशस्तं त्यजेन्मनुः" ॥

मानवगृह्यसूत्रेण सह मनुस्मृतेरैक्यप्रतिपादने परस्पराविरुद्धमतप्रतिपादकवचनान्यवश्यमवधेयानि[2]। धर्मशास्त्रार्थशास्त्रकारयोर्मनोरैक्यमस्ति न वेत्यपि विवादविषयः[3]। अश्रौषीस्त्वं राजधर्मान्यथा वै मनुरब्रवीत् ( वनपर्व ३५।२१ ); वेदं षडङ्गं वेदाहमर्थविद्यां च मानवीम् ( द्रोण० ७।१ )। धर्मशास्त्रार्थशास्त्रभेदकारैर्लेखकैर्मनोः कौटल्यस्य च साम्यमपि विचारणीयम्—अलब्धलाभार्था लब्धपरिरक्षिणी रक्षितविवर्धनी वृद्धस्य तीर्थेषु प्रतिपादनी च ( कौटल्य० १।४ ); अलब्धमिच्छेद्दण्डेन लब्धं रक्षेदवेक्षया। रक्षितं वर्धयेद् बुध्या वृद्धं पात्रेषु निक्षिपेत् (मनु०७।१०१); तस्माल्लोकयात्रार्थी नित्यमुद्यतदण्डः स्यात् ( कौटल्य० १।४ ); नित्यमुद्यतदण्डः स्यात् ( मनु० ७।१६२ ); असम्भाष्ये देशे साक्षिभिश्च देशे सम्भाषते मिथः ( मनु० ८।५५ ); साहसमन्वयवत्प्रसभकर्म ( कौ० ३।१७ ); स्यात्साहसं त्वन्वयवत् प्रसभं कर्म यत्कृतम् ( मनु० ८।३३२ )।

द्वादशाध्यायात्मके मनुस्मृतौ प्रतिपाद्यविषयाः—महर्षीणां धर्मविषये मनोः श्रूयतामित्युत्तरदानपर्यन्तश्लोकश्चतुष्टयेनैतस्य शास्त्रस्य प्रेक्षावत्प्रवृत्त्युपयुक्तानि विषयसम्बन्धप्रयोजनान्युक्तानि। तत्र धर्म एव विषयः। तेन सह वचनसन्दर्भरूपस्य मानवशास्त्रस्य प्रतिपाद्यप्रतिपादकलक्षणः सम्बन्धः। पौरुषेयत्वेऽपि

---

१. मनु० १।३२-३३ ५८, ५९-६०; २।७; ९।१५८; १०।७८; विश्वरूपः, याज्ञ० २।७३, ७४, ८३, ८५, ९६; १।१८७; २५२।

२. मानवगृह्यसूत्रवचनम् ( २।१२।१-२ ) विरुद्धमस्ति मनोर्वचनेन ( ३।१ )। इत्थमन्यत्रापि–मानवगृ० १।४।७–मनु० ४।९५; मान० सू० २०।१–मनु० २।३४; मान० सू० १।१२।१-२–मनु० ३।८४-८६।

३. शान्ति० २०।१२; ५७।४३; ५८।२।

मनुवाक्यानामविगीतमहाजनपरिग्रहाच्छ्रुत्युपग्रहाच्च वेदमूलकतया प्रामाण्यम्। स्वयं मनुनाऽप्युद्घोषितम्—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसंधन्ते स धर्मं वेद नेतरः॥ ( मनु० १२।१०६ )

बृहस्पतिरप्याह—वेदार्थोपनिबन्द्धत्वात् प्राधान्यं हि मनोः स्मृतम्। मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते॥ तावच्छास्त्राणि शोभन्ते तर्कव्याकरणानि च। धर्मार्थमोक्षोपदेष्टा मनुर्यावन्न दृश्यते। महाभारतेऽप्युक्तम्—"पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम्। आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः"। स्पष्टं यत् सकलवेदार्थादिमननान्मनुं महर्षय इति व्युत्पादितम्। प्रथमाध्याये वर्णधर्मनिरूपणं जगदुत्पत्तिवर्णनान्तरमेव कृतमस्ति। देशकालनिर्वचनपुरस्सरं वर्णव्यवस्थायाः स्वरूपः प्राप्यते।

द्वितीयाध्याये धर्मस्य लक्षणं मूलं वर्णानुसारेण संस्काराणां विधानं ब्रह्मार्यावर्त्तादीनां सीमा सदाचाराणाञ्च व्यवस्था वर्णिताः सन्ति। तृतीयाध्याये ब्रह्मचर्यपालनपुरस्सरं विवाहदानश्राद्धतर्पणादिविधानानि विहितानि। चतुर्थाध्याये ब्रह्मचर्यग्रार्हस्थ्यकालौ विविच्य जीविकायापनमर्थसंग्रहं कर्मकर्त्तव्यता निषिद्धप्रतिषिद्धाचरणञ्च प्रतिपादितम्। मनुष्याणां कथं मृत्युर्भवति, इति प्रश्नोत्तरे पञ्चमाध्यायस्य संगुथनमस्ति। तत्र खाद्याखाद्यनिर्वचनमशौचं पातित्यं शुद्धिनिर्देशश्च प्रतिष्ठापितम्। अत्रैव च स्त्रीधर्मामृतपतिकाधर्माश्च वर्णिताः सन्ति। वानप्रस्थसंन्यासगृहस्थाश्रमाः षष्ठाध्यायस्य विषयाः। सप्तमोऽध्यायो दृष्टादृष्टार्थानुष्ठेयपरो राजधर्मपरकः। विपक्षमहीक्षिद्भ्यः प्रजानां रक्षणादवाप्तवृत्तिस्तासामेवेतरेतरविवादपीडापरिहारार्थम्, ऋणादानाद्यष्टादशविवादे विरुद्धार्थार्थिप्रत्यर्थिवाक्यजनितसंदेहहारी व्यवहारोऽष्टमेऽध्याये वर्णितः। स्त्रीपुंधर्माः नवमेऽध्याये। चतुर्णां वर्णानामाचाराः दशमेऽध्याये। दानप्रायश्चित्तादय एकादशाध्यायविषयाः। कर्मणां शुभाशुभफलप्राप्तिं परां जन्मान्तरप्रभवां परमार्थरूपां विद्यां मनुरब्रवीत् द्वादशेऽध्याये।

मनुस्मृतौ यत्र तत्रोद्धृतानि वेदशास्त्रवचनानि संकेतयन्ति मनुस्मृतिरचनाकालं मनुस्मृतेः परम्परां वा। मनुस्मृतौ त्रयो वेदाः स्मृताः। अथर्ववेदस्तु अथर्वाङ्गिरसी श्रुतिरिति कथिता[१]। आरण्यकस्योल्लेखो विद्यते[२]। वेदाङ्गविश्लेषणे षड्संख्याऽपि प्राप्यते[३]। धर्मशास्त्राणि धर्मशास्त्रकाराश्च स्पष्टतो विवेचिताः[४]।

१. ११।३३।
२. ४।१२३।
३. ३।१८५।
४. २।१०, १४; ४।९८; ३।२२३; १२।१११; ३।१६; ८।१४०; २।५०; ६।२१।

आख्यानेतिहासपुराणाखिलानां प्रामाण्यं स्वीकृतम्[1]। वेदान्ते प्रतिपादितम् ब्रह्मस्वरूपस्यैव विवरणं मनुस्मृतावपि प्राप्यते[2]। नास्तिकमतानुयायिनां विषये व्यवस्था स्पष्टतया प्रतिपादिता[3]। केचित्, अपरे, अन्ये इति शब्दैरन्ये शास्त्रकारा अपि संकेतिताः सन्ति[4]। आदिराजकृतं ह्येतन्मानवं सच्छास्त्रम्[5]। प्रामाण्ये प्राबल्यं चास्य धर्मे प्रोक्तं महर्षिभिः—"तावच्छास्त्राणि शोभन्ते तर्कव्याकरणानि च, धर्ममोक्षोपदेष्टा मनुर्यावन्न दृश्यते" (मन्वर्थमुक्तावल्यामुद्धृतं बृहस्पतिवाक्यम्)। "यत्पूर्वं मनुना प्रोक्तं धर्मशास्त्रमनुत्तमम्, न हि तत्समतिक्रम्य वचनं हितमात्मनः" (स्मृतिचन्द्रिकायामुद्धृतमङ्गिरो वाक्यम्)। धर्मशास्त्रकारैः स्वशास्त्रमानार्थ-ञ्चैवन्नाम कृतम्[6]।

'मैक्समूलरहॉप्किन्स' प्रभृति प्राच्यविद्याविशारदानां मते मनुस्मृतेर्रचना मौर्योत्तरशुङ्गशासनेऽभवदिति स्वीकर्त्तुमशक्यम्[7]। याज्ञवल्क्यस्मृतिव्याख्यायां विश्वरूपो (याज्ञ० ३।२६२) मनुस्मृतिवचनानि (मनु० ११।१०८-११५) अनेकशः प्रयुक्तवान्। वेदान्तसूत्रभाष्ये शङ्कराचार्येण मनुस्मृतिवचनानि बाहुल्ये-नोद्धृतानि[8]। 'मानवे च सर्वा प्रवृत्तिः कामहेतुक्येवेति' (मनु० २।४) मत्वा

१. ३।२३२।

२. ६।८३,९४।

३. ४।१६३।

४. ३।२६१; १०।७०; ९।३२।

५. मनोरादिराजत्वं महाभारते—शां० ६६।१७-२०; वा० पु० ५७।५५-५६; मनु० ७।३ भाष्यम्।

६. तै० सं० ३।१।९।४-५; ऐ० ब्रा० २२।१४; निरुक्ते ३।४।२; छा० उ० ८।१५; ना० स्मृ० १।१; भ० गी० ४।१; नी० वा० ७।२४; महा० भा० आ० ४१।३१; ७३।९; ७४।३९; १२०।३२-३६; वन० ३२।३९; ३५।२१; १८०।३४-३५; उ० ३३।६४; ३७।१; ३८।१; ४०।११; द्रो० ७।१; शां० २१।१२; ५६।२३-२५; ५७।४३-४५; ७८।३०; ८८।१६; १२१।१०-१२; १५२।१४, ३०; ३३५।३८-४६; अनु० ४४।१८, २३; ४७।३५; ६१।३४-३५; ६५।१-३; ६७।१९; ६८।३१; ८८।४; १०४।६४-६५; ११५।५२-५३; रामा० कि० १८।३१-३३; का० सू० अ० १; गौ० ध० सू० २१।७; व० ध० ३।२-३; बौ० ध० सू० २।३।२; ४।१।१४; ४।२।१६; आप० ध० सू० २।१४।११; २।१६।१; परा० स्मृ० १।१२; १।२१; १।२४; ४।१८; ७।३१, ३२; ९।२६; ९।५१; ११।१९; १२।२०, ३८; या० स्मृ० १।४।

७. डॉ० हरिहर नाथ त्रिपाठी, भारतीयविचारदर्शनम्, द्वितीयो भागः।

८. वेदान्तसूत्रम् १।३।२८, मनु० १।५, २१, वे० सू० ४।२।६, मनु० १।२७; वे० सू० ३।४।३८, मनु० २।८७; वे० सू० १।३।३६; मनु० १०।४, १२६; वे० सू० २।१।११, मनु० १२।९१, १०५-६।

शङ्कराचार्यो बृहदारण्यकोपनिषद्भाष्येऽनेकशो मनुवचननां प्रयोगं कृतवान्। स 'मनुव्यासप्रभृतयः शिष्टाः' इति प्रामाण्येन स्वीकरोति ( वे० सू० ३।१।१४ )। भट्टपादेनापि मनुस्मृतिः श्रेष्ठतमत्वेनाङ्गीकृता। धर्मविषये गौतमेनापि मनोः प्रामाण्यं स्वीकृतम्। मनुवचनम् ( ८।३८० ) मृच्छकटिके प्रयुक्तमादेशरूपेण-- अयं हि पातकी विप्रो न वध्यो मनुरब्रवीत्। राष्ट्रादस्मात्तु निर्वास्यो विभवैरक्षतैः सह ( ९।३९ )। "मन्वादिप्रणीतविधिविधानकर्मा" इत्यादि वचनानीतिहासे नृपैः प्रयुक्तानि[1]। शबरस्वामी मनुवचनमित्थं दत्तम्—उपदिष्टवन्तः मन्वादयः ( पूर्वमी० १।१।२ )। महाभारते मनोरुल्लेखस्तु सुविज्ञात एव[2]। स्मृतिकाराः, टीकाकाराः, निबन्धकाराश्च मनुमनुसरन्ति[3]।

मनुस्मृतौ परस्परं विरुद्धानि मतानि सन्तीति बूलर इत्यादि विदुषां यन्मतं तन्न समीचीनम्। वस्तुतस्तु मनुस्मृतेरध्ययने मनुस्मृतिप्रदिष्टा या अध्ययन-पद्धतिस्तस्या अवज्ञा, आधुनिकाध्ययनपद्धतिविश्लेषणपरम्पराया अनुसरणञ्चात्र कारणम्। एवमेव मनुस्मृतेरनेकानि संस्करणानि काले काले निर्मितानीति न सम्यक्। नात्रैष विचारविषयः। मनुस्मृतावप्युद्धृताः पुरुषाः कथाश्च प्रत्यक्षतो वेदैः सम्बद्धाः सन्ति[4]। अनुशासनपर्वणि स्पष्टतयोद्घोषितं यत् "मनुनाभिहितं शास्त्रं यच्चापि कुरुनन्दन" ( ४७।३५ )। तथा च शान्तिपर्वणि—

मनुना चैव राजेन्द्र गीतौ श्लोकौ महात्मना।
धर्मेषु स्वेषु कौरव्य हृदि तौ कर्त्तुमर्हसि॥

---

१. I. A. Vol. 8; P. 303. Gupta Inscriptions, P. 165, I.A. Vol. IV. P. 105।

२. आदिपर्व ४१।३१; उद्योग० ३३।६४; ४०।९-१०; ३८।१; अनुशासन० १०४।६४-६५; ४४।१८, २३; ६५।१, ३; ६७।१९; ६८।३१; ८०।४; ११५।५२-५३; शान्ति० २१।२; ७८।३१; ८०।१४-१५; ८८।१४-१६; १२१।१०-१५; १५२।१४।३०; २६६।५७; वन० ३२।३९।

३. बृहस्पति० "तावच्छास्त्राणि शोभन्ते तर्कव्याकरणानि च।
धर्मार्थमोक्षोपदेष्टा मनुर्यावन्न दृश्यते॥"

अपरार्कः, याज्ञ० २।२१, ९९; १।९, १२८-१३२; स्मृ० चं० व्य० पृ० २११; विवाद-रत्नाकरः पृ० १००; महाभाष्यम् ३ पृ० ५८।

४. आङ्गिरसः ( मनु० २।१५१-१५२ ), अगस्त्यः (मनु० ५।२२), वेननहुषसुदासपैजवन-निमिश्च ( मनु० ७।४१ ), पृथुकुबेरौ ( मनु० ७।४२ ), वसिष्ठः ( मनु० ७।११० ), वत्सः ( मनु० ८।११६ ), अक्षमा, सारङ्गिश्च ( मनु० ९।२३ ), दक्षः ( मनु० ९।१२८-१२९), अजीगर्तः (मनु० १०।१०५), वामदेवः ( मनुः १०।१०६ ), भरद्वाजः ( मनु० १०।१०७ ), विश्वामित्रः ( मनु० १०।१०५ ), पृथुः ( मनु० ९।४४ )।

अद्‌भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ।।
अयो हन्ति यदाऽश्यानमग्निना वारि हन्यते ।
ब्रह्म च क्षत्रियो द्वेष्टि तदा सीदन्ति ते त्रयः ।।
( शान्ति० ५६।२३-२५ )

विपुलैः प्रमाणैः 'प्राच्यविद्याविशारदानां' मतमसिद्धम्, यतो हि मनोरुद्धरणानि मौर्यकालादपिपूर्ववर्त्तिनी ।

मेधातिथिगोविन्दराजकुल्लूकभट्टाश्च प्रसिद्धाः मनुस्मृतिटीकाकाराः । अन्ये च टीकाकाराः सन्ति नारायणः, नन्दनः, रामचन्द्र, राघवानन्दश्चेत्यादयः । असहायस्यापि टीकाया उल्लेखः प्राप्यते । विवादरत्नाकरे उदयनस्य टीकायाः सङ्केतो लभ्यते । अत्रैव भागुरेरपि संकेतोऽस्ति । कुल्लूकभट्टेन ( मनु० ८।८१-१८४; ४।५० ) भोजदेवस्य धरणीधरस्य चोल्लेखः कृतः । धर्मप्रामाण्ये मनुस्मृतेः श्रेष्ठता सर्वैः स्वीकृता ।

शतपथब्राह्मणात् स्पष्टमेतद् यद् **याज्ञवल्क्यस्मृतेः** परम्परा शुक्लयजुर्वेदेन सम्बद्धा[1]—आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ( शत० १४।९।४।३३ ) । ब्राह्मणारण्यकोपनिषत्सु याज्ञवल्क्यस्य प्राप्यत उल्लेखः, दार्शनिकयोगशास्त्रप्रणेता च सः । याज्ञवल्क्यस्मृतावप्येतत्स्पष्टम्—

ज्ञेयं चारण्यकमहं यदादित्यादवाप्तवान् ।
योगशास्त्रं च मत्प्रोक्तं ज्ञेयं योगमभीप्सता ।। (३।११०)

मिताक्षरानुसारेण याज्ञवल्क्यस्य कश्चिच्छिष्यःप्रश्नोत्तररूपं याज्ञवल्क्यप्रणीतं धर्मशास्त्रं संक्षिप्य कथयामास । व्यवहारविषयकयाज्ञवल्क्यवचनानि गरुडपुराणेऽग्निपुराणे च बाहुल्येन प्राप्यन्ते । याज्ञवल्क्यस्मृतेः प्रामाण्यं सर्वथैवादरणीयम् ।

याज्ञवल्क्यस्मृतिरिव **पराशरस्मृतिरपि** प्राचीना ( याज्ञ० १।४ ) । गरुडपुराणे पराशरस्मृतिवचनान्युद्धृतानि ( १७ अध्याये ) । कौटल्योऽप्युद्धरति पराशरवचनम् । द्वादशात्मकेऽध्याये विभक्ता ५९२ श्लोके सम्पन्नेयं स्मृतिः पराशरमाधवीये व्याख्याता—"अत एवाचारकाण्डे व्यवहाराणामन्तर्भावमभिप्रेत्य पराशरः पृथग्व्यवहारकाण्डमकृत्वा क्षितिं धर्मेण पालयेदिति सूचनमात्रं व्यवहाराणां कृतवान्" ( पृ० ८ ) । पराशरस्योल्लेखः प्रारभ्यते ब्राह्मणग्रन्थेभ्यः[2] । यथा च निरुक्ते– पराशीर्णस्य वसिष्ठस्य जज्ञे ( निरुक्तः ६।३० ) । पाणिनौ च, पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ( ४।३।११० ) ।

१. विष्णुपु० ३।५; भागवतपुराणम् १२।६।६७-७४ ।
२. तै० आर० १।१।३।३७ ।

मनुमनुसरति **नारदस्मृतिः**। धर्मशास्त्रकाराणां मध्ये नारदस्याप्युल्लेखः। विश्वरूपमेधातिथिप्रभृतयष्टीकाकारा नारदवचनान्यादरेणोद्धरन्ति। नारदस्मृतौ वर्णितं व्यवहारं बाणभट्टो राजधर्म इत्यमन्यत्—नारदीयमिवावर्ण्यमानराजधर्मम् (पृ० ९१)। राजनीतिरत्नाकरे नारदवचनानि बाहुल्येनोद्धृतानि (पृ० ३, १३, ७९)। महाभारतेऽपि नारदवचनानि स्मृतेः प्राचीनत्वं द्योतयन्ति। **बृहस्पतिस्मृतिरपि** प्राचीनतामश्नुते, यतो हि धर्मशास्त्रकाररूपेण बृहस्पतेरुल्लेखः प्राप्यते याज्ञवल्क्यस्मृतौ (१।४-५)। इयं स्मृतिरपि मनुमनुसरति। व्यवहारविषये धनमूलहिंसामूलयोर्भेदौ बृहस्पतिना कृतौ—तदाह बृहस्पतिः। द्विपदो व्यवहारश्च धनहिंसासमुद्भवः। द्विसप्तार्थमूलश्च हिंसामूलश्चतुर्विधः। (व्यव० मातृका पृ० २२७; स्मृ० चं० व्य० पृ० ९); "पारुष्ये द्वे वधश्चैव परस्त्रीसंग्रहस्तथा, हिंसोद्भवानि चत्वारि पदान्याह बृहस्पतिः"। देशाचारविषयेऽपि बृहस्पतिवचनमस्ति महत्त्वपूर्णम्—

उदुह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः।
मध्यदेशे कर्मकराः शिल्पिनश्च गवाशिनः॥
मत्स्यादाश्च नराः पूर्वे व्यभिचाररताः स्त्रियः।
उत्तरे मद्यपा नार्यः स्पृश्या नृणां रजस्वलाः॥
(वीर० पृ० २९)

बृहस्पतिः व्यवहारस्य तुलनां यज्ञेन कृतवान्—

यज्ञे सम्पूज्यते विष्णुर्व्यवहारे महीपतिः।
जयी तु यजमानोऽत्र जितः पशुरुदाहृतः॥
पूर्वपक्षोत्तरावाद्यं प्रतिज्ञा च हविः स्मृता।
त्रयी शास्त्राणि सभ्यास्तु ऋत्विजो दक्षिणादने॥
(व्य० मा० पृ० २८४)

अन्यत्र धर्मस्य विश्लेषणेऽतीवविशिष्टोपमा प्रयुक्ता बृहस्पतिना—

विप्रो धर्मद्रुमस्यादिः स्कन्दशाखे महीपतिः।
सचिवाः पत्रपुष्पाणि फलं न्यायेन पालनम्॥
यशो वित्तं फलरसो भोगोपग्रहपूजनम्।
अजेयत्वं लोकपंक्तिः स्वर्गे स्थानं च शाश्वतम्॥
(वीर० पृ० १४)

बृहस्पतिकृता संकरस्य व्याख्याऽपि महत्त्वपूर्णा—

एकशय्यासनं पंक्तिर्भाण्डपङ्क्त्यन्नमिश्रणम्।
याजनाध्यापने योनिस्तथा च सहभोजनम्॥
नवधा संकरः प्रोक्तो न कर्त्तव्योऽधमैः सह।

स्मृतिग्रन्थेषु नारदबृहस्पतिकात्यायनानामप्येका त्रयीति वक्तुं शक्यते । व्यवहारे **कात्यायनस्मृतेः** प्रामाण्यमसन्दिग्धम् । भृगुबृहस्पतिवचनान्युद्धृतानि तेन ( वि० र० २५१, २४१, १५२ ) । निबन्धकारैरनेकेषु स्थलेषु मनुयाज्ञवल्क्याभ्यां सह कात्यायनवचनान्युद्धृतानि । स्त्रीधनविषये कात्यायनमतस्यादरो भवति । व्यवहारादन्य **अङ्गिरःस्मृतिः** शास्त्रकारैरुद्धृता अस्ति । विश्वरूपेण ( याज्ञ० १।५० ) अङ्गिरोवचनमुपस्थापितं शास्त्रमहत्त्वप्रतिपादनाय—स्वस्वाभिप्रायकृतं कर्म यत्तु धर्मविवर्जितम् । क्रीडाकर्मेव बालानां तत्सर्वं निष्प्रयोजनम् । हरदत्तेन ( गौ० २०।१ ) अन्त्यजविभागेऽङ्गिरोवचनमुद्धृतम्—चण्डालः श्वपचः क्षत्ता सूतो वैदेहिकस्तथा । मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः ॥

अशौचश्राद्धप्रायश्चित्तेषु मिताक्षराकारापरार्कप्रभृतिटीकाकारा उद्धरन्ति **ऋष्यशृङ्गस्मृति**वचनानि[१] । एवमेव **कार्ष्णाजिनिस्मृतिरपि** ( मिता०, याज्ञ० ३।२६५; अपरार्कः १३८, २४२) । **चतुर्विंशतिमतमित्यत्र** मनुयाज्ञवल्क्यात्रिवेणुवसिष्ठव्यासापस्तम्बवत्सहारीतगुरु( बृहस्पति )नारदपराशरगार्ग्यगौतमयमबौधायनदक्षशङ्खाङ्गिरःशातातपसांख्यसंवर्तप्रभृतीनां स्मृतिकाराणां मतानां संग्रहोऽस्ति । **दक्षस्मृतौ** सप्ताध्यायाः २२० श्लोकाश्च सन्ति । अस्या वचनानि टीकाकाराः प्रमाणत्वेनोद्धरन्ति[२] । व्यवहारोऽस्ति **पितामहस्मृतेर्मुख्यविषयः** । अधोलिखितानि पितामहवचनानि तेषां महत्त्वमुपस्थापयन्ति—

वेदाः साङ्गास्तु चत्वारो मीमांसा स्मृतयस्तथा ।
एतानि धर्मशास्त्राणि पुराणं न्यायदर्शनम् ॥
( अपरार्कः पृ० ६-१, याज्ञ० १।३ )

अष्टमं फालमित्युक्तं नवमं धर्मजं भवेत् ।
दिव्यान्येतानि सर्वाणि निर्दिष्टानि स्वयम्भुवा ॥ ( अपरार्कः पृ० ६९४ )

छलानि चापराधांश्च पदानि नृपतेस्तथा ।
स्वयमेतानि गृह्णीयान्नृपस्त्वावेदकैर्विना ॥ ( स्मृ० चं० )

रजकश्चर्मकारश्च नटो बुरुड एव च ।
कैवर्तकश्च विज्ञेया म्लेच्छभिल्लौ तथैव च ॥

वेमरस्थिरविव्याधहस्तलाक्षद्रुघट्टकाः ।
कौसेदकाभीरपदमातङ्गाण्डापगोपकाः ॥

---

१. पूर्वनष्टां तु यो भूमिमेकश्चेदुद्धरेत् क्रमात् ।
यथांशं तु लभन्तेऽन्ये दत्त्वांशं तु तुरीयकम् ॥ ( मिता०, याज्ञ० २।११९ ) ।

२. विश्वरूपः, याज्ञ० १।१७; ३।३०, ६६, १९१; मिता०, याज्ञ० १।८९; ३।५८, २४३; अपरार्कः पृ० ३६८, ४०४ ।

एताः प्रकृतयः प्रोक्ता अष्टादश मनीषिभिः ।
वर्णानामाश्रमाणां च सर्वदा तु बहिः स्थिताः ।। ( स्मृ० चं० )

लेखको गणकः शास्त्रं साध्यपालः सभासदः ।
हिरण्यमग्निरुदकमष्टाङ्गकरणं स्मृतम् ।। ( स्मृ० चं० )

ग्रामे दृष्टः पुरे यायात्पुरे दृष्टस्तु राजनि ।
राज्ञा दृष्टः कुदृष्टो वा नास्ति तस्य पुनर्भवः ।। ( स्मृ० चं० )

देशपत्तनगोष्ठेषु पुरग्रामेषु वासिनाम् ।
तेषां स्वसमयैर्धर्मशास्त्रतोऽन्येषु तैः सह ।। ( स्मृ० चं० )

सागमा दीर्घकाला चाविच्छिन्नापरवोज्झिता ।
प्रत्यर्थिसंनिधाना च भुक्तिः पञ्चविधा स्मृता ।।

स्वहस्ताज्जानपदं तस्मात्तु नृपशासनम् ।
ततस्त्रैपुरुषो भोगः प्रमाणतरमिष्यते ।।

ग्रामगोष्ठपुरश्रेणिसार्थसेनानिवासिनाम् ।
व्यवहारश्चरित्रेण निर्णेतव्यो बृहस्पतिः ।।

बृद्धयाज्ञवल्क्यस्मृतिमनुसरति **पुलस्त्यस्मृतिः**[1] । पराशरेण **प्रचेताः** स्मृतः[2]। **प्रजापतेरुल्लेखाः** सन्ति बौधायनधर्मसूत्रे ( २।४।१५; २।१०।२७ ) वसिष्ठधर्मसूत्रे च ( ३।४७;१४।१६-१९, २४-२७,३०-३२ ) । परञ्च तत्र प्रयुक्तेन प्रजापतिशब्देन मनोरेव स्मरणं प्रतीयते । प्राप्तायां **प्रजापतिस्मृतौ** १९८ श्लोकाः सन्ति, मुख्यतया श्राद्धविषये[3] । आह्निकाशौचश्राद्धप्रायश्चित्तव्यवहारेषु **मरीचिस्मृतिरुद्धृता** शास्त्रकारैः[4] । वसिष्ठधर्मसूत्रे ( १८।१३-१५; १९।२८ ) यमवचनानि प्रमाणतया स्मृतानि । **यमस्मृतिस्तु** आपस्तम्बं मनुञ्चानुसरति । शास्त्रकारा यमवचनानि बाहुल्येनोद्धरन्ति[5] । अशौचप्रायश्चित्तादिविषये मिताक्षरायां ( याज्ञ० ३।१-२, २६०, २८९ ) लौगाक्षिवचनानि प्राप्यन्ते । अपरार्कोऽपि ( पृ० ५१२ ) स्मरति **लौगाक्षिस्मृतिम्** । यमार्याः क्रियमाणं तु

---

१. मिता०, याज्ञ० १।२६१; ३।२५३; विश्व०, याज्ञ० १।१७; अपरार्कः, याज्ञ० ३।५७ ।

२. मिता०, याज्ञ० ३।२०-२७, ६२-६४; मेधा०, मनु० ५।६०; हरदत्तः, गौ० २२।१८, २३।१ ।

३. मिता०, याज्ञ० ३।२५, २६०; अपरार्कः पृ० ९५२, ५४२ ।

४. अपरार्कः पृ० १३२, २३५, ७७१; परा० मा० ३ पृ० १२८ ।

५. विश्वरूपः, याज्ञ० १।१८७, २२५, २५२; ३।२६२; अपरार्कः पृ० ४२, ५९६; स्मृ० चं० ( व्य० पृ० १३०, २६६, २५४ ), मिता०, याज्ञ० ३।२५५, २९० ।

शंसन्त्यागमवेदिनः । स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते" इत्युद्घोषयति **विश्वामित्रस्मृतिः** । तस्याधोलिखितानि वचनानि प्रायशः प्रयुक्तानि—

ब्राह्मणो न च हन्तव्यः सुरा पेया न च द्विजैः ।
ब्राह्मणस्वर्णहरणं न कर्त्तव्यं कदाचन ॥
गुरुपत्नीं न गच्छेच्च संसर्गं तैश्च नाचरेत् ।
महापातकिसंज्ञा तु निर्दिष्टैषा मनीषिभिः ॥
( अपरार्कः पृ० १०, ४४ )

**व्यासस्मृति**प्रामाण्यं शास्त्रकारैः स्वीकृतम्[१]। **षट्त्रिंशमतादिकं** तु कैश्चिदेव परिगृहीतत्वाद्विगीतत्वाच्चाप्रमाणमित्युक्तम् । कल्पतरुणा विज्ञानेश्वरापार्कशूलपाणिप्रभृतयस्तु: प्रमाणत्वेन परिगृहीताः ( परिभाषा० पृ० १७ ) । धर्मगतास्पृश्यताविषये व्यवस्था महत्त्वपूर्णा—

बौद्धान् पाशुपताञ्जैनान् लोकायतिककापालिकान् ।
विकर्मस्थान् द्विजान् स्पृष्ट्वा सचैलो जलमाविशेत् ॥
( स्मृ० चं० १ पृ० ११८; अपरार्कः पृ० ६२३ )

**संग्रहः स्मृतिसंग्रहो** वेत्यस्य प्रामाण्यं शास्त्रकारैः स्वीकृतम्[२] । स्वत्वनिधारणविषयेऽत्रैकः श्लोकः—

न च स्वमुच्यते तद्यत्स्वेच्छया विनियुज्यते ।
विनियोगोऽत्र सर्वस्य शास्त्रेणैव नियम्यते ॥

टीकाकारैः **संवर्तस्मृति**वचनान्युद्धृतानि बाहुल्येन[३] । व्यवहारविषये कतिपयानि संवर्तवचनान्यत्रोद्धृतानि । तेषां महत्त्वं स्पष्टम्—

लेख्ये लेख्यक्रिया प्रोक्ता वाचिके वाचिकी मता ।
वाचिके तु न सिध्येत्सा लेख्यस्योपरि या क्रिया ॥
लेख्यस्योपरि यत्साक्ष्यं कूटं तदभिधीयते ।
अधर्मस्य हि तद् द्वारमतो राजा विवर्जयेत् ॥
वाचिकैर्यदि सामर्थ्यमक्षराणां विहन्यते ।
क्रियाणां सर्वनाशः स्यादनवस्था च जायते ॥
( अपरार्कः पृ० ६९१-९२ )

---

१. अपरार्कः पृ० ६३२, ६३५, ७५२, ७२८ ।

२. मिता०, याज्ञ० २।६; स्मृ० चं०, व्य०, पृ० ७, ३६, ९८, २५७, २६६, २९०; व्यवहारमयूखः पृ० १२; वीर० पृ० ६२; परा० मा० ३ पृ० १५८, ४७८, ४९२, ५२३ ।

३. मेधा०, मनु० ५।८८; ११।११६; मिता०, याज्ञ० ३।६, १७, १९; अपरार्क उद्धरति संवर्तस्मृतेः २०० श्लोकाः ।

भुज्यमाने गृहक्षेत्रे विद्यमाने तु राजनि ।
भुक्तिर्यस्य भवेत्तस्य न लेख्यं तत्र कारणम् ॥
(परा० मा० ३ पृ० १४६)

न वृद्धिः स्त्रीधने लाभे विक्षेपे च यथास्थिते ।
सन्दिग्धे प्रातिभाव्ये च यदि न स्यात्स्वयं कृता ॥
( स्मृति चं०, व्य० पृ० १५७ )

आसेधं पथि भङ्गं च यश्च गर्भः पतिं विना ।
स्वयमन्वेषयद्राजा विना चैव विवादिना ॥
यस्य दृश्यस्य सम्पत्तिर्न दृश्येतागमः क्वचित् ।
स्वय ... दिना ॥

सभाभंङ्गं तरुच्छेदं सस्यव्याघातमेव च ।
स्व ... ॥

कन्यापहारकं पापं विप्रं च पतितं तथा ।
परार्थवादसंयुक्तं स्वयं राजा विचारयेत् ॥

षड्भागकरशुल्कार्थे मार्गभेदकमेव च ।
स्वराष्ट्रचौर्यभीतिं च परदाराभिमर्शनम् ॥

गोब्राह्मणनिहन्तारं सस्यानां चैव घातकम् ।
दशैतानपराधांश्च स्वयं राजा विचारयेत् ॥
( स्मृ० चं०, परा० मा० ३।४४-४५ )

व्यवहारे निर्णये च हारीतस्मृतेर्वचनानि महत्त्वपूर्णानि—

धर्मशास्त्रार्थशास्त्रोक्तः शिष्टाचारादिलक्षणः ।
छलेन च व्यपेतो यः व्यवहारः स धार्मिकः ॥ ( स्मृ० चं० )

शास्त्राणि सर्वधर्मास्तु प्रकृतीनां च भूपतिः ।
व्यवहारस्वरूपं च ज्ञात्वा तत्सर्वमाचरेत् ॥ ( स्मृ० चं० )

धर्मेण व्यवहारेण चरित्रेण नृपाज्ञया ।
चतुष्पाद् व्यवहारोयमुत्तरः पूर्वबाधकः ॥ ( स० वि० पृ० ५८ )

सुदीर्घेणापि कालेन लिखितः सिद्धिमाप्नुयात् । ( स्मृ० चं० )

लेख्यं यस्य भवेद्धस्ते भोगं तस्य विनिर्दिशेत् ।
( अपरार्कः, याज्ञ० २।९० )

अन्यायेनापि यद्भुक्तं पित्रा भ्रात्राथवापि च ।
न तच्छक्यं पराहर्त्तुं तृतीयं समुपागतम् ॥ ( स्मृ० चं० )

यद्विनागममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत् ।
न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम् ।। ( मिता० याज्ञ० २।२७ )

भटचाटबलाद्भुक्तं हृतं गुप्तमथापि वा ।
स्नेहप्रणयदत्तं च प्रदत्तं भाटकेन वा ।।

तथा वसनरक्षार्थं याचितं प्रणयेन वा ।
एवं बहुविधे भोगे आगमो निर्णयः स्मृतः ।।

न मूलेन विना शाखा अन्तरिक्षे प्ररोहति ।
आगमस्तु भवेन्मूलं भुक्तिः शाखा प्रकीर्तिता ।। ( स्मृ० चं० )

अभये प्रत्यये दाने उपस्थानेऽथ दर्शने ।
पंचस्वेव प्रकारेषु ग्राह्योऽपि प्रतिभूर्बुधैः ।। ( स्मृ० चं० )

दानार्थे वा धनार्थे वा धर्मार्थे वा विशेषतः ।
आदाने वा विसर्गे वा न स्त्री स्वातन्त्र्यमर्हति ।। ( स्मृ० चं० )

विधवा यौवनस्था चेन्नारी भवति कर्कशा ।
आयुषः क्षपणार्थं तु दातव्यं जीवनं तदा ।। ( मिता० याज्ञ० २।१३५)

भार्याया व्यभिचारिण्या परित्यागो न विद्यते ।
दद्यात्पिण्डं कुचेलं च अधः शय्यां च शाययेत् ।। ( स्मृ० चं० )

## निबन्धटीकाग्रन्थकाराः

नारदस्मृतावुपरि **असहायस्य** भाष्यं भ्रष्टमासीत्, तच्च विशोध्य **कल्याण-भट्टेन** पुनः प्रकाशितम्—दृष्ट्वासहायरचितं नारदभाष्यं कुलेखकैर्भ्रष्टम् । कल्याणेन क्रियते प्राक्तनमेतद् विशोध्य पुनः । "इति असहाय नारदभाष्ये केशवभट्टप्रोत्साहितकल्याणभट्टपरिशोधितव्यवहारमातृकायां प्रथमोऽध्यायः" । गौतमधर्मसूत्रोपर्यप्यसहायस्य टीका विद्यते—बालदेशान्तरितप्रव्रजितानां सद्यः शौचम् । ( गौ० ध० सू० १४।४४ ) यत्र मृतोऽशौचाभ्यान्तरे न श्रूयते तद्देशान्तरं तत्र मृतो देशान्तरित इति गौतमभाष्यकृतासहायेन व्याख्यातम् ( हारलता पृ० ९७ ); पिण्डनिवृत्तिः सप्तमे पञ्चमे वा ( गौ० ध० सू० १४।१२ ) अत्रासहाय-व्याख्या । यदा पितृपितामहप्रपितामहास्त्रयो जीवन्ति तदा प्रपितामहादूर्ध्वं त्रिभ्यः पिण्डदानम् ।...इदं तु व्याख्यानं न शोभनं प्रतिभाति । प्रस्तुतसरस्वतीविलास-वाक्येन ( पृ० ८३।३४८ ) प्रतीयते यदसहायस्य टीका मनुस्मृतावुपर्यासीत्—धर्म-विभागो मनुयाज्ञवल्क्यादिस्मृतिकाराणां तत्स्मृतिव्याख्यातॄणामसहायमेधातिथिवि-ज्ञानेश्वरापरार्काणां निबन्द्धॄणां चन्द्रिकाकारादीनां च सम्मत एव । अन्यत्र च, अत्र ( मनुस्मृतौ ) वाक्पारुष्यदण्डपारुष्यस्त्रीसंग्रहणानन्तरं दायभागः क्रमिकः ।

निबन्धकारेण तु त्रयोदशविवादपदं दाय इत्युक्तम्। उभयोर्महान् विरोधः। स परिह्रियते। तथोक्तं नारदेन।... नारदवचनानुसारि निबन्धनकारवचनम्। अतश्च तद्व्याख्येयस्यापि गौतमसूत्रस्य नारदवचनानुसारित्वमेव। तथा च गौतमः। प्रतिषेधे पुमान्दण्डचस्तदर्धं स्त्री इति। अस्यार्थो विकृतो निबन्धनकारेण। मेधातिथिर्मनोर्व्याख्यायाम् (८।१५६) असहायस्योल्लेखः कृतवान्। अन्यत्र मिताक्षरा, अतोऽसहायमेधातिथिप्रभृतीनां व्याख्यानमेव चतुरस्रं न भारुचेः। सरस्वतीविलासे दायशब्दस्य व्याख्यायामसहायस्य वचनमित्थमुद्धृम्—असहायविज्ञानयोगिप्रभृतीनां तु यत्स्वामिसम्बन्धादेव निमित्तादन्यस्य स्वं भवति तद् दायशब्देनोच्यते ( पृ० १९ )। अग्रेऽपि, अतश्च कन्याशुल्कविषये सोदरासोदरविभागेऽसोदराणामपि किञ्चिद् देयमित्यसहायव्याख्यानमसहायम् ( स० वि० पृ० ३८४ )।

त्रिकाण्डमण्डनेन **भर्तृयज्ञस्योल्लेखः** कृतः—"यद्वाध्ययनसंसिद्धविज्ञानरहितोऽपि सन्, नातीवाधिक्रियाशून्यो भर्तृयज्ञादिदर्शनात्"। मेधातिथिर्भर्तृयज्ञमुद्धरति—"व्याख्यानान्तराणि भर्तृयज्ञेनैव सम्यक्कृतानि इति तत एवावगन्तव्यानि सर्वथा प्रमाणमूलानि" (मनु० ८।३)। कात्यायनश्रौतसूत्रस्य भाष्यकाररूपेण भर्तृयज्ञस्योल्लेखः। पारस्करगृह्यसूत्रस्य भाष्यं भर्तृयज्ञेन कृतम्– एते पञ्च भूसंस्कारा इति भर्तृयज्ञभाष्येऽन्यथा इति कर्कोपाध्यायाः ( पा० गृ० सू० १।१।२; १।२।१; २।५।२३ )। गदाधरो वदति—"इदं च सूत्रं सूत्रत्वेन हरिहरभाष्ये तिष्ठति भर्तृयज्ञकर्कादिग्रन्थेषु नोपलभ्यते। गृहस्थसंविभागो भर्तृदाय इति भर्तृयज्ञः, अत्र जातस्येति ऋणापाकरणयोगस्येति भर्तृयज्ञः। नित्याचारप्रदीपे–अत्र तच्छेशेषेणेति तस्यैव नित्याचारकर्मणः शेषेणेति भर्तृयज्ञः ( पृ० १२ )।

**विश्वरूपः** विज्ञानेश्वरेण "याज्ञवल्क्यमुनिभाषितं मुहुर्विश्वरूपविकटोक्तिविस्तृतम्" इति मंगलाचरणप्रक्रियायामुपस्थापितः। याज्ञवल्क्यस्मृतिव्याख्यायां विश्वरूपो वेदादारभ्य न्यायमीमांसादिग्रन्थान् विपुलमात्रायां प्रयुक्तवान्। मीमांसाया बाहुल्येन प्रयोगेऽपि स वेदान्तभागाध्यवसायीति प्रतीयते 'अपवर्गार्थं हि पारिव्राज्यं ज्ञानैकसाधनं न तत्र कर्मणा प्रयोजनमित्युक्तमेव' 'तत्त्वाग्रहणात्मकेनाविद्योऽथत्वात्प्रपञ्चस्यैवमादिचोद्यानवकाश एव। ... तत्त्वेन ब्रह्मणो नान्यद्वस्त्वन्तरमस्तीति ब्रह्मविदां स्थितिः' ( याज्ञ० ३।६६ )। अनेके टीकाकारा निबन्धकाराश्च विश्वरूपमतानि प्रायश उद्धरन्ति। तेषामुद्धरणैरित्यपि प्रतीयते यद् विश्वरूपेण श्राद्धकलिकोपरि टीका कृता। विश्वरूपसमुच्चयनाम्ना विश्वरूपो रघुनन्दनेनोद्धृतः।

मिताक्षरायां **भारुचिरुल्लिखितोऽस्ति** (याज्ञ० १।८१)। पराशरमाधवीये—"भारुचिस्तु चतुर्थभागपदेन विवाहसंस्कारमात्रोपयोगि द्रव्यं विवक्षितम्, अतो दायभाक्त्वमसंस्कृतकन्यानां नास्तीति मन्यते" ( ३।२ पृ० ५१० )। रामानुजाचा-

र्यस्य वेदार्थसंग्रहे श्रीनिवासदासस्य यतीन्द्रमतदीपिकायाञ्च भारुचेरुल्लेखोऽस्ति— "व्यासबोधायनगुहदेवभारुचिब्रह्मनन्दिद्रमिडाचार्यश्रीपराङ्कुशनाथमुनियतीश्वर प्रभृतीनां मतानुसारेण..."। सरस्वतीविलासे–"यथाह भारुचिरेतद्विष्णुवचनव्याख्यानावसरे बीजशब्दः पिण्डवाचीति"।

श्रीकरस्य मतानि टीकाकारैरस्वीकृतानि—एतेनाल्पधनविषयत्वं श्रीकरादिभिरुक्तं निरस्तम् ( मिता०, याज्ञ० २।१३५ )। न च स्वल्पबलत्वे पत्नी दुहितर इति बहुधनत्वे भ्रातॄणामप्रजा इति वचनमिति श्रीकरमतमुचितम् ( स्मृतिसारः )। "अथाविदितदेशान्तरं गतः कालान्तरे वा विपन्नस्तदा मूलसमाहरणाशक्तेर्विक्रेतारमदर्शयित्वैव स्वयमेव तद्धनं नाष्टिकस्य समर्पयेत्। तावतैवासौ शुद्धो भवतीति श्रीकराचार्येण व्याख्यातं तदिदमनुपपन्नम् ( मिता०, स० वि० पृ० ३०७ )" "अथाविदित ... समर्पयेदिति श्रीकररुचिकादय आहुः। विज्ञानेश्वरस्तु..."। स्मृतिसमुच्चयकाररूपेण स्मृतिचन्द्रिकायां श्रीकरग्रन्थस्य विवरणमस्तीत्थम्—"ये पुनः स्मृतिसमुच्चयकाराः शम्भुश्रीकरदेवस्वाम्यादयः सम्प्रत्युद्धारविषमविभागयोः शिष्टाचारं मन्यमाना उद्धारादिविषयाणि स्मृतिवाक्यानि विचारयितुं ग्रन्थविस्तारं चक्रिरे" ( पृ० २६६ )। स्मृत्यर्थसारे—"श्रीकण्ठश्रीकराचार्यैः श्रुतिस्मृतिपुराणगैः। स्मृतिशास्त्रेष्वनेकेषु विप्रकीर्णेष्वनेकधा। अनुष्ठात्रुपकारार्थं स्मृतिच्छिद्रं प्रयत्नतः। पुराणन्यायमीमांसा साङ्गवेदैः प्रपूरितम्"।

मनुस्मृतिव्याख्याकाराणां मध्ये मेधातिथेर्वैशिष्टयं स्पष्टम्। तेनोद्धृतानि शास्त्रकाराणां मतानि। "एवं सर्व एव बाह्या भोजकपाञ्चरात्रिकनिर्ग्रन्थानार्थवादपाशुपतप्रभृतयः"। "विधिरर्थावादादि" शब्दानां प्रायशः प्रयोगेण प्रतीयते यन्मेधातिथिरस्ति पूर्वमीमांसायाः प्रभावे। परञ्च वेदान्तस्य प्रभावविषयेऽपि न शङ्का–"उपनिषद्भाष्ये चैतदन्यथा व्याख्यातं तत्त्विहानुपयोगान्न प्रदर्शितम्", "सर्वो ह्यर्थो वाग्व्यवहारानतीतो वाचश्च सर्वस्या ओङ्कारो मूलम्। तथा च श्रुतिः। तद्यथा शङ्कुना...अन्तर्धानमनुस्मृतिराश्रयभावापत्तिर्वा। कथं पुनः सर्वा वागोङ्कारेण संतृण्णा। वैदिक्यास्तावदोङ्कारपूर्वकत्वमुक्तम्। लौकिक्या अपि तदादीनि वाक्यानि स्युरित्यापस्तम्बवचनात्। "लीलयापि कौतुकेनापि लोके राजादीनां प्रवृत्तिर्दृश्यत इति ब्रह्मविदः" ( मेधातिथिः )। "परब्रह्मावाप्तिस्तु मोक्षलक्षणा केवलानन्दरूपा ज्ञानात् ज्ञानकर्मसमुच्चयाद्वेति वक्ष्यामः" ( मेधा० मनु० १।५० ); "इदं तु ज्ञानकर्मणोः समुच्चयान्मोक्ष इति श्लोकद्वयं ज्ञापकम्" ( मेधा० मनु० ७।७४-७५); "अतश्च ब्रह्मनिष्ठापरेणापि वेदाभ्यासादीन्यनुष्ठेयानि" ( मेधा० मनु० १२।८७ )।

धारेश्वरो भोजदेवो मिताक्षराप्रभृतिभिर्टीकाकारैरुद्धृतोऽस्ति। अनेकेषु

विषयेषु भोजदेववचनानि प्रायश उद्धृतानि[1], मतभेदप्रदर्शनञ्च प्राप्यते—अतएव राजमार्तण्डे भोजराजः—श्राद्धविघ्ने समुत्पन्ने मृतस्याविदिते दिने। अमावस्यायां प्रकुर्वीत वदन्त्येके मनीषिणः ( शुद्धिकौमुदी पृ० १८ ); तदेतानि वाक्यानि राज्ञा लिखितत्वान्नादेयानीति केचित्। तदयुक्तं कामधेनावपि राजनिबन्धवच्छिष्टपरिग्रहात्संशयं नार्हन्तीति चेत्, न राजालिखितत्वस्यादर्शनेनाप्युपपत्तेः। न हि यावन्ति स्मृतिवाक्यानि तावन्ति सर्वाण्येव राज्ञा दृष्टानीति प्रमाणमस्ति। निर्णयामृते—यत्तु भोजराजीयं न दिवा न निशासु च विष्टिहता न च सप्तमीशल्यसमोपहतेति। इदं सप्तमीशल्यनिषेधपरम् ( पृ० ६८ )।

**देवस्वामी** स्मृतिसमुच्चयकाररूपेण स्मृतिचन्द्रिकायामित्थं निरूपितः—ये पुनः स्मृतिसमुच्चयकाराः शम्भुश्रीकरदेवस्वाम्यादयः...( व्य० पृ० २६६ )। आश्वलायनगृह्यस्य भाष्यकारो नारायणः स्मरति च—"आश्वलायनगृह्यस्य भाष्यं भगवता कृतम्, देवस्वामिसमाख्येन विस्तीर्णं तत्प्रसादतः"। चतुर्विंशतिमताख्याने—देवस्वामिमाधवपारिजातकारप्रभृतयस्तु मासिके आशौचेनोपहते सूतकानन्तरशुद्धिदिन एव कर्त्तव्यं पुरस्तदहरेव वेति ( पृ० १३५ )। एवमेवानेकाष्टीकाकाराश्चर्चयन्ति[2]। कालविवेके जीमूतवाहनेन **जितेन्द्रियस्योल्लेखः** कृतः ( पृ० ३८० )। कालविवेके जितेन्द्रियस्य वचनान्युद्धृतानि सन्ति ( पृ० २५५, ३७०, ४८९ )। तथैव दायभागेऽपि—अत एव जितेन्द्रियेण ... ( पृ० ३५६, ३५० )। दायभागेऽनेकेषु स्थलेषु **बालकस्य** वचनानि 'बालवचनमिव' प्राप्यन्ते ( पृ० १६१, १९०, २६२, २८२, ३५६ )। व्यवहारतत्त्वे ( पृ० २२३ ) दुर्गोत्सवविवेके च ( पृ० १३ ) बालकस्य वचनानां खण्डनमस्ति। विवादचन्द्रे विवादचिन्तामणौ च ( पृ० १५२, १५३, १५५ ) **बालरूपवचनानामुल्लेखोऽस्ति**। कालविवेके **योग्लोकस्य** वचनानि[3]—योग्लोकेन तु स्वल्पबृहद्ग्रन्थभेदेन द्वयमेवोक्तं बलाबलनिरूपणाक्षमत्वात् ( पृ० ३३५ )।

"नासीदस्ति भविष्यति क्षितितले कल्याणकल्पं पुरं नो दृष्टः श्रुत एव वा क्षितिपतिः श्रीविक्रमार्कोपमः। विज्ञानेश्वरपण्डितो न भजते किञ्चान्यदन्योपमश्चाकल्पं स्थिरमस्तु कल्पलतिकाकल्पं तदेतत्त्रयम्" इति वचनेन **विज्ञानेश्वरस्य** परिचयः प्राप्यते। अत्यन्तप्रामाणिकेन विज्ञानेश्वरमतानि स्वीकृतानि ब्रिटिशन्यायालयेऽपि। **कामधेनोर्मतं** कल्पतरौ प्राप्यते—अत एव जातमृते मृतजाते

---

१. मिता०, याज्ञ० २।१३५; ३।२४; हारलता पृ० ११७; स्मृ० चं० २ पृ० २५७; वीरमित्रोदयः पृ० ५२८, ५३६; जीमूतवाहनः पृ० ५३९।

२. हेमाद्रिः ( कालनिर्णयः ३।२ पृ० ३२४ ); स्मृ० च० २ पृ० २८५, २८९, २९५, ३८५; दत्तकमीमांसा पृ० ४२; वीर० पृ० ६९६।

३. कालविवेकः पृ० २७३, २८०; व्यवहारमातृका पृ० ३०२; व्य० त० पृ० २१७।

वा कुलस्य त्रिरात्रमिति हारीतवचनं कामधेनुकृता गर्भस्रावाशौचप्रकरणे लिखितम् ( पृ० ११७, १२४ )। अस्ति विवादोऽस्य लेखकस्य विषये[१]। **हलायुधवचनानि** चण्डेश्वरहरिनाथप्रभृतिभिर्टीकाकारैः प्रयुक्तानि। वीरमित्रोदयेऽपि हलायुधवचनस्य प्रयोगो दृश्यते। व्यवहारतत्त्वे वीरमित्रोदये च **भवदेवभट्टस्य** स्मरणमित्थम्--'अस्तव्यस्तपदव्यापि अनन्वितार्थपदव्याप्तमिति व्यवहारतिलके भवदेवभट्ट. ( पृ० २०७ ); भवदेवेन तु अस्तव्यस्तपदव्यापीति पाठं लिखित्वानन्वितार्थपदव्याप्तमिति व्याख्यातं व्यवहारतिलके ( वीर० पृ० ८५ )। विवादचन्द्रे **मिसरुमिश्रो** भवदेवमतमुद्धरति—"यस्य दृश्येत सप्ताहादुक्तसाक्ष्यस्य साक्षिणः। अत्र यद्यपि भवदेवेन कृतदिव्यस्येति लिखितं तथाप्युक्तसाक्ष्यस्येत्यभिधानादकृतदिव्यस्यापि द्रष्टव्यं कृतदिव्यस्येति प्रायोवादः"। "भवदेवेन तु न रोगाग्निज्ञातिमरणं शुद्धिं तस्य विनिर्दिशेदिति लिखितम्"। व्यवहारतत्त्वे—"दुर्बलकारणोत्तरं यथा ममेयं भूः क्रमागतत्वादिति वाद्युक्ते ममेयं भूर्दशवर्षभुज्यमानत्वादिति प्रत्युत्तरं तत्तु धनमात्रप्रयुक्तं पश्यतोऽब्रुवतो हानिर्धनस्य दशवार्षिकीति याज्ञवल्कीयं बीजं किन्तु नैतद्युक्तं परेण भुज्यमानाया भूमेर्विंशतिवार्षिकीति भूमिमात्रविषयकं तत्परार्धेनापादितत्वादिति भवदेवभट्टाः" ( पृ० २०८ )। वीरमित्रोदये--"अत्र भवदेवभट्टः। न च सुमन्तुवचनेन नाततायिवधदोषोऽन्यत्र गोब्राह्मणादित्यनेन विरोधः सूत्रच्छेदापरिज्ञानात्। तथाहि सूत्रत्रयमिदम्। आततायिवधे नेत्येकम्। दोषोऽन्यत्रेत्यपरम्। गोब्राह्मणात्स्नातः प्रायश्चित्तं कुर्यादित्यन्यत् ( पृ० २२ )। भवदेवस्य शापः—"इति श्रीबालवलभीभुजङ्गापरनाम्नो भट्टश्रीभवदेवस्य कृतौ तौतातितमततिलके द्वितीयाध्यायस्य प्रथमः पादः। यो नाम कश्चिदिह संविदितं प्रमेयं ग्रन्थान्तरे लिखति वा वदति स्वयं वा। मत्कर्तृतामननुकीर्त्य स कीर्तिलोपान्निःसन्ततिर्जगति जन्मशतानि भूयात्" ॥

दानश्राद्धव्यवहारविषये **प्रकाशवचनान्युद्धृतानि** टीकाकारैः[२]। प्रायशः प्रकाशेन सह **पारिजातस्य** उल्लेखः प्राप्यते। तद्यथा--"कल्पद्रुमे वाप्यथ पारिजाते हलायुधे वाप्यथवा प्रकाशे, यत्सारमस्मादधिकं च यत्तद्दधाति रत्नाकर एक एव"। मनुस्मृतावुपरि **गोविन्दराजस्य** टीका प्रसिद्धा। स्मृतिमञ्जर्यां गोविन्दराजस्य परिचयः--स्मृतिविरचितैस्तैस्तैर्वाक्यैर्द्विरुक्तिपराङ्मुखीमखिलकललव्यालुप्तार्थामतो व्रतसंहतिम्। अलिखदखिलां गोविन्दाख्यश्चिरं गुरुसंश्रयादुपचिततनुर्ज्ञानामोदः स माधवनन्दनः"। "स्वर्वाहिनीपुलिनलाञ्छनलब्धकीर्तिनारायणस्य तनयात्मज उच्चिकाय। वाक्यावलीमखिलसच्चरणावतंसाद् ( तंसां ? ) गोविन्दराज इह

१. P. V. Kane, History of Dharmashastra, Vol. I, PP. 294-295.

२. विवादरत्नाकरः पृ० ९९८, ४८५, ५०९; वि० चि० पृ० १३०, १३५, १४०, १५७; चतुर्वर्ग० ३।१।११३१; ३।१।११२।

माधव इह भूमिः'' । संसाराध्वगतागतक्लमतृषापीयूषमीशं शनैर्ध्यात्वानर्गलसम्प्रदायगुरुतः प्राप्ते मनोः शासने । दृष्ट्वा ग्रन्थकृदाशयाननुसृतिं व्याख्यान्तराणामिमां टीकां शास्त्रकृदाशयानुसारिणिं गोविन्दराजो व्यधात् । बहुधा कुल्लूकभट्टो गोविन्दराजमतेन वैमत्यं प्रदर्शितवान्[1]--हन्त गोविन्दराजेन विशेषमविवृण्वता । व्यक्तमङ्गीकृतमृतौ स्वदारसुरतं यतः ( मनु० २।१२५ )।। स्वेषु तिष्ठत्स्विति पदद्वितयं न विवक्षितम् । इमां गोविन्दराजस्य राजाज्ञां नाद्रियामहे ( मनु० ३।५० )।।

महाराजाधिराजगोविन्दचन्द्रदेवादिष्टेन महासान्धिविग्रहिकेण भट्टहृदयधरात्मजश्रीमल्लक्ष्मीधरेण विरचितः **कृत्यकल्पतरु**र्विश्वकोश इव प्रतिभाति विभिन्नेषु काण्डेषु । शूलपाणिस्तथा रघुनन्दन इव **जीमूतवाहनो**ऽपि बंगदेशीयः शास्त्रकारः । कालविवेकस्य लेखको जीमूतवाहनो जितेन्द्रियशङ्खधरान्धूकसंभ्रमहरिवंशधवलयोग्लोकप्रभृतीन् स्मरति ( पृ० ३८० ) । व्यवहारमातृकालेखने तेन प्रतिज्ञातम्--''एषा सकलविवादेषु धर्मवादार्थम् । लोकद्वयेऽपि रक्षति सुतमिव शुश्रूषया माता'' । सः पारिभद्रकुलोद्भूतः । तेन ''दूषणं विश्वरूपादेर्निराकृत्य प्रपञ्चितम्'' । श्रीविद्याधरवंशप्रभवश्रीशीलाहारनरेद्रजीमूतवाहनान्वयप्रसूतश्रीमदपरादित्यदेवविरचिते याज्ञवल्कीयधर्मशास्त्रनिबन्धकारोऽ**परार्कः** प्रसिद्धः । मिताक्षरेवापरार्कस्यापि प्रामाण्यं याज्ञवल्क्यस्मृतिविषयेऽङ्गीकृतम् । अनेकेषु स्थलेषु विज्ञानेश्वरकृता व्याख्या तेन हेया कृता । **प्रदीप**स्य स्मृत्यर्थसारे कामधेन्वनन्तरमुल्लेख इत्थमस्ति--''कामधेनौ प्रदीपेऽब्धौ कल्पवृक्षलतासु च । शम्भुद्रविडकेदारलोल्लटाद्यैश्च भाषितम्'' । स्मृतिचन्द्रिकायां सरस्वतीविलासे च प्रदीपस्य वर्णनं वैशिष्टयेन प्राप्यते--''पदे पदे प्रस्खलतां प्रदीपादिस्खलतावपि । द्रष्टॄणां दृष्टिविषये चन्द्रिका प्रवितन्यते''; ''प्रतिभाव्यागतमपि पौत्रेणापि दातव्यमिति प्रदीपः ( स० वि० पृ० २५३ ) ।

श्रीधरस्य **स्मृत्यर्थसारे** कलिवर्ज्यसंस्कारोपनयनादीनां विचाराः सन्ति । बंगीयानिरुद्धस्य **हारलताया** महत्त्वं स्मृतिसंग्रहग्रंथानामिव प्रतिभाति । परिचयविषये वचनानि --कल्पतरुकामधेन्वादिसंग्रहाकृष्टे महामहोपाध्येन विरचितं शुद्धिप्रकरणेन्त्येष्टिविधिः; गोभिलगृह्यसूत्रं दृष्ट्वा छन्दोगपरिशिष्टम् । दृष्ट्वा स्मृतीश्च बहुशः परिसंख्यानं पुराणवाक्यानि । गौतमवसिष्ठशास्त्रे नानासंग्रहवचांसि चालोक्य । युक्त्या स्वयं निरूप्य ज्ञात्वा सर्वं मतं च वृद्धानाम् । रचिता पद्धतिरेषा सम्यक् कर्मोपदेशिनी रुचिरा । ''सुरापगातीरविहारपाटके निवासिना भट्टन-

---

१. मनु० २।१; २।१२७; ३।११, ५३, १२७, १२९, २८५; ४।७, १६२; ६।१४, ७९, ८६; ७।९५, २११; ८।३७, १४२-१४३, १८४, ३३३; ९।६८, १३६, १४१, १६२, २०६; १०।३; ११।८२, १८०; १२।८६ ।

यार्थवेदिना। कृतानिरुद्धेन सतामुरःस्थले विराजतां हारलतेयमर्पिता"। इति चाम्पाहट्टीयमहोपाध्यायधर्माध्यक्षश्रीमदनिरुद्धभट्टविरचिताशौचव्यवस्था हारलता..."। रुद्रधरस्य शुद्धिविवेके—"सन्त्येव रत्नाकरपारिजातमिताक्षराहारलतादयोऽन्ये। तथापि तत्रालसमानसानां भवेत्प्रमोदाय मम प्रयासः"। "अतो गोभिलगृह्यसूत्रविच्छेदमनाकलय्याधुनिकेन गौडमैथिलसंग्रहकारानिरुद्धश्रीदत्तादीनां विरुद्धं भट्टभाष्यादीनामसम्मतं चोक्तं हेयमेव" ( श्राद्धक्रिया कौमुदी पृ० ३८८ )। अच्युतचक्रवर्त्तिना हारलतोपरि सन्दर्भशुचिकेति टीकाऽपि लभ्यते।

वेदाचार्यस्य स्मृतिरत्नाकरे मदनपारिजाते च **बल्लालसेनस्याचारसागरस्यो**ल्लेखः प्राप्यते ( पृ० ५८ )। तस्यैव **प्रतिष्ठासागरस्य** दानसागरस्य च सन्दर्भो लभ्यते। रघुनन्दनो मन्यते एकादशीतत्त्वे ( २ पृ० ४४ ) "विष्णुरहस्यानार्षत्वस्य दानसागरे अनिरुद्धभट्टेनाभिहितत्वाच्च"। अन्यच्च "अधिगतसकलपुराणस्मृतिसारः श्रद्धया गुरोरस्मात्। कलिकल्मषावसादं दाननिबन्धं विधत्ते नु।... श्री बल्लालनरेश्वरो विरचयत्येतं गुरोः शिक्षया स्वप्रज्ञावधि दानसागरमयं श्रद्धावतां श्रेयसे"। विवादरत्नाकरवचनमाश्रित्येति परिकल्पना जायते यद् **हरिहरेण** व्यवहारसम्बन्धे लिखितम्। यथा—हरिहरादिभिः संसरणानुवृत्तौ प्रजापतिरिति मस्तके दत्वा यस्तत्रेति वाक्यमवतारितमिह न फलतो विशेष इति ( वि० र० पृ० २२१ ); शङ्खलिखितौ—कन्यायामसकामायां द्व्यङ्गुलच्छेदो दण्डः।... हरिहरस्तु द्व्यङ्गुलपरिमाणलिङ्गच्छेद इत्याह ( वि० र० पृ० ४०२ )। चतुर्वर्गचिन्तामणौ—"तस्मात् त्रयोदशे श्राद्धं न कुर्यान्नोपतिष्ठते इत्येव बहुग्रन्थदृष्टः काश्मीरलिखितश्च पाठो ज्यायान्। तथा च हरिहरादिग्रन्थेऽप्येवमेव पाठो गृह्यते ( काल० ३।२ पृ० ५२, ४४७, ४८३; ३।१ पृ० १५९, ११३१, ११७७, १२८० )।

देवणभट्टस्य **स्मृतिचन्द्रिका** प्राचीना संस्काराह्निकव्यवहारश्राद्धाशौचविषयिणी च। अत्र संकल्पः—"सर्वलोकहितार्थाय क्रियते स्मृतिचन्द्रिका। स्वाभिप्रायेण हि मया न किञ्चिदिह लिख्यते। किन्तु वाचनिकं सर्वमतो ग्राह्यचैव निर्भयैः"। टीकाकाराणां मध्ये **हरदत्तस्य** विशिष्टं स्थानं विद्यते। आपस्तम्बगृह्यसूत्रोपरि अनाकुला, आश्वलायनगृह्यसूत्रोपरि अनाविला, गौतमधर्मसूत्रोपरि मिताक्षरा, आपस्तम्बधर्मसूत्रोपरि उज्ज्वला अन्या च आपस्तम्बमन्त्रपाठोपरिटीका दाक्षिणात्यस्य हरदत्तस्य वैशिष्ट्यं। पदमञ्जर्यां तेलगुशब्दस्य प्रयोगस्तेन कृतः—या पुनर्देशभाषाभिः संज्ञाः कूचिमञ्चीत्यादयो न तासां साधुत्वम्"। पितृष्वसृमातुलसुतापरिणयविषये तस्य मतम्—"यत्र पितृष्वसृमातुलसुतापरिणयनादौ प्रीत्युपलब्धितः प्रवृत्तिर्न तत्रोत्सन्नपाठं शास्त्रमनुमीयते प्रीतिरेव प्रवृत्तिहेतोः सम्भवात्"। हरदत्तकृतशिवस्तुतिमूलकश्लोकेनानुमीयते यत् सः शैव आसीत्—

यस्मै नमो भवति यस्य गुणाः समग्रा नारायणोपनिषदा यदुपासनोक्ता।
यो नः प्रचोदयति बुद्धिमधिक्रतौ यस्तं त्वामनन्यगतिरीश्वर संश्रयामि ॥

अघटितघटनापटवे प्रकटितकरुणाय सिन्धुभृते।
वटतरुमूलस्थितये विघटिततमसे महेश्वराय नमः ॥

विधातारं कश्चिद्भजति भजते कश्चन हरिं सुरानन्ये जगति सफलाः
सर्वविधयः।

तथापि त्वद्भक्ते शिव ननु यदा चर्मवदिति श्रुतो मन्त्रो देवान्तरभजन-
दैन्यं न सहते ॥

शशे शृङ्गं पुष्पं नभसि मृगतृष्णासु सलिलं प्रसूतिर्वन्ध्यायामनवधिक-
मायुस्तनुभृताम्।

विमुक्तिर्वा देवान्तरभजनलभ्या पशुपते न शक्यं नः संभावयितुमपि
सर्वं विमृशताम् ॥

विश्वकोशीय**चतुर्वर्गचिन्तामणि**लेखको वत्सगोत्रोत्पन्नो दाक्षिणात्यो हेमाद्रिः स्वस्मिन् ग्रन्थे व्रतदानतीर्थमोक्षप्रभृतिविषयान् विरचितवान् ( चतु० ३।१।१६, २५ )। तत्रादौ देवताकाण्डं ततः कालविनिर्णयः। विपाकः कर्मणां पश्चाल्लक्षणानां समुच्चयः। महाप्रकरणानीह चत्वार्येतान्यनुक्रमात् ( चतु० ३।२।२६ )। लेखकस्य परिचयः—अस्ति शस्तगुणस्तोमः सोमवंशविभूषणम्। महादेव इति ख्यातो राजराजेव भूतले।...तस्यास्ति नाम हेमाद्रिः सर्वश्रीकरणप्रभुः। निजोदरतया यश्च सर्वश्रीकरणप्रभुः (चतु० १।६,१३ )। विवाहे विशिष्टा व्यवस्था—आर्यावर्त्तेषु समानदेशवासिनां नानाशाखाध्यायिनामप्युपलभ्यन्त एव परस्परमनवगीयमानाः सर्वतो विवाहसम्बन्धाः।... अतो न कन्यादाने नाऽपि हविर्दाने स्वशाखीयद्विजनियम इति सिद्धम्। ( ३।१ पृ० ३८१ )। हेमाद्रेः कृतयोऽनेकाः—"टीकां मुक्ताफलस्येमां नाम्ना कैवल्यदीपिकाम्। हेमाद्रिः कटके चक्रे कामराजस्य वेश्मनि। इति श्रीमत्प्रौढप्रतापचक्रवर्त्तिमहाराजाधिराजवंशोद्भवरामराजमन्त्रिवर्यहेमाद्रिदेवविरचिता मुक्ताफलटीका"। "श्रीमद्भागवतस्कन्धाध्यायार्थादि निरूप्यते। विदुषा वोपदेवेन मन्त्रिहेमाद्रितुष्टये" ॥ "यस्य व्याकरणे वरेण्यघटनाः स्फीताः प्रबन्धा दश प्रख्याता नव वैद्यकेऽपि तिथिनिर्धारार्थमेकोद्भुतः। साहित्ये त्रय एव भागवततत्त्वोक्तौ त्रयस्तस्य च भूगीर्वाणशिरोमणेरिह गुणाः के के न लोकोत्तराः"। "हरिलीलाविवेकोऽयं रामराजस्य वेश्मनि। कटके रचयाञ्चक्रे तुष्ट्यै हेमाद्रिणा सताम्। सरस्वतीश्रीमधुसूदनेन निर्व्यूढमेतद्बुधमोदनेन। जनः समस्तोऽपि रसायनन व्रजेशभक्तिं व्रजतादनेन"। "हेमाद्रिकृतिमार्गेण कुर्वन्दानान्यनेकशः" ( E. I. Vol. XIV P. 102 )।

**कुल्लूकभट्टविरचिता मन्वर्थमुक्तावली** टीका स्मृतिगतपदानि पर्यायपदै-र्व्याकुर्वाणा श्रुतिस्मृतीनां प्रमाणतयोपन्यासेनार्थं विशदयन्ती मेधातिथिगोविन्द-राजप्रभृतिटीकाकाराणां चाशयं प्रकाशयन्ती क्वचिच्च तत्रत्यान्विरोधान् परिहरन्ती विदुषां समादरपदवीमारोहति । स्वयं कुल्लूकभट्टेन विस्तरेण परिचय उपस्थापितः—

गौडे नन्दनवासिनाम्नि सुजनैर्वन्द्ये वरेन्द्रयां कुले
श्रीमद्भट्टदिवाकरस्य तनयः कुल्लूकभट्टोऽभवत् ।
काश्यामुत्तरवाहिजह्नुतनयातीरे समं पण्डितै—
स्तेनेयं क्रियते हिताय विदुषां मन्वर्थमुक्तावली ॥ १ ॥
मीमांसे बहु सेवितासि सुहृदस्तर्काः समस्ताः स्थ मे
वेदान्ताः परमात्मबोधगुरवो यूयं मयोपासिताः ।
जाता व्याकरणानि बालसखिता युष्माभिरभ्यर्थये
प्राप्तोऽयं समयो मनूक्तविवृत्तौ साहाय्यमालम्ब्यताम् ॥ ३ ॥

मन्वर्थमुक्तावल्यां मनुस्मृतेरन्ते भट्टेनान्यटीकाकाराणां स्मरणं वैमत्यपूर्वकं निर्दिष्टम्—

सारासारवचः प्रपञ्चनविधौ मेधातिथेश्चातुरी
स्तोकं वस्तु निगूढमल्पवचनाद्गोविन्दराजो जगौ ।
ग्रन्थेऽस्मिन् धरणीधरस्य बहुशः स्वातन्त्र्यमेतावता
स्पष्टं मानवमर्थतत्त्वमखिलं वक्तुं कृतोऽयं श्रमः ॥ १ ॥
प्रायो मुनिभिर्विवृतं कथयत्येषा मनुस्मृतेरर्थम् ।
दशभिर्ग्रन्थसहस्रैः सप्तशतैर्युता कृता वृत्तिः ॥
सेयं मया मानवधर्मशास्त्रे व्यधायि वृत्तिर्विदुषां हिताय ।
दुर्बोधजातेर्दुरितक्षयाय भूयात्ततो मे जगतामधीशः ॥ ३ ॥

मिथिलास्थनिबन्धकारः **श्रीदत्त उपाध्यायः** शुक्लयजुर्वेदीयवाजसनेयसंहिता-परम्परया सम्बद्धः—"अहोरात्राश्रितो धर्म इह वाजसनेयिनाम् । निबध्यते निबद्धो यो धर्मशास्त्रनिबंद्धृभिः" । "समूलबचनाभोगो मीमांसान्यायनिर्मलः । श्रीदत्तेन सतामेष आचारे दर्पणः कृतः" । **श्रीदत्तस्याचारादर्शो** नित्यकर्मप्रतिपादकः । श्रीदत्तो व्रतादीनां सारेणाकृष्टः, आह्निक इव तेन **समयप्रदीपश्च** लिखितः । साम-वेदिनां कृते **श्राद्धकल्पस्य** रचना कृता श्रीदत्तेनैव ।

मिथिलापरम्परायां **चण्डेश्वरोऽ**प्यस्ति निबन्धकारः **स्मृतिरत्नाकरस्य लेखकश्च** । धर्मसु ये निबद्धाः कृताः श्रीचण्डीश्वरमन्त्रिणा ते । "श्रीकृत्यदान-

शुद्धिपूजाविवादेषु गृहस्थकृत्ये । रत्नाकरा धर्मभुवो निबन्धाः कृतास्तुलापुरुषदेन सप्त ।। **कृत्यचिन्तामणिः, राजनीतिरत्नाकरः, दानवाक्यावली, शिववाक्यावली** च चण्डेश्वरस्य रचनाः । **विवादरत्नाकरस्य** भूमिकायां परिचयः "रसगुणभुजचन्द्रैः संमिते शाकवर्षे सहसि धवलपक्षे वाग्वतीसिन्धुतीरे । अदित तुलितमुच्चैरात्मना स्वर्णराशिं निधिरखिलगुणानामुत्तमः सोमनाथः । इति सप्तक्रियमहासान्धिविग्रहिकठक्कुरमन्त्रिवरश्रीवीरेश्वरात्मजसप्रक्रियमहासान्धिविग्रहिकठक्कुरश्रीचण्डेश्वरविरचिते विवादरत्नाकरः सम्पूर्णः"। आसीन्मैथिलतीरभुक्तिविषये मन्त्रप्रभावाद्रुतः ... देवादित्य इति त्रिलोकमहितो मन्त्रीन्दचूडामणिः । 'निर्णीय व्यवहारसागमसदृशा यः प्राड्विवाकः स्फुरन् विचारचारुधिषगो धर्मं नयत्युन्नतिम् । तेनायं गुरुसन्धिविग्रहधुरां धौरेयसंनीतिना श्रीचण्डेश्वरमन्त्रिणा विरचितः प्राज्ञेषु रत्नाकरः" । **हरिनाथस्य** निवन्धः स्मृतिसारोऽपि प्रसिद्धः ।

दाक्षिणात्यधर्मशास्त्रकाराणां मध्ये **माधवाचार्यस्य** वैशिष्टयमस्ति । पराशरमाधवीयस्य भूमिकायाम्—"श्रीमती जननी यस्य सुकीर्तिर्मायणः पिता । सायणो भोगनाथश्च मनोबुद्धी सहोदरौ ।। यस्य बौधायनं सूत्रं शाखा यस्य च याजुषी । भारद्वाजं कुलं यस्य सर्वज्ञः स हि माधवः" । स्वस्मिन् **कालनिर्णये**— "व्याख्याय माधवाचार्यो धर्मान्पाराशरानथ । तदनुष्ठानकालस्य निर्णयं वक्तुमुद्यतः" । तत्रैव "सोऽहं प्राप्य विवेकपदवीमाम्नायतीर्थे परं मज्जन् सज्जनसङ्गतीर्थनिपुणः सद्वृत्ततीर्थं श्रयन् । लब्धामाकलयन् प्रभावलहरीं श्रीभारतीतीर्थतो विद्यातीर्थमुपाश्रयन् हृदि भजे श्रीकण्ठमव्याहतम्" । श्रीमत्पूर्वपश्चिमदक्षिणसमुद्राधीश्वरकम्पराजसुतसङ्गमराजमहामन्त्रिमायणपुत्रमाधवसहोदरसायणाचार्यकृता माधवीया वृत्तिः ।

**मदनपारिजातस्य** रचना **विश्वेश्वरभट्टेन** मदनपालस्याश्रये कृता । ग्रन्थकारस्य ग्रन्थानाञ्च विषये—"श्रीपण्डितपारिजाताभिनवभोजेत्यादिबिरुदावलीविराजमानेन मदनपारिजात महार्णव-सिद्धान्तगर्भ-यन्त्रप्रकाशाद्यनेकग्रन्थकर्त्रा श्रीमहाधिराजेन श्रीमदनपालदेवेन विरचितः श्रीसूर्यसिद्धान्तविवेको वासनार्णवः समाप्तः" । सप्तभागेषु प्रणीतो **मदनरत्नस्य** विषया आसन्— उद्योताः समयाचारव्यवहारविवेचकाः । प्रायश्चित्तस्य दानस्य शुद्धिशान्त्योश्च सप्तमे । तत्रादौ राजसिंहेन सर्वधर्मोपयोगतः । तन्यते मदनेनेन्द्रेण समयस्य विनिर्णयः । इत्थं प्रतीयते यदस्य रचना मदनसिंहदेवस्याश्रयेऽभवत्—"इति कोदण्डपरशुरामेत्यादिबिरुदावलीविराजमानोन्नतमहाराजाधिराजश्रीशक्तिसिंहात्मजमहाराजाधिराजश्रीमदनसिंहदेवविरचिते मदनरत्नप्रदीपे दानविवेकोद्योते" । वीरमित्रोदये— तत्र मदनरत्नकारेण मिताक्षराकल्पतरुहलायुधादिसर्वग्रन्थान्तरेष्वलिखनान्निर्मूलत्वमस्य जङ्गमं स्थावरमिति प्राजापत्यस्य लिखनात्समूलत्वमिति दूषणमुक्त्वा ( पृ० ६२६ )

जीमूतवाहनान्तरं **शूलपाणिरस्ति** बङ्गीयशाखायामन्यद् धर्मशास्त्रलेखकः। वीरमित्रोदये—"याज्ञवल्क्यस्मृतिटीकायां शूलपाणिः। अन्योदर्यः संसृष्टी नान्योदर्यधनं गृह्णीयात्। असंसृष्टचपि सोदर एव गृह्णीयात्। न तु संसृष्टः सापत्नभ्राता (पृ० ६८२-६७३)। **रुद्रधरमिश्रस्य** श्राद्धविवेकोऽस्ति महत्त्वपूर्णग्रन्थः। विवादचन्द्रः पदार्थचन्द्रिका चेति ग्रन्थद्वयेन प्रतिष्ठितोऽस्ति **मिसरुमिश्रः**। **वाचस्पतिमिश्रो**ऽस्ति प्रसिद्धनिबन्धकारः। तस्य रचनाविषये—"शास्त्रे दश स्मृतौ त्रिंशन्निबन्धा येन यौवने। निर्मितास्तेन चरमे वयस्येष विनिर्ममे"। **नृसिंहप्रसादस्तु** विभक्तोऽस्ति द्वादशभागे—"संस्कारसारः प्रथमो द्वितीयस्त्वाह्निकाभिधः। श्राद्धसारस्तृतीयस्तु चतुर्थः कालनिर्णयः॥ पञ्चमो व्यवहाराख्यः प्रायश्चित्ताभिधो... नाशकः (सप्तमस्त्वघनाशकः)॥ अष्टमो व्रतसाराख्यः पुराणोक्ताभिधायकः। नवमो दानसाराख्यः सर्ववर्णाधिकारकः॥ दशमः शान्तिसंज्ञो वै तीर्थ एकादशस्मृतः। देवप्रतिष्ठासारश्च द्वादशः परिकीर्तितः"॥

**प्रतापरुद्रदेवविरचिते सरस्वतीविलासविषये** गर्वोक्तिः—"यथाविहितसभामण्डपान्तरे सभ्यप्राड्विवाकामात्यपुरोहितज्योतिर्विदादिसहितो विज्ञानयोगिभारुच्यपरार्कमेधातिथ्यसहायचन्द्रिकादिबहुग्रन्थैकवाक्यतापर्यालोचनवशायाततत्क्लेशो मा भूदिति सकलस्मृतिसमुच्चयमतिगम्भीरं नातिविस्तृतं प्रबन्धं प्रस्तौति।...हीने गर्वमहो नैव नैव गर्वमहोधिके। समे तु गर्वं शङ्केत न समस्ति समस्तु नः"॥ "एकेन चरितार्थत्वादितरानर्थतानयः। पूर्वप्रबन्धैर्विषयीभवेदिति ममोद्यमः"॥ अस्मिन् ग्रन्थे व्यवहारकाण्ड आचारकाण्डात् प्रथम आरब्धः। अनेकेषु ग्रन्थेषु **गोविन्दानन्दस्य** चत्वारः ग्रन्थाः लभ्यन्ते—राजकौमुदी, शुद्धिकौमुदी, श्राद्धकौमुदी, वर्षक्रियाकौमुदी च। **स्मृतितत्त्वा**दिग्रन्थानां सम्पादको **रघुनन्दनो**ऽस्ति हरिहरभट्टाचार्यस्यात्मजः। रामेश्वरभट्टस्यात्मजो **नारायणभट्टः** धर्मशास्त्रज्ञत्वेन स्थानं सुशोभितम्। सामान्यपरिचये—"नारायणं नमस्कृत्य कामदां च सरस्वतीम्। गणनाथं गुरूंश्चैव धर्मरक्षणाय वै। धर्मप्रवृत्त्यै क्रियते कलौ नारायणेन तु"।

आचारदानव्यवहारश्राद्धविवेकप्रायश्चित्तसमयादीनां व्याख्यानं **टोडरानन्देन** कृतम्। प्रशस्तिस्तु—"श्रीमान्हैन्दवपारसीकधरणीशक्रस्य राजाग्रणी राजा टोडरमल्लचण्डकिरणस्तीव्रप्रतापोदयः। लोकानामतिगाढदुर्नयतमोध्वंसाय पद्मोत्सवानातन्वन् व्यवहारनिर्णयकरश्रेणीं तनोत्युज्ज्वलाम्"। "इति श्रीमन्महाराजाधिराजश्रीटंडलवंशतिलकटोडरमल्लकारिते श्रीदैवज्ञवर्यनीलकण्ठविरचिते टोडरानन्दे ज्योतिः सुखे संहितास्कन्धे"। "यन्नाम प्रथितं हि भूमिवलये शिष्यप्रशिष्यैर्महद् भूमीपालसमूहसेवितपदाद्योकब्बरेणान्वितः। श्रीदिल्लीप्रभुणा हि टोडरविभोरानन्ददं ज्योतिषं त्रिस्कन्धं स्वकृतैः सुपद्यनिवहैस्तत्ताजिकं चाकरोत्"।

पराशरस्मृतावुपरि **विद्वन्मनोहरा** एवमनेककृतीनां रचयिता **नन्दपण्डितः** **तो**ऽस्ति माधवाचार्यस्य पथानुयायी—"धर्माधिकारिकुलकैरवकाननेन्दुश्रीरामपण्डितसुतेन विनायकेन। व्याख्यायते कलियुगोचितवर्णधर्मशास्त्रं पराशरमुखोद्गतमल्पशब्दैः॥ माधवाचार्यनिर्दिष्टव्याख्यामार्गानुसारिणः। स्खलन्नपि ( स्खलतोऽपि ? ) न मे दोषः परप्रत्ययगामिनः"। "विवृतं चैतत्पराशरस्मृतिविवृतौ विद्वन्मनोहरायां दत्तकमीमांसायाञ्चास्माभिरिति नेह प्रतन्यते" ( वैजयन्ती, विष्णुधर्मसूत्रम् १५।२२ )। अत्रैव **नन्दस्य** प्रतीताक्षराया अप्युल्लेखो विद्यते— "स्वैरिण्याः पुनः संस्काराभावश्चोपपादितोऽस्माभिः सविस्तरं मिताक्षराटीकायां प्रतीताक्षरायामिति नेहोच्यते" ( वैज०, विष्णु० १६।१ )। नन्दनस्य परिचयः— "अस्ति श्री हरिवंशवर्मनृपतिर्मङ्गोनृपस्यात्मजो माहेन्द्रान्वयमौलिभूषणमणिः सङ्कल्पचिन्तामणिः। निर्बन्धेन निबन्धराजमसृजत्तत्कीर्तिबन्धोज्ज्वलं तस्याज्ञामनु नन्दपण्डित इमं धर्माधिकारी भुवः"। पराशरस्मृतेष्टीका विद्वन्मनोहरा स्मृतिसिन्धुः। श्राद्धकल्पलता चैता नन्दपण्डितकृता। 'तत्त्वमुक्ताः समुद्धृत्य स्मृतिसिन्धोः स्वयंकृतात्। तत्त्वमुक्तावलीमेतां निर्ममे नन्दपण्डितः", "वर्षे विक्रमभास्करस्य गणिते नन्दाद्रिषड्भूमिभिः पूर्णे कार्त्तिकमासि वृश्चिकगते भानौ वृषस्थे विधौ। काश्यां केशवनायकस्य नृपतेराज्ञामवाप्य स्मृतेर्विष्णोर्व्याकृतिमाचकार बिमलां नन्दशर्मा सुधीः"।

**शूद्रकमलाकरस्य** लेखकः **कमलाकर**भट्टोऽस्त्यनेकग्रन्थानां प्रणेता। तस्य परिचयादयः—"बिन्दुमाधवपादाब्जरोलम्बीकृतविग्रहम्। ज्यायांसं भ्रातरं भट्टदिबाकरमुपास्महे"। "अधीत्य लक्ष्मणाख्येन कमलाकरसोदरात्। आचाररत्नं सुधिया यथामति वितन्यते"॥ यो भाट्टतन्त्रगहनार्णवकर्णधारः शास्त्रान्तरेषु निखिलेष्वपि मर्मभेत्ता। योऽत्र श्रमः किल कृतः कमलाकरेण प्रीतोमुनास्तु सुकृती बुधरामकृष्णः"॥ "तर्के दुस्तर्कमेधः फणिपतिभणितिः पाणिनीये प्रपञ्चे न्याये प्रायः प्रगल्भः प्रकटितपटिमा भाट्टशास्त्रप्रघट्टे। प्राभः प्राभाकरीये पथि प्रथितदुरूहान्तवेदान्तसिन्धुः। श्रौते साहित्यकाव्ये प्रचुरतरगतिधर्मशास्त्रेषु यश्च"। "येनाकारि प्रोद्भटा वार्त्तिकस्य टीका चान्या विंशतिग्रन्थमाला। श्रीरामाङ्घ्रोर्रर्पिता निर्णयेषु सिन्धुः शास्त्रे तत्त्वकौतूहले च"। "आदौ निर्णयसिन्धुस्तु वार्तिके टिप्पणी पुनः। काव्यप्रकाशगा व्याख्या दाने च कमलाकरः। शान्तिरत्नं ततः पूर्तव्रतयोः कमलाकरः। ग्रन्थो वेदान्तरत्नं च सभादर्शकुतूहलम्। प्रायश्चित्ते रत्नमेकं व्यवहारे तथापरम्। बह्वृचाह्निकमन्यच्च गोत्रप्रवरदर्पणः॥ रत्नं कर्मविपाख्यं कार्तवीर्यस्य पद्धतिः। सोमप्रयोगः शूद्राणां धर्मो रुद्रस्य पद्धतिः॥ टिप्पणी च तथा शास्त्रदीपिकालोकसंज्ञिता। मीमांसायां तथा शास्त्रतत्त्वस्य कमलाकरः॥ सर्वतीर्थविधिश्चैव भक्तिरत्नं तथोत्तमम्। रामकृष्णसुतेनेत्थं कमलाकरशर्म्मणा। द्व्यधिका विंशतीनां च ग्रन्थानां रत्नमालिका। सेवां कर्त्तुमश-

क्तेन ह्यर्पिता रामपादयोः" ।। "रामकृष्णतनूजेन कमलाकरशर्मणा । क्रियते धर्मतत्त्वानां कमलानामिहाकरः ।। व्रतदाने कर्मपाकः शान्तिपूर्ते तथैव च । आचारो व्यवहारश्च प्रायश्चित्तमथापरम् ।। शूद्रधर्मस्तीर्थविधिः परिच्छेदा दशात्र तु" ।

मीमांसापरम्परायां निबन्धकारो **नीलकण्ठो**ऽस्ति व्यवहारतत्त्वादीनां प्रणेता । **मित्रमिश्रस्य वीरमित्रोदयो**ऽस्ति प्रशस्ता कृतिः । "मा कुर्वन्तु मुधा बुधाः परिचयं ग्रन्थेषु नानाविधेषु, अत्यन्तं न हि तेषु सर्वविषयः कश्चित् क्वचिद् वर्तते । पश्यन्तु प्रणयादनन्यमनसो ग्रन्थं मदीयं त्विमं धर्माधर्मसमस्तनिर्णयविधिर्यस्मिन्नदरीदृश्यते" इति गर्वोक्तेरुद्घोषकस्य मित्रमिश्रस्य परिचयः—"स्वस्ति श्रीयुतवीरसिंहनृपतेराज्ञावशादुत्सुकः श्रीमित्राभिधपण्डितः प्रतिदर्शं कीर्त्यानिशं मण्डितः । नानानिर्णयवर्णनं व्यसनिनां संख्यावतां प्रीतिदं सम्प्राप्तव्यवहारसाधकमिमं कुर्वे प्रकाशं परम्" ( व्य० प्र० भूमिका ) । "राज्यं प्राप जुझारसिंहनृपतिर्यस्याग्रतो भूपतेस्तत्पुत्रोपि गुणार्णवः समजनि श्रीविक्रमार्को नृपः । तत्सूनुर्नरसिंहदेवनृपतिस्तं वीरसिंहं विना लेभे राज्यपरम्परासुखमिदं मन्ये महेन्द्रोऽपि किम्" ( आह्निकप्रकाशः २७ ) । "इति श्रीमत्सकलसामन्तचक्रचूडामणिमञ्जरीधिमञ्जरीनीराजितचरणकमलश्रीमहाराजाधिराजप्रतापरुद्रतनूजश्रीमन्महाराजमधुकरसाहसूनुश्रीमहाराजाधिराजचतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकासदिनकर श्रीवीरसिंहदेवोद्योजितश्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूनुसकलविद्यापारावारपारीणधुरीणजगद्दारिद्रचमहागजपारीन्द्रविद्वज्जनजीवातुश्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधाननिबन्धे व्यवहारप्रकाशे" । "वित्तं मत्वाप्यसारं वितरदविरतं याज्ञवल्क्योक्तिमुक्त्वा वारं स्मृत्यर्थसारं रचयितुमथ स प्रादिशन्मित्रमिश्रम् । उत्तंसस्तीरभुक्तेरखिलबुधगुरुः श्रीसदानन्दधीमान् श्रीभाजो मित्रमिश्राज्जगदुपकृतये बिभ्रदादेशदीपम् ।। ज्ञानानां दैन्यदोषापहमकलिमयं याज्ञवल्क्योक्तिकोशाद् दृष्ट्वा स्मृत्यर्थसारं समचिनुत यशो धर्मलक्ष्मीविहारम्" ।

**स्मृतिकौस्तुभस्य** सम्पादकस्या**नन्तदेवस्य** परिचयः—"तस्यात्मजं वैदिकशास्त्रविज्ञं सन्तोसत्कृत्प्राहुरनन्तदेवम् । बाजाह्वराज्ञो वचसा विधेयं निबन्धसारोद्धरणं त्वयेति ।। अनन्तदेवेन तदाज्ञयाथो मुदे हरेः पूर्वनिबन्धरूपम् । क्षीराम्बुधिं बुद्धिगणैर्मथित्वा प्रकाश्यतेयं स्मृतिकौस्तुभः" ( १७-१८ ) ।। "येनार्जितानि युधि सर्वरिपून् विजित्य दुर्गाणि दुर्ग्रहतराणि धनैर्युतानि । श्रीबाजबहादुरचन्द्रनृपस्य तस्य वाचा हिमाचलगतावनिदेव तुष्टचै ।। योऽनन्तदेवकृतमन्थनसन्निबन्धक्षीराब्धिजोऽथ सततं हरिणा धृतो यः । नित्यं निजे हृदि सतां प्रमुदेस्तु तस्य सर्वाब्ददीधितिरियं स्मृतिभास्करस्य" ( २, ३ ) ।

**वैयाकरणो भट्टोजीदिक्षितो**स्ति आचारेन्दुशेखराशौचनिर्णयतिथीन्दुशेखरतीर्थेन्दुशेखरप्रायश्चित्तेन्दुशेखरादिग्रन्थानां महाभाष्यप्रदीपोद्योतपरिभाषेन्दुशेखर-

वैयाकरणसिद्धान्तमञ्जूषाशब्देन्दुशेखरप्रभृतिकृतीनाञ्च लेखकः। साहित्यशास्त्र-ग्रन्थानामुपरि तस्य टीकाः प्रशस्ताः सन्ति। तस्य परिचयः--याचकानां कल्प-तरोररिकक्षहुताशनात्। नागेशः शृङ्गवेरेशरामतो लब्धजीविकः। ( रसगङ्गाधर-प्रकाशः )। अधीत्य फणिभाष्याब्धिं सुधीन्द्रहरिदीक्षितात् ( मञ्जूषा )। "गूढोक्तिग्रथितां पितामहकृतां विद्वत्प्रमोदपुरां भक्त्याधीत्य मनोरमां निरुपमा-द्रामाश्रमात्सद्गुरोः। तत्त्वज्ञानवशात्परेण कलितान्दोषान् समुन्मूलयन् व्याचष्टे हरिरेष तां फणिमतान्मालोच्य वैरेश्वरिः ( शब्दरत्ने )। "विस्तरस्तु अस्मत्कृते शब्दरत्ने मदन्तेवासिकृतशब्देन्दुशेखरादा च द्रष्टव्यः"।

**लक्ष्मीव्याख्यानं** बालम्भट्टीटीकाऽस्ति मिताक्षराया व्याख्यानम्। अस्या-चारांशोऽस्ति प्रशस्तः। परिचयस्तु—"श्रीलक्ष्मीरमणं नत्वा लक्ष्मीर्लक्ष्मीं शिशु-प्रसूः। खेरडामुद्गलापत्यगणेशापत्यकृष्णकः। महादेवःसुतस्तस्य वेदमूर्त्तिर्जटान्त-वित्। श्रौतस्मार्तार्थनिपुणो दीक्षितो राजपूजितः॥ पत्नी तस्य ह्युमारूपा साध्व्युमा तस्य कन्यका। पायगुण्डोपाख्यवैद्यनाथपत्नी पतिव्रता। मिताक्षराया विवृत्तिं तनुते सर्वसंविदे" ( बालम्भट्टी, आचार० )। "इति श्रीमन्मिताक्षरा-व्याख्याने महादेवभट्टात्मजोमाङ्गजवैद्यनाथार्धाङ्गभूतबालकजननीपायगुण्ड इत्यु-पाख्यश्रीलक्ष्मीदेवीविरचिते लक्ष्म्यभिधे आचारप्रकरणम्"।

श्रीकोंपणी विजयते रणरङ्गधीरः॥ श्रीशं नत्वा श्रीनिवासी दाक्षिणात्यो निबन्धकृत्। नागेशपादनिरतो वैद्यनाथात्मजः सुधीः॥ सुमनः कुलबुरुकसाहेबा-ल्लब्धजीविकः। लक्ष्मीसूनुर्भवान्यम्बो विप्रद्वयविलेखकः। धर्मशास्त्रिमहादेवमन्तू ( नु ? ) देवसहायकः। बालशर्माबालबुद्धिः पायगुण्डोपनामकः"।

**धर्मसिन्धुसारस्य धर्माब्धिसारस्य** वा प्रणेता **काशीनाथोपाध्यायस्य** सन्दर्भः-"नत्वार्यान् वितनोमि माधवमुखान् धर्माब्धिसारं मितम्"। "तस्यानन्ताभिधान-स्योपाध्यायस्य सुतः कृती। काशीनाथाभिधो धर्मसिन्धुसारं समातनोत्"। "दृष्ट्वा पूर्वनिबन्धान् निर्णयसिन्धुक्रमेण सिद्धार्थान्। प्रायेण मूलवचनान्युज्झित्वा लिखामि बालबोधाय"। वॉरेनहेस्टिंग्समहोदयप्रयासेन **विवादार्णवसेतुरित्यस्य** प्रणयनं सम्पादितं **जगन्नाथतर्कपञ्चाननेन**। इत्थं धर्मशास्त्रकाराणां परम्पराः प्रवाहिताः।

## स्मृतिः

स्मरणं मननं ध्यानं प्रणिधानं चिन्तनं निदिध्यासनमित्यादिस्मृतिवाचक-मिष्यते। "अनुभूतविषयाऽसम्प्रमोषः स्मृतिः ( यो० द० पा० १ सू० ११ )। श्रुतिमूलकं विधानं तु संस्मृश्य करणात् स्मृतिः। धर्मसङ्कटे नानात्वं समुद्देशनात् श्रुतिभेदमुखोद्भवा धर्मा लोके बहुविधाः; स्मृतिधर्मश्च बहुधा सद्भिराचार

इष्यते । देशधर्माः, कुलधर्माः, जातिधर्माः, गणधर्माः,शरीरकालवैषम्यादापद्धर्माश्च दृश्यन्ते । एतद्धर्मस्य नानात्वं लोकवासिभिः क्रियते । यथा महाभारते—"अथ यद्यद्यदा भावि कालयोगाद्युगादिषु, तत्तदुपपद्यते ज्ञानं लोकयात्राविधानजम् ।। श्रुतिरेषा समाख्याता तदर्थं कारणात्मना; अनाम्नायविधानाद्वै वेदा ह्यन्तर्हिता यथा ।। आम्नायवचनं सत्यमित्ययं लोकसङ्ग्रहः; आम्नायेभ्यः पुनर्वेदाः प्रसृताः सर्वतो मुखाः" । वेदवदेवास्ति स्मृत्यादिर्धर्मलक्षणम्, तस्मात्स्मृत्यादिनिन्दकोऽपि सद्भिर्बहिष्कार्यः । वेदपाठेन धर्मोऽस्ति धर्ममूलमतः श्रुतिः । वेदेन ज्ञायते धर्मस्तत्प्रमाणमपीति सः । एवं स्मृत्यादिपाठाद्यैः धर्मः सम्पद्यते, तथा ज्ञाप्यते चेति मूलत्वं प्रामाण्यं चोभयं स्थितम् ।

"अनुचारणकाले च संस्कारैरेव केवलैः । तत्कृतस्मरणैर्वाऽयं वेदोऽध्येतृषु तिष्ठति ।। तेनार्थं कथयद्भिर्या स्मृतार्था कथ्यते श्रुतिः । पठिताभिः समानाऽसौ केन न्यायेन बाध्यते ।। स्मृतिशास्त्रं च यद्येकं भवेत्कृत्स्नमवैदिकम् । तन्मुक्त्वैकं ततोऽन्यानि व्यवहारत्तामियुः ।। कठमैत्रायणीयादिपठितश्रुतिमूलिकाः । दृश्यन्ते स्मृतयः सर्वा भद्रोपनयनादिषु ।। तदा तन्मध्य पात्येकं वाक्यं किञ्चिदपस्मृतिः । मूलान्तरोद्भवं वक्तुं जिह्वानो न प्रवर्त्तते ।। बाधिता च स्मृतिभूत्वा काचिन्न्यायविदा यदा । श्रूयते न चिरादेव शाखान्तरगता श्रुतिः ।। तदा का ते मुखच्छाया स्यान्नैयायिकमानिनः । बाधावाधानवस्थानं ध्रुवमेवं प्रसज्यते" ( वा० १।३।२।४ पृ० १८७ ) । स्मृतिसुभूतविषयैव ( वृहती० पृ० १६५ ) । स्मृतिः अपि आचारं वेदवचनं वोपलभ्य अभ्यनुज्ञानायैव प्रवृत्ता ( वा० १।३।३।७ ) ।

स्मृतिः अर्थवादप्रभवा विधिप्रभवया स्मृत्या बाध्यते । यथा—'मा गमनागामदितिं वधिष्ट' इति विधिप्रभवया 'मां न हन्यात्' इत्यनया 'तद्यथैवादो मनुष्यराज आगते अन्यस्मिन् वाऽर्हति उक्षाणं वा वेहतं वा क्षदन्ते' इत्यर्थवादप्रभवया 'महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्' ( बाल० पृ० १४० ) । स्मृतिः अस्मर्यमाणावधिः । इतः प्रभृति इयं स्मृतिः प्रवृत्ता इत्यस्मर्यमाणः अवधिः यासाम् ( सु० पृ० ११६ ) । स्मृतिः आचाराद् बलीयसी (भा० १०।१।१०।४२) । स्मृतिः उपनयनमारभ्याऽऽमरणं पुरुषस्यानृतं प्रतिषेधति ( वि० ३।४।८ ) । स्मृतिः गृहीतग्राहित्वमात्रेण अप्रमाणमित्युच्यते, न तु अयथार्थतया । सा हि स्वातन्त्र्येण अर्थपरिच्छेदासमर्थाऽपि यथार्थविषयपूर्वानुभवप्रभवा तद्विषयभूतं यथावस्थितमेवार्थमवस्थापयति ( रत्नाकरः अनुमान श्लो० १५८ ) ।

स्मृतिः धर्मे प्रमाणं न भवति पौरुषेयत्वे सति मूलप्रमाणरहितत्वात्, अनुवादत्वे चाप्रामाण्यमेव इति पूर्वपक्षः । अस्मदादीनां प्रत्यक्षेषु परोक्षेषु च नानावेदेषु विप्रकीर्णस्यानुष्ठेयार्थस्यैकत्र संक्षेपेण कथनार्थकत्वात् स्मृतिर्धर्मे प्रमाणमिति

सिद्धान्तः ( वि० १।३।१ )। न च स्मृतितोऽपि स्मृतिजननात् नानुभवत्वेन स्मृतिहेतुना इति वाच्यम्। प्रथमानुभवस्यैव संस्कारद्वारा तत्र हेतुत्वात्। न च स्मरणेन अनुभवजन्यसंस्कारनाशात् स्मरणोत्तरमस्मरणप्रसङ्गः। चरमस्मृतेरेव तन्नाशकत्वाकल्पनात् ( मणि० पृ० १२ )। स्मृतिः प्रत्यक्षश्रुतिविरुद्धा न प्रमाणम् ( वा० १।३।२।३-४ )।

ननु नोपलभन्ते एवं जातीयकं ग्रन्थम् ( स्मृतिमूलभूतम् )। अनुपलभमाना अपि अनुमिमीरन्, विस्मरणमपि उपपद्यते इति। तदुपपन्नत्वात् पूर्वविज्ञानस्य त्रैवर्णिकानां स्मरताम्, विस्मरणस्य चोपपन्नत्वात् ग्रन्थानामनुमानमुपपद्यते इति प्रमाणं स्मृतिः ( भा० १।३।१।२ मृ० १६५ )। यदा तु शाखान्तरेषु विद्यन्ते एव ताः श्रुतयः तदाऽपि कस्यां शाखायां काः पठ्यन्ते इत्यस्यांशस्य विस्मरणम्। वैदिकत्वमात्रं तु प्रामाण्यसिद्धये परिपालयन्ति, तद्विशेषविज्ञानं पुनः अनौपायिकत्वात् अनादर्तव्यमेव। स्मृतिः प्रमाणं विहितस्य बाधाभावे (वा० १।३।३।५-७)। स्मृतिर्लोभमूलिका न प्रमाणम् ( भा० १।३।२।४ )। स्मृतिर्वेदमूला वैदिकमन्वादिप्रणीतत्वात्, उयनयनाध्ययनादिस्मृतिवत् ( वि० १।३।१ )।

स्मृतिः शब्दप्रयोगात् बलीयसी। प्रयोगात् स्मृतिरनुमीयते। प्रयोगो दुर्बलः स्मृतेरित्युक्तम् ( भा० २।३।२।३ पृ० ५८६-५८७ )। स्मृतिः श्रुत्या बाध्यते, अप्राप्तबाधः ( बा० ३।३।७।६४ पृ० ८६० )। समानप्रकारकस्मृतेरेव संस्कारनाशकत्वकल्पनात् समूहालम्बनादितो न एकैकगोचरक्रमिकस्मरणानुपपत्तिः। उद्बोधकसमवधानस्यैव तत्तत्स्मृतिजनकत्वात् ( मणि० पृ० १२ )। ततश्च तुल्यकक्षाऽपि यदि नाम स्मृतिर्भवेत्। तथापि नैव दोषोऽस्ति श्रुत्यर्थमनुतिष्ठताम् ( वा० १।३।२।४ पृ० १९३ )। "दुःश्रुतस्वप्नविज्ञानमूला त्वापद्यते स्मृतिः"।

न वा अदृष्टपूर्वे स्मृतिर्भवति। परोक्षश्चानुभूतश्च यस्तत्र स्मृतिरिष्यते। प्रमिते च प्रवृत्तत्वात् स्मृतेर्नास्ति प्रमाणता ( प्रति मन्वन्तरं ) चैव स्मृतिरन्या विधीयते। स्थिताश्च मनवो नित्यं कल्पे कल्पे चतुर्दश ( वा० १।३।३।७ )। या तु वेदविरुद्धेह स्मृतिः काचन दृश्यते। सा तु स्याद् भ्रान्तिमूलैव न स्पष्टश्रुतिमूलिका (वा० १।३।२।३)। वेदतुल्या हि स्मृतिः। वैदिका एव पदार्थाः स्मर्यन्ते इत्युक्तम्। सर्वा तावत् स्मृतिर्नित्यं श्रुतिमूलप्रमाणिका। स्मृतयः धर्मे प्रमाणम्। स्मृतयः धर्मे प्रमाणं न वा इति सन्देहे प्रमाणमिति सिद्धान्तः ( भा० १।३।१।१-२ )।

शाखान्तरविप्रकीर्णानि हि पुरुषान्तरप्रत्यक्षाण्येव वेदवाक्यानि पुरुषधर्मानुष्ठानक्रमेणापठितानि वेदसमाम्नायविनाशभयात् स्वरूपेणानुपन्यस्य अर्थोपनिबन्धनद्वारलभ्यानि विशिष्टध्वनिस्थानीयेन तेनैव परोक्षाण्यपि व्यज्यमानानि पिण्डीकृत्य स्मर्यन्ते ( वा० १।३।२।४ )। अनाशङ्कितविप्रलम्भभ्रान्त्यादिमूला हि अव्याहृत-

वेदमूलत्वावधारणाः स्मृतयः निर्व्याजप्रामाण्याः शक्यन्ते धर्मव्यवहाराङ्गत्वेन स्थापयितुम् ।

स्मृत्या अदृष्टार्थया दृष्टार्था बाध्यते, अप्राप्तबाधः । स्मृत्या अविगीतया विगीतस्मृतिर्बाध्यते, यथा 'न स्तेनः स्यात्' इत्यनया "तथैव सप्तमे भक्ते भक्तानि षडनश्नता । अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः" इति आप्तस्मृतिरपि । बाधस्तु अत्र दण्डाभावमात्रपरत्वमल्पदोषपरत्वं वा । स्मृत्या आचारो बाध्यते, अप्राप्तबाधः । स्मृत्या आचारो बाध्यते, यथा "मातुलस्य सुतामूढ्वा मातृगोत्रां तथैवच । समानप्रवराञ्चैव त्यक्त्वा चान्द्रायणं चरेत्" इति स्मृत्या—मातुलकन्यापरिणयनाचारो दाक्षिणात्यानाम् । स्मृत्या—आप्तस्मृत्या—अनाप्तस्मृतिर्बाध्यते । यथा—"नात्मानं घातयेत्" इति मन्वादिस्मृत्या 'केदारे पातयेद्देहम्' इति पाखण्डयादिस्मृतिः ( बाल० पृ० १३९ ) । स्मृत्या श्रुतिप्रभवया, लिङ्गादिप्रभवया, अर्थवादप्रभवया च स्मृतिर्बाध्यते, अप्राप्तबाधः ।

स्मृत्या श्रुतिप्रभवया लिङ्गप्रभवा स्मृतिर्बाध्यते, यथा—'पुत्रं प्रतिग्रहीष्यन् निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा' इत्याद्यया श्रुतिप्रभवया स्मृत्या 'न शेषो अग्ने अन्यजातमस्ति' इति दत्तकपुत्रनिषेधलिङ्गात् तत्प्रभवा 'यस्य ये बीजिनो जातास्तस्य ते नेतरस्य तु' इत्याद्या । स्मृतेः प्रमाणान्तरमूलत्वम् ( बृहती० पृ० १३० ) । स्मृतेः प्रमेयबलीयस्त्वेन अबाध्यत्वमात्रं भवति, न तु श्रुतिबाधकत्वम् । स्मृतेर्मन्त्रार्थवादमूलकत्वम् । मन्त्रेभ्यश्च अर्थवादेभ्यश्च स्मृतिमूलं विज्ञानमुत्पद्यते इति प्रत्यक्षमवगम्यते ।... ये आलोचनमात्रेण मन्त्रार्थवादान् पश्यन्ति तेषां तत् स्मृतिमूलम् । ये पुनर्निपुणतः पश्यन्ति तेषां तद्बाधितमपि च कस्यचित्स्मृतिमूलं भवति । तस्मात्तत एव स्मृतिः ( भा० ९।१।४।९ पृ० १६५३ ) ।

स्मृतेर्मूलं न दृश्यते—"शाखानां विप्रकीर्णत्वात् पुरुषाणां प्रमादतः । नानाप्रकरणस्थत्वात् स्मृतेर्मूलं न दृश्यते" ( वा० १।३।१।२ पृ० १६४ ) । स्मृतेर्वैदिकं लिङ्गं बलवत् । स्मृतेः श्रुतिविरुद्धाया अप्रामाण्यम् । अनन्यमूलिकायां च श्रुतौ मूलेऽवधारिते । विरोधेऽपि प्रमाणत्वं स्मृतेः श्रुत्या न वार्यते ( वा० १।३।३।७ पृ० १९८ ) । सदृशदर्शनात् सदृशेऽर्थान्तरे स्मृतेरुद्बोधः ( बृहती० पृ० ५४ ) । स्वातन्त्र्येण प्रामाण्यं स्मृतेस्तावन्न सम्मतम् ।

स्मृतीनामप्रमाणत्वे विगानं नैव कारणम् । श्रुतीनामपि भूयिष्ठं विगीतत्वं हि दृश्यते । विगीतवाक्यमूलानां यदि स्यादविगीतता । तासां ततोऽप्रमाणत्वं भवेन्मूलविपर्ययात् ( वा० १।३।८।२७ पृ० २८६ ) । स्मृतीनां कासाञ्चित् स्ववेदशाखागतवचनविपरीतार्थशाखान्तरवचनमूलानामधीतवाक्यविरोधो दृश्यते, तावतैव दृढतरस्मरणोपस्थापितपुरुषान्तस्य (स्मृतिमूलभूत) श्रुतिनिराकरणं न शोभते,

अध्ययनवच्च स्मृतेरपि धारणसामर्थ्यात्। स्मृतीनां धर्मादिविषयाणां वेदैकशरणत्वात् प्रामाण्यम्। स्मृतीनां प्रत्यक्षे श्रुतिविरोधे स्वरूपेणैवाप्रामाण्यमिति भाष्यकारमतम्। तत्र अनुष्ठानलक्षणमप्रामाण्यं न स्वरूपत इति वार्तिककारमतम्।

स्मृतीनां वेदमूलत्वाद् वेदतुल्यता। स्मृतीनां शाक्यादीनामप्रामाण्यम्। स्मृतीनामननुष्ठानलक्षणमप्रामाण्यम्। स्मृतीनां सर्वधर्मत्वमसति विशेषे। स्मृतीनां मन्वादीनां स्वसमानाधिकरणस्वाव्यवहितपूर्वक्षणवृत्तिज्ञानाविषयविषयकत्वरूपागृहीतग्राहित्वेन प्रामाण्यम्। तेन वेदविरुद्धानां स्मृतीनामप्रमाणता। रुद्धश्रुत्यनुमानत्वादन्यमूला हि ता यतः। तस्माद् वेदविरुद्धानां दृष्टार्थानां च हेतुभिः। स्मृतीनां न प्रमाणत्वं विहन्तव्यं मनागपि ( वा० १।३।२।३ पृ० १७२ )। न हि साक्षात् प्रमाणत्वं स्मृतीनामुपपद्यते। वेदवाक्यानुमानं हि तावदेव प्रवर्त्तते। तदर्थविषयं यावत् प्रत्यक्षं नोपलभ्यते। प्रत्यक्षे श्रूयमाणे तु न विद्येतानुमानिकम्। न हि हस्तिनि दृष्टेऽपि तत्पदेनानुमेष्यते। तावदेव स्फुरन्त्यर्थाः पुरस्तादानुमानिकाः। यावत्प्रत्यक्षशास्त्रेण मूलमेषां न कृत्यते। स्मृतौ ज्ञानस्य अनुभवत्वेन हेतुत्वम्। स्मृतिषु समाम्नायव्यपदेशाभावः ( ऋजु० पृ० ८ )।

धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात्। एवं तावत्कृत्स्नस्य वेदस्य प्रामाण्यमुक्तम्। अथेदानीं यत्र न वैदिकं शब्दमुपलभेमहि, अथ च स्मरन्ति, एवमयमर्थोऽनुष्ठातव्य एतस्मै च प्रयोजनायेति। किमसौ तथैव स्यान्न वेति। यथा अष्टकाः कर्त्तव्याः, गुरुरनुगन्तव्यः, तडागं खनितव्यम्, प्रपा प्रवर्तयितव्या, शिखाकर्म कर्त्तव्यमित्येवमादयः। तदुच्यते, 'धर्मस्य शब्दमूलत्व...।' शब्दलक्षणो धर्म इत्युक्तम्। 'चोदनालक्षणोऽर्थो धर्मः' इति। अतो निर्मूलत्वान्नापेक्षितव्यमिति। ननु ये विदुरित्थमसौ पदार्थः कर्त्तव्य इति, कथमिव ते वदिष्यन्ति अकर्त्तव्य एवायमिति। स्मरणानुपपत्त्या। न हि अननुभूतोऽश्रुतो वाऽर्थः स्मर्यते, न चास्या वैदिकस्यालौकिकस्य च स्मरणमुपपद्यते पूर्वविज्ञानकारणाभावादिति। या हि बन्ध्या स्मरेदिदं मे दौहित्रकृतमिति, न मे दुहिताऽस्तीति मत्वा न जातुचिदसौ प्रतीयासम्यगेतज्ज्ञानमिति। एवमपि यथैव पारम्पर्येण विच्छेदाद् अयं वेद इति प्रमाणमेषां स्मृतिरेवमियमपि प्रमाणं भविष्यतीति। नैतदेवम्। प्रत्यक्षेणोपलब्धत्वाद् ग्रन्थस्य नानुपन्नं पूर्वविज्ञानम्। अष्टकादिषु त्वदृष्टार्थेषु पूर्वविज्ञानकारणाभावात् व्यामोहस्मृतिरेव गम्यते। तद्यथा, कश्चिज्जात्यन्धो वदेत् स्मराम्यहमस्य रूपविशेषस्येति। कुतस्ते पूर्वविज्ञानमिति च पर्यनुयुक्तो जात्यन्धमेवापरं विनिर्दिशेत्। तस्य कुतः ? जात्यन्धरान्तरात्। एवं जात्यन्धपरम्परायामपि सत्यां नैव जातुचित्सम्प्रतीयुर्विद्वान्सः सम्यग्दर्शनमेतदिति। अतो नाऽऽदर्तव्यमेवंजातीयकमनपेक्षं स्यादिति।

एवं तावद्विध्यर्थवादमन्त्रनामधेयात्मकस्य वेदस्य धर्मं प्रत्युपयोगः

साधितः । इदानीं पौरुषेयीषु स्मर्यमाणार्थविधिषु मन्वादिप्रणीतनिबन्धनासु स्मृतिष्वनिबन्धेषु चाचारेषु चिन्ता । तत्र किञ्चिदुदाहृत्य विचारः कर्त्तव्य इत्यष्टकादिस्मरणानि मन्वादिस्थानि तद्ग्रन्थसमर्पितानि प्रमाणाप्रमाणविचारविषयत्वेनोदाह्रियन्ते । सन्देहहेतुश्चाभिधीयते । पारतन्त्र्यात्स्वतो नैषां प्रमाणत्वधारणा । अप्रमाणविकल्पस्तु द्रढिम्नैव विहन्यते । मन्वादिवचनं स्मृत्यपेक्षं स्मृतिश्च मूलप्रमाणापेक्षिणीति नैकस्यापि वेदवन्निरपेक्षप्रामाण्यनिश्चयः । यतस्तु वेदवादिनामेवाविभागेनाविच्छिन्नपारम्पर्यपरिग्रहदाढर्च्यमतो नाप्रामाण्याध्यवसानामीति युक्तः सन्देहः ।

तत्र पूर्वपक्षवादी वदति तेषां प्रामाण्यमपेक्षतव्यमिति । कुतः ? पूर्वविज्ञानविषयं विज्ञानं स्मृतिरुच्यते । पूर्वज्ञानाद्विना तस्याः प्रामाण्यं नावधार्यते । सर्वस्मरणानि हि प्रत्यक्षाद्यवगम्यतेऽर्थे तदानुरूप्येणोपजायमानान्यर्थं समर्थयन्ति । तदिहाष्टकादीनां स्वर्गादिसाध्यसाधनभावं प्रत्यक्षादीनि तावन्न गृह्णन्ति इति साधितम् । शब्दोऽपि यथाऽग्निहोत्रादिषु प्रत्यक्षेणोपलभ्यते नैवं मन्त्राः । 'प्रत्यक्षानुपलब्धे च शब्दे सद्भावकल्पना । धर्मास्तित्वप्रमाणाद्धि विप्रकृष्टतरा भवेत्' । शब्दस्य तावदेकमेव प्रत्यक्षं प्रमाणम् ।

स चेत्तेनावगम्यमानोऽप्यस्तीत्युच्यते ततो वरं धर्मास्तित्वमेव निष्प्रमाणकमभ्युपगतमिति । 'न वाऽऽनुमानमप्यस्मिन्नष्टकाश्रुतिकल्पने । न हि स्मृतिस्तया व्याप्ता दृष्टाऽन्यद्वाऽनुमायकम् । यथैव धर्मे सम्बन्धादर्शनान्न किञ्चिल्लिङ्गं क्रमते तथाऽष्टकादिश्रुतावपि । 'न वाऽऽगमेन तद्बोधो नित्येन कृतकेन वा । विस्रम्भः कृतकेनाऽस्ति नित्यो नैवोपपद्यते । यद्यप्यैन्द्रियकत्वादृष्टकादिस्मृतीनां पौरुषेयागमत्वं सम्भवति तथापि विप्रलम्भभूयिष्ठत्वादश्रद्धेयवचनेषु पुरुषेष्वनध्यवसानम् । दृश्यन्ते ह्यनागमिकानप्यर्थानागमिकत्वाध्यारोपेण केचिदद्यत्वेऽप्यभिदधानाः । तेन मन्वादिभिरपि किमष्टकाश्रुतीरुपलभ्य वेदमूलत्वं स्वनिबन्धानां प्रतिज्ञातुमुतानुलभ्यैव श्रद्धेयवाक्यत्वार्थमिति दुष्टपुरुषाकुलितचेतसां भवति सन्देहः । तावता च प्रामाण्यविघातः । नित्यस्य वचनस्यादिमत्स्मरणमूलप्रतिपादने व्यापार एव नास्ति ।

न च लिङ्गानि स्वयं मूलत्वं प्रतिपद्यन्ते । विधिशून्यत्वात् । न च मूलान्तरं न्यायगतं सूचयन्ति । अन्यपरत्वात् । न च सर्वेषां स्मृतिप्रणयिनामविगानम् । येन पौरुषेयागमबलादुपलब्धपूर्वश्रुतिमूलत्वं स्यात् । 'न च विज्ञायते वाक्यं कीदृशं तैर्निरूपितम् । अर्थवादादिरूपाद्धि पश्यामो भ्राम्यतो बहून्' ।

यदि ह्येतदेकान्तेन गम्येत यथाविधिवाक्यान्येव मन्वादिभिरुपलब्धानि इति । ततः काऽपि कल्पना स्यादद्यत्वेऽप्यन्यपरार्थवादादिवचनेभ्योऽपि भ्राम्यन्तः पुरुषा दृश्यन्ते । तेन तेष्वप्याशङ्का भवति । मृतसाक्षिकव्यवहारवच्च प्रलीनशाखा-

मूलत्वकल्पनायां यस्मै यद्रोचते स तत्प्रमाणी कुर्यात् । तस्मान्नाऽऽगमेनापि मूलोपलब्धिः । 'उपमानं तु अदृष्टेऽर्थे सदृशे चानिरूपिते । नैवेष्टमिति तेनापि न मूलश्रुतिसाधनम् ।। अर्थापत्त्याऽपि यत्किञ्चिन्मूलमित्यवगम्यते । तच्चाप्रमाणपक्षेऽपि भ्रान्त्यादि न विरुध्यते ।। यदि हि श्रुतिकल्पनेन विना स्मृतिर्नोपपद्यते ततः सम्यङ्मूला स्यात् । सम्भवति तु स्वप्नमूलत्वेन तेनानैकान्त्यादर्थापत्तेः सामान्यतो दृष्टस्य वाऽनवकाशः । तस्मादनुपलब्धिगोचरापन्नायां श्रुतौ सत्स्वपि मूलान्तरेष्वभिप्रेतमूलाभावान्निर्मूलत्वाभिधानम् ।

ननु ये विदुरेवमिति कर्त्तव्यताक एवं फलकश्चासौ पदार्थः कर्त्तव्य इति । अथवा ये कर्त्तव्योऽसावितीत्थं विदुस्ते तथा विजानन्तस्तादृशाः कथमिवास्मान्विप्रलब्धुं न कर्त्तव्योऽसाविति वदेयुः । नन्वन्ये एवं वदन्ति कर्त्तव्य इत्यन्ये न वा कर्त्तव्य इत्याहुः । कथमन्यत्वं यदा तेषामप्येवमयं स्मर्यत इति कथिते भवत्येवं प्रतिपत्तिः । अथवा ये मन्वादयो विदुरकर्त्तव्योऽयं पदार्थ इति कथमिव ते विनाऽपराधेन लोकं वञ्चयितुं वदिष्यन्ति कर्त्तव्य एवायमिति । 'स्मरणानुपपत्त्या इति ।

ये तावन्मन्वादिभ्योऽर्वाञ्चः पुरुषास्तेषां यज्ज्ञानं तत्तावदनवगतपूर्वार्थत्वान्न स्मृतिः । मन्वादीनामपि यदि प्रथमं किञ्चित्प्रमाणं सम्भाव्यते ततः स्मरणं भवेन्नान्यथा । कस्मात्पुनः पुत्रं दुहितरं वाऽतिक्रम्य वन्ध्यादौहित्रोदाहरणं कृतम् । स्थानतुल्यत्वात् । पुत्रादिस्थानीयं स्मरणमतश्च यथा दुहितुरभावं परामृश्य दौहित्रस्मृतिं भ्रान्तिं मन्यते तथा मन्वादिभिः प्रत्यक्षायसम्भवपरामर्शादष्टकादिस्मरणं मिथ्येति मन्तव्यम् । 'यथैव पारम्पर्येणाविच्छेदादयं वेदः' इति वाक्यानुमानाभिप्रायेणोक्तम् ।

इतरस्त्वर्थस्यैवाविच्छेदस्मरणमपमाहेति मत्वा पुनर्निर्मूलत्वमाह । वेदः पुनः सविशेषः प्रत्यक्षगम्यस्तत्र घटादिवदेव पुरुषान्तरस्थमुपलभ्य स्मरन्ति । तैरविस्मृतमुपलभ्यान्येऽपि स्मरन्तोऽन्येभ्यस्तथैव समर्पयन्तीत्यनादिता । सर्वस्य चाऽऽत्मीयस्मरणात्पूर्वमुपलब्धिः सम्भवतीति न निर्मूलता । शब्दसम्बन्धव्युत्पत्तिमात्रमेव चेह वृद्धव्यवहाराधीनम् । प्रागपि हि वेदशब्दादन्यवस्तु विलक्षणं वेदान्तरविलक्षणं वाऽध्येतृस्थमृग्वेदादिरूपं मन्त्रब्राह्मणादिरूपाणि चान्यविलक्षणान्युपलभ्यन्ते । सर्वेषां चानादयः संज्ञा इति तद्द्वारेणोत्तरकालमपि गम्यमानानां प्रत्यक्षत्वं साधितम् ।

ननु अष्टकादिषु पुरुषान्तरस्थेष्वपि कुम्भकारक्रियास्विव किञ्चिद्विज्ञानमूलमस्ति । यदि हि कर्मस्वरूपमात्रं स्मर्येत ततः पाकादि तदिन्द्रियैरन्याननुतिष्ठतो दृष्ट्वा परे स्मरेयुः । यतस्त्विह स्वर्गादिसाध्यसाधनसम्बन्धः स्मर्यते । नासौ पुरुषान्तरेषूत्पद्यमानः कैश्चिद्दृश्यत इत्यन्धपरम्परान्यायेनाप्रमाणता । सर्वस्यानादिव्यवहारोपन्यासेन वेदवत्प्रसिद्ध्यभिमानो भवत्यतोऽन्धपरम्परा निदर्शनम् ।

वेदे हि प्रामाण्यस्यानादित्वमिहाप्रामाण्यश्च । कथम् ? 'यो यो ग्रहीता जात्यन्धः स स्वयं नोपलब्धवान् । स्वातन्त्र्येणागृहीते च प्रामाण्यं नावतिष्ठते ।।" तादृशं वाऽष्टकादिस्मरणम् । न च चोदना मूलभूतोपलभ्यते । न चाननुभूतसम्बन्धाऽनुमातुं शक्यते । यदि च वेदादुपलभ्य स्मृतयः प्रवर्तिताः स्युस्ततोऽर्थस्मरणवदित उपलभ्यायं मन्वादिभिः प्रणीत इत्यपि पारम्पर्येण स्मर्येत । स्यादेतत् । अर्थस्मरणेन कृतार्थानां निष्प्रयोजनं मूलस्मरणमनादराद् भ्रष्टमिति । तदयुक्तम् । न हि यत्कृतं प्रामाण्यं तदेव विस्मर्तुं युज्यते । अर्थस्मृतेः स्वतः प्रामाण्याभावात् । सर्वे पुरुषास्तावदेव जानान्ति यथामूलज्ञानाद्विना प्रामाण्यं न निश्चीयते इति ते कथमिव तत्रानादरं कुर्युः ।

अपि च—"येन यत्नेन मन्वाद्यैरात्मवाक्यं प्रपाठितम् । कस्मात्तेनैव तन्मूलं चोदना न समर्पिता" ।। यदि हि तैरप्यर्थमात्रमेवान्येभ्योऽधिगतं न वेदो दृष्ट इति ततस्तत्पूर्वकेष्वप्ययमेव पर्यनुयोग इति निर्मूलसम्प्रदायत्वप्रसङ्गात् निर्मूलत्वान्न मुच्यते । यदि तु प्रलीनशाखामूलता प्रकल्पयेत् ततः सर्वासां बुद्धादिस्मृतिनामपि तद्द्वारं प्रामाण्यं प्रसज्यते । यस्यैव च यदभिप्रेतं स एव तत्प्रलीनशाखामस्तके निक्षिप्य प्रमाणी कुर्यात् ।

अथ विद्यमानशाखागता एवैतेऽर्थास्तथाऽपि मन्वादय इव सर्वे पुरुषास्तत एवोपलप्स्यन्ते । युक्ततरा च स्वाध्यायाध्ययनविधेः साक्षाद्वेदादेव प्रतीतिरिति स्मृतिप्रणयनवैयर्थ्यं स्यात् । न च तद्विज्ञायते । कीदृशाद्वाक्यादिदं मन्वादिभिः प्रतिपन्नं किं विधिपरादुतार्थवादरूपादिति । पश्य—'महताऽपिप्रयत्नेन तमिस्रायां परामृशन् । कृष्णशुक्लविवेकं हि न कश्चिदधिगच्छति' ।। न च मन्वादिवचनाद् वेदमूलत्वं निश्चिनुमः । ते हि निर्मूलमपि विप्रलम्भादिहेतोरुक्त्या लोकं वञ्चयितुमेवं वदेयुः । तस्मादप्रमाणम् ।

अपि वा कर्तृसाम्मान्यात् प्रमाणमनुमानं स्यात् । अपि वेति पक्षो व्यवर्त्यते । प्रमाणं स्मृतिः । विज्ञानं हि तत्किमित्यन्यथा भविष्यति ? पूर्वविज्ञानमस्य नास्ति, कारणभावादिति चेत् । अस्या एव स्मृतेर्द्रढिम्नः कारणमनुमास्यामहे । तत्तु नानुभवनम्, अनुपपत्त्या । न हि मनुष्या इहैव जन्मन्येवं जातीयकमर्थमनुभवितुं शक्नुवन्ति । जन्मानुभूतं च न स्मर्यते । ग्रन्थस्त्वनुमीयेत, कर्तृसाम्यात् स्मृतिवैदिकयोः । तेनोपन्नो वेदसंयोगस्त्रैवर्णिकानाम् । ननु नोपलभन्ते एवंजातीयकं ग्रन्थम् । अनुपलभमाना अप्यनुमिमीरन्, विस्मरणमप्युपपद्यते इति । तदुपपन्नत्वात् पूर्वविज्ञानस्य त्रैवर्णिकानां स्मरतां विस्मरणस्य चोपपन्नत्वाद् ग्रन्थानुमानमुपपद्यते इति प्रमाणं स्मृतिः ।

अष्टकालिकाङ्गाश्च मन्त्रा वेदे दृश्यन्ते । 'या जनाः प्रतिनन्दन्ति' इत्येवमादयः । तथा प्रत्युपस्थितनियमानामाचाराणां दृष्टार्थत्वादेव प्रामाण्यम् । गुरो-

रनुगमात्प्रीतो गुरुरध्याययिष्यति ग्रन्थग्रन्थिभेदिनश्च न्यायात् परितुष्टो वक्ष्यतीति। तथा च दर्शयति 'तस्माच्छ्रेयांसं पूर्वं यन्तं पापीयान् पश्चादन्वेति' इति। प्रपास्तडागानि च परोपकाराय, न धर्मायेत्येवावगम्यते। तथा च दर्शनम् 'धन्वन्निव प्रपा असि' इति। तथा 'स्थलयादेकं परिगृह्णन्ति' इति च। गोत्रचिह्नं शिखाकर्म, दर्शनञ्च 'यत्र बाणाः सम्पतन्ति कुमारा विशिखा इव' इति। तेन ये दृष्टार्थास्ते तत एव प्रमाणम्। ये त्वदृष्टार्थास्तेषु वैदिकशब्दानुमानमिति।

सर्वथा तावन्मन्वादिप्रणीताः सन्निबन्धनाः स्मृतयः शेषाणि च विद्यास्थानानि स्वार्थं प्रतिपादयन्त्युपलभ्यन्ते। मन्वादीनां चाप्रत्यक्षत्वात्तदविज्ञानमूलमदृष्टं किञ्चिदवश्यं कल्पनीयम्। तत्र च––भ्रान्तेरनुमाद्वाऽपि पुंवाक्याद्विप्रलम्भनात्। दृष्टानुगुण्यसाध्यत्वाच्चोदनैव लघीयसी। सर्वत्रैव चादृष्टकल्पनायां तादृशं कल्पयितव्यं यद्दृष्टं न विरुणद्धि न वाऽदृष्टान्तरमासञ्जयति। तत्र भ्रान्तौ तावत्सम्यङ्निबन्धशास्त्रविरोधापत्तिः सर्वलोकाभ्युपगतदृढप्रामाण्यबाधश्च। इदानीन्तनैश्च पुरुषैरपि भ्रान्तिर्मन्वादीनामनुर्वर्तिता। तत्परिहारोपन्यासश्च मन्वादीनामित्यनेकदृष्टकल्पना। अनुभवेऽपि स एव तावदनुभवः कल्पयितव्यः। पुनश्चेदानींतन सर्वपुरुषजातिविपरीतसामर्थ्यकल्पना, मन्वादेस्तच्चैतत्सर्वज्ञवादे निराकृतम्। पुरुषवाक्यपराऽप्यन्धपरम्परया निराकृता। न हि निष्प्रतिष्ठप्रमाणात्मलाभो दृश्यते। तथा विप्रलम्भेऽपि तत्कल्पना। विप्रलिप्सा प्रयोजनं लोकस्य च तत्र भ्रान्तिस्तस्याश्चेयन्तं कालमनुवृत्तिरित्याद्याश्रयणीयम्। उत्पन्नस्य च दृढस्य प्रत्ययस्य प्रामाण्यनिराकरणाद् दृष्टविरोधः। तस्मात् सर्वेभ्यश्चोदनाकल्पनैव ज्यायसी। तत्र हि तन्मात्रादृष्टाभ्युयगमः। शेषास्तु महाजनपरिग्रहादयः सर्वेऽनुविधीयन्ते। सम्भाव्यते च मन्वादीनां चोदनापूर्वविज्ञानकारणत्वेन। तदर्थमेवाऽऽह 'तेनोपपन्नो वेदसंयोगस्त्रैवर्णिकानाम्' इति।

यानि पुनरनुपपन्नवेदसम्भवनानां म्लेच्छादीनामतीन्द्रियार्थस्मरणानि तेषां तेषां मूलकल्पनावेलायामेव चोदनासम्भावनापदं नाऽऽरूढेति मिथ्यात्वहेतुभूतचतुष्टयपारिशेष्यादप्रमाणत्वम्। संभावितायां पुनश्चोदनायां कारणान्तरनिषेधे कृते निर्मूलत्वासम्भवात् परिशेषसिद्धं चोदनामूलत्वम्। यत्तु किमर्थं चोदना नोपलभ्यन्ते इति। तत्र केचिदाहुः। नित्यानुमेयास्ता न कदाचिदुच्चार्यन्ते। यथा लिङ्गादि कल्पिताः। कथमनुचारितानां मूलत्वोपपत्तिरिति चेत्। नैष दोषः। पाठविच्छेदवत्पारम्पर्येण स्मरणात्तत्सिद्धेः। यथैव हि ग्रन्थः सम्प्रदायादविच्छिन्नोऽस्तित्वं भजते तथैव प्रतिज्ञया नित्यानुमेयश्रुतिसम्प्रदायाविच्छेदसिद्धिः। तत्त्वमुक्तम्। अन्धपरम्परान्यायादेव हि चोदना न कथमपि उच्चार्यते तस्याः सर्वपुरुषप्रत्यक्षादिप्रसराभावाद्दुर्लभतरमस्तित्वम्। तथा च स्मृतेरपि सैव बन्ध्यादौहित्रतुल्यता। लिङ्गादीनां तु नित्यत्वान्नित्यमनुच्चरितश्रुत्यनुमानकारणत्वमविरुद्धम्।

तेन वरं प्रलीनश्रुत्यनुमानमेव। न च प्रलयो न सम्भाव्यते। दृश्यते हि प्रमादालस्यादिभिः पुरुषक्षयाच्चाल्पविषयत्वम्। न चैवं सति यत्किञ्चित्प्रमामापत्स्यते। शिष्टत्रैवर्णिकदृढस्मरणान्यथानुपपत्तिलभ्यत्वात् श्रुत्यनुमानस्य।

यद्वा विद्यमानशाखागतश्रुतिमूलत्वमेवास्तु। कथमनुपलब्धिरिति चेदुच्यते—शाखानां विप्रकीर्णत्वात्पुरुषाणां प्रमादतः। नानाप्रकरणस्थत्वात् स्मृतेर्मूलं न दृश्यते। यत्तु किमर्थं वेदवाक्यान्येव नोपसङ्गृहीतानीति। सम्प्रदायविनाशभीतेः। विशिष्टानुपूर्व्या व्यवस्थितो हि स्वाध्यायोऽध्येतव्यः श्रूयते। स्मार्तश्च आचाराः केचित् क्वचित् पुरुषमेवाधिकृत्याऽऽम्नायन्ते। ये तु क्रतुप्रकरणाम्नाताः केनचिन्निमित्तेनोत्कृष्यमाणाः पुरुषधर्मतां भजन्ते। यथा "मलवद्वाससा सह न संवदेत्" "तस्मान्न ब्राह्मणायावगुरेत्" इत्येवमादयः। तत्र यदि तावत्तान्येव वाक्यान्युद्धृत्यापयेयुस्ततः क्रमान्यत्वात् स्वाध्यायविधिविरोधः स्यात्। अनेन च निर्देशेनान्येऽप्यर्थवादोद्धारेण विधिमात्रमधीयीरन् कर्मोपयिकमात्रं वा। तत्र वेदप्रलयः प्रसज्येत्।

नचावश्यं मन्वादयः सर्वशाखाध्यायिनः। ते हि प्रयत्नेन शाखान्तराध्यायिभ्यः श्रुत्वार्थमात्रं स्ववाक्यैरविस्मरणार्थं निबध्नीयुः। न च वाक्यविशेषो ज्ञायते। यथैव हि स्मृतेर्दृढत्वाद्भ्रान्ति मूलत्वं नास्त्येवमर्थवादमूलत्वमपि। शक्नुवन्ति हि ते विध्यर्थवादौ विवेक्तुम्। तत्र स्मृतेर्विध्यात्मकत्वात् प्रकृतितादात्म्यानुमानलब्धास्पदेऽर्थवादपूर्वकत्वं निष्प्रमाणकम्। अपि च 'वेदोऽखिलो धर्ममूलम्' स सर्वोऽभिहितो वेदे, इति च स्वयमेव स्मर्तृभिरात्मा बद्ध्वा समर्थितस्तच्चैतन्नियोगतस्तत्कालैः कर्तृभिर्बुद्धिकारित्वादुपलब्धमतः सिद्धं वेदद्वारं प्रामाण्यम्।

यस्तु कर्तृसामान्यात् स्वतन्त्रमेव प्रामाण्यं वेदमूलत्वं वाऽनुमानेन साधयति तस्यार्थकामानुसारिभिर्दृष्टार्थैराचारैरनेकान्तः। श्रूयमाणश्रुत्यधीनप्रामाण्यापत्तेश्च विरुद्धता तस्मादर्थापत्तिरेवात्राव्यभिचारादुपचारात् पश्चान्मानादनुमानत्वेनोक्ता। 'अस्या एव स्मृतेर्द्रढिम्नः' इति। दृढत्वात्कारणानुमानमथवा दृढत्वस्य। 'न हि मनुष्या इहैव' इति। निःशेषसंस्कारच्छिदा मरणेनान्तरित्वात्कर्मफलसम्बन्धानुसंधानासंभवेनोच्यते। 'स्मृतिवैदिकपदार्थयोः कर्तृसामान्यादुपपन्नो वेदसंयोगस्त्रैवर्णिकानाम्' इति। चोदनामूलसंभावनापदलाभार्थम्। 'विस्मरणमप्युपपद्यते' इति। दृश्यते ह्यद्यत्वेऽप्यर्थस्मरणं ग्रन्थनाशश्च। यदा तु शाखान्तरेषु विद्यन्ते एव ताः श्रुतयस्तदाऽपि कस्यां शाखायां काः पठ्यन्ते इत्यस्यांशस्य विस्मरणम्। वैदिकत्वमात्रन्तु प्रामाण्यसिद्धये पालयन्ति। तद्विशेषज्ञानं पुनरनौपयिकत्वादनादृतव्यमेव। 'तथा प्रत्युपस्थितनियमानाम्' इति। आगतमागतं निमित्तं प्रति ये नियम्यन्ते वृद्धवयः प्रत्युत्थानादयस्तेषाम्। 'दृष्टार्थत्वादेव प्रामाण्यम्' इति।

एतद् युक्तम्। कुतः—"धर्मं प्रति यतोऽत्रेदं प्रामाण्यं प्रस्तुतं स्मृतेः। तस्मात् कृष्यादिवत्तेषामुपन्यासो न युज्यते"। न हि यावत्—किञ्चिदाचरणं तस्य सर्वस्य मूलमिह प्रमाणी क्रियते। धर्मजिज्ञासाधिकारात्। यदि च गुर्वनुगमादीनां केवलं दृष्टार्थत्वमेव स्यात्ततः कृष्यादिवद्धर्मं प्रत्यप्रामाण्यमेवेति नोपन्यसितव्याः। स्यादेतदप्रमाणत्वेनैषामुपन्यास इति। न। तथा सति 'हेतुदर्शनाच्च' इत्यत्रोदाहर्तव्या भवेयुः। तस्मात् श्रेयांसमिति च दर्शनं निष्फलम्। न च नियोगतः शास्त्रादृते प्राप्तिः। शक्यते हि उपायान्तरेणापि सामदानादिना गुरुरध्यापनादीनि कारयितुम्। तत्रास्ति नियमविधेरवकाशः।

सर्वत्र च यथाकथञ्चिल्लोकपङ्क्तिसहायोपादानात्मरक्षणप्रीत्युत्पादादिका दृष्टार्थता भाष्यकारोक्ता शक्या वक्तुम्। न चावघातादीनां वृष्टिकामयागादीनां च दृष्टार्थानामवैदिकत्वम्। तस्मात् सत्यपि दृष्टार्थत्वे संभाव्यते वेदमूलत्वं नियमादृष्टसिद्धेरनन्यप्रमाणाकत्वात्। अतश्च गुर्वनुगमनादेर्नैमित्तिकत्वादक्रियायां प्रत्यवायः करणे च न भवति। दृष्टं च प्रीतो गुरुरध्यापयिष्यतीतित्येवमादि निष्पद्यते। नियमाच्चाविघ्नसमाप्त्यर्थापूर्वसिद्धिः। एवं च 'आचाराद्गृह्यमाणेषु तथा स्यात्' ( ६।२।१०।३१ ) इत्यत्र सकृदसकृद्वाऽनुष्ठानमिति विचारो युक्तः। इतरथा तु दृष्टार्थवशेनैवोदकपानादिवदवधारणं स्यात्।

यत्तु भाष्यकारेण दृष्टार्थत्वादेव प्रामाण्यामित्युक्तं तत्पूर्वपक्षवाद्यतिशयार्थम्। एतदुक्तं भवति, यास्तावददृष्टार्थाः स्मृतयस्ताः कथञ्चिदप्रमाणी कुर्याद् भवान्, इमाः पुनर्गुर्वनुगमनादिविषयाः कथमिवाप्रमाणं भविष्यन्तीति। सभाप्रपादीनां यद्यपि विशेषश्रुतिः नैव कल्प्यते तथापि परोकारश्रुत्यैव समस्तानुपादानात्प्रामाण्यम्। तस्माच्छ्रेयांसमित्यश्वे गर्दभेनानुगन्तव्ये सिद्धवच्छ्रेयसामूनैरनुगमनं दर्शयति। यथा धन्वनि निरुदके कृताः प्रपाः परेषामुपकुर्वन्त्येवं त्वमिति देवतास्तुतिपरे वाक्ये सिद्धवत्प्रपा सद्भावस्तस्याश्च पारार्थ्यं दृश्यते। गोत्रचिह्नं शिखाकर्म तत्राप्याचारनियमस्यादृष्टार्थत्वान्नैव तावन्मात्रमेव प्रयोजनम्। शक्यं ह्युपायान्तरेणापि गोत्रं स्मर्तुं तेनान्य एवाभिप्रायः। कर्माङ्गभूतं तावच्चतुरवत्तपञ्चावत्तादिविभागसिद्धयर्थमवश्यं स्मर्तव्यं गोत्रम्। अतश्च तच्चिह्नार्थमपि तावच्छिखाकल्पस्मृतेः प्रामाण्यमस्तु। तन्नियमादृष्टस्य त्वेकान्ते नैवानन्यगतित्वात्पुरुषार्थता सेत्स्यतीति। तेन सर्वस्मृतीनां प्रयोजनवती प्रामाण्यसिद्धिः। तत्र यावद्धर्ममोक्षसंबन्धि तद्वेदप्रभवम्।

यत्त्वर्थसुखविषयं तल्लोकव्यवहारपूर्वकमिति विवेक्तव्यम्। एषैवेतिहासपुराणयोरप्युपदेशवाक्यानां गतिः। उपाख्यानानि त्वर्थवादेषु व्याख्यातानि। यत्तु पृथिवीविभागकथनं तद्धर्माधर्मसाधनफलोपभोगप्रदेशविवेकाय किञ्चिद्दर्शनपूर्वकं किञ्चिद्वेदमूलम्। देशकालपरिमाणमपि लोकज्योतिः शास्त्रव्यवहार-

सिद्धयर्थं दर्शनगणितसम्प्रदायानुमानपूर्वकम्। भाविकथनमपि त्वनादिकालप्रवृत्तयुगस्वभावधर्माधर्मानुष्ठानफलविपाकवैचित्र्यज्ञानद्वारेण वेदमूलम्। अङ्गविद्यानामपि क्रत्वर्थपुरुषार्थप्रतिपादनं लोकवेदपूर्वकत्वेन विवेक्तव्यम्।

तत्र शिक्षायां तावद्यद्वर्णकरणस्वरकालादिप्रविभागकथनं तत्प्रत्यक्षपूर्वकम्। यत्तु तथाविज्ञानात्प्रयोगे फलविशेषस्मरणम्। 'मन्त्रो हीनः स्वरतो वर्णतो वा' इति च प्रत्यवायस्मृतिस्तद्वेदमूलम्। एवं कल्पसूत्रेष्वर्थवादादिमिश्रशाखान्तरविप्रकीर्णन्यायलभ्यविध्युपसंहारफलमर्थनिरूपणं तत्तत्प्रमाणमङ्गीकृतम्। लोकव्यवहारपूर्वकाश्च केचिदृत्विगादिव्यवहाराः सुखार्थं हेतुत्वेनाऽऽश्रिताः। व्याकरणेऽपि शब्दापशब्दविभागज्ञानं साक्षाद्वृक्षादिविभागवत्प्रत्यक्षनिमित्तम्। साधुशब्दप्रयोगात्फलसिद्धिरपरशब्देन तु फलवैगुण्यं भवतीति वैदिकम्।

छन्दोविचित्यामपि गायत्र्यादिविवेको लोकवेदयोः पूर्ववदेव प्रत्यक्षः। तज्ज्ञानपूर्वकप्रयोगात्तु फलमिति श्रौतम्। तथा चानिष्टं श्रूयते 'यो ह वाऽविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण यजति याजति वा' इत्यादि। ज्योतिःशास्त्रेऽपि युगपरिवर्तनपरिमाणद्वारेण चन्द्रादित्यादिगतिविभागेन तिथिनक्षत्रज्ञानमविच्छिन्नसम्प्रदायगणितानुमानमूलं ग्रहसौस्थ्यदौस्थ्यनिमित्तपूर्वकृतशुभाशुभकर्मफलविपाकसूचनं तद्गतशान्त्यादिविधानद्वारेण वेदमूलम्। एतेन सामुद्रवास्तुविद्यादिव्याख्यातम्। ईदृशा वा विधयः सर्वत्रानुमतव्याः। ईदृशे गृहशरीरादिस्तन्निवेशे सत्येतदेतच्च प्रतिपत्तव्यमिति।

मीमांसा तु लोकादेव प्रत्यक्षानुमानादिभिरविच्छिन्नसम्प्रदायपण्डितव्यवहारैः प्रवृत्ता। नहि कश्चिदपि प्रथमेतावन्तं युक्तिकलापमुपसंहर्तुं क्षमः। एतेन न्यायविस्तरं व्याचक्षीत्। "विषयो वेद वाक्यानां पदार्थैः प्रतिपाद्यते। ते च जात्यादिभेदेन सङ्कीर्णौ लोकवर्त्मनि॥ स्वलक्षणविविक्तैस्तैः प्रत्यक्षादिभिरञ्जसा। परीक्षकार्पितैः शक्याः प्रविवेक्तुं न तु स्वतः॥ वेदोऽपि न्यायविस्तरात्"॥ तथा—'यस्तर्केणानुसंधत्ते स वेद नेतरः' इत्यादिभिस्तर्कविशुद्धिराश्रिता। प्रायेण च मनुष्याणामधर्मभूमित्वात्तज्ज्ञानप्रतिबद्धाः प्रतिभास्तेषु कुमार्गेषु प्रवर्तन्ते। तत्रलोकार्थवादोपनिषत्प्रसूतैस्तर्कशास्त्रैः सर्वविप्रतिपत्तिमुखप्रदर्शनम्। तदुपपत्तयस्तद्बलाबलपूर्वकं च निश्चयद्वारं कथ्यते। अन्यथा पुनः—"प्रतिभान्त्यः स्वयं पुंसामपूर्वा ह्युपपत्तयः। भ्रान्ति बहुमताः सत्यः कुर्युरज्ञानबोधनात्"। सर्वासु प्रदर्शितासु स्वातन्त्र्येण विशोधयन्तः कश्चिदुत्सृज्यान्याः प्रमाणी करिष्यन्ति।

यदपि च नित्यानित्यपृथक्त्वैकत्वसामान्यविशेषव्यतिरेकाद्येकान्तप्रतिपादनं तदपि पक्षपातादृतेऽन्यवरांशिनिरूपणाशक्तेः। अवश्यं च सर्वात्मकवस्तु युगपद्

ग्रहणासंभवात्तद्भागोपनिपातिपदविषयविवेकार्थमेकैकनिरूपणमादरेण कर्त्तव्यम्। अन्यथा येऽनवाप्तसामान्यविशेषाद्युपपत्तयः पुरुषास्ते पदप्रतिपाद्यं निष्कृष्टं वस्तुभागं लोकमात्रालोचनेन नैवाध्यवस्येयुः। मन्त्रार्थवादोपात्ताश्च स्तुतिनिन्दास्तत्तन्नित्यानित्यैकपृथक्त्वैकान्तमाश्रित्य तत्र तत्र विधिप्रतिषेधाङ्गत्वेन प्रवर्तमानाः पक्षपातप्रतिपादितवस्तुधर्मवैचित्र्यादृते निरालम्बनाः स्युः। याश्चैनाः प्रधानपुरुषेश्वरपरमाणुकारणादिप्रक्रियाः सृष्टिप्रलयादिरूपेण प्रतीतास्ताः सर्वा मन्त्रार्थवादज्ञानादेव दृश्यमानसूक्ष्मस्थूलद्रव्यप्रकृतिविकारभावविदर्शनेन च द्रष्टव्याः।

प्रयोजनञ्च स्वर्गयागाद्युत्पाद्योत्पादकविभागज्ञानम्। सर्गप्रलयोपवर्णनमपि दैवपुरुषकारप्रभावप्रविभागदर्शनार्थम्। सर्वत्र हि तद्बलेन प्रवर्तते तदुपरमे चोपरमतीति। विज्ञानमात्रक्षणभङ्गनैरात्म्यदिवादानामप्युपनिषदर्थवादप्रभवत्वं विषयेष्वात्यन्तिकं रागं निवर्तयितुमित्युपपन्नं सर्वेषां प्रामाण्यम्। सर्वत्र च यत्र कालान्तरफलत्वादिदानीमनुभवासंभवस्तत्र श्रुतिमूलता। सांदृष्टिकफले तु वृश्चिकविद्यादौ पुरुषान्तो व्यवहारदर्शनादेव प्रामाण्यमिति विवेकसिद्धिः।

वैदिकैः स्मर्यमाणत्वात्तत्परिग्रहदाढर्च्यतः।
संभाव्यवेदमूलत्वात् स्मृतीनां वेदमूलता॥

चोदनैव धर्मे प्रमाणमिति धर्मस्य वेदैकमूलत्वात् मूलभूतवेदरहितं स्मृत्यादिकं धर्मप्रमाणत्वेन अनपेक्ष्यम्। शिष्टत्रैवर्णिकपरिगृहीतानां मन्वादिस्मृतीनां धर्माधर्मयोः प्रामाण्यमस्ति न वेति सन्देहे सन्मूलकत्वनिश्चायकाभावादप्रामाण्यम्। न ह्यत्र प्रत्यक्षादिमूलम्, तेषां धर्माधर्मयोरप्रवृत्तेः। वेदस्य च प्रत्यक्षपठितस्यानुलम्भात्। उपलम्भे वा स्मृतिप्रणयनवैयर्थ्यात्। प्रत्यक्षपठितस्य इदानीमुच्छेदस्य च वैदिकैर्यथार्थपरिगणनं शाखानां मात्रामात्रापरित्यागेन पाल्यमानतया कल्पयितुमशक्तेः। न च नित्यानुमेयो वेदो मूलम्। स्मृतेर्मूलव्याप्तत्वेऽपि वेदव्याप्तत्वाभावेन अनुमानापत्तेः। मनोरप्यनुमेयत्वकल्पनेऽन्धपरम्परापत्तेश्च। अतश्च सन्मूलत्वासंभवात् भ्रान्त्यादिमूलत्वेनाप्रामाण्यम्। इति प्राप्ते, शिष्टानामद्य यावदविगीतपरम्परया ज्योतिष्टोमादिष्विव अष्टकाकलञ्जभक्षवादिष्वपि धर्मत्वेन अधर्मत्वेन च परिग्रहात् मन्वादीनां त्रैवर्णिकत्वेन वेददर्शनसंभवाच्च सन्मूलकत्वमेव युक्तम्, न तु भ्रान्त्यादिमूलकत्वम्। तत्कारणस्य अद्य यावद् ज्ञानस्य च कल्पने गौरवाच्च। श्रुतिश्च प्रत्यक्षपठितैव मूलम्। न च स्मृतिप्रणयनवैयर्थ्यम्। शाखान्तरोपसंहारेण अर्थवादार्थोद्धारेण न्यायसिद्धार्थकथनेन च स्मृतिप्रणयनस्य सार्थक्यात्। अतो मूलश्रुत्युपस्थापकतयैव धर्माधर्मप्रमाणप्रयोजकत्वं स्मृतीनामिति सिद्धम्।

## श्रुत्यादीनां विरोधे पारदौर्बल्यम्

श्रुतेः परप्रमात्वोक्तेः पारदौर्बल्यमिङ्गितम् । स्मृत्याचारात्मतुष्टीनां क्रमात् श्रुत्याद्यपेक्षया । अथैतेषां विरोधे बलाबलम् । तत्र श्रुत्योर्विरोधेऽगृह्यमाणविशेषत्वाद् द्वयोरपि तुल्यबलत्वम्, अनुष्ठाने परं विकल्पः; यथा षोडशिग्रहणाऽग्रहणादौ । एवं स्मृत्योराचारयोरपि विरोधे द्रष्टव्यम्, तुल्यन्यायत्वात् । श्रुत्यस्मृत्योर्विरोधे तु श्रुतिर्बलीयसी, निरपेक्षत्वात् । स्मृतेस्तु मूलभूतवेदानुमानसापेक्षत्वेन विलम्बितत्वाद् दुर्बलत्वम्, यथा 'औदुम्बरीं स्पृष्ट्वोद्गायेद्' 'औदुम्बरी सर्वा वेष्टयित्वा' इति । स्मृत्याचारयोर्विरोधे स्मृतिर्बलीयसी, स्मृतेः साक्षात् श्रुत्यनुमापकत्वात्; आचारस्तु स्मृतिद्वारा तदनुमापकत्वाद् दुर्बलः; यथा "सूर्याविदे वधूवस्त्रं दद्याद्" इति स्मृत्या 'चतुर्थोऽह्नि वधूवस्त्रपरिधानाद्याचारो विरुद्धः'; 'सूर्याः' तद्देवत्या ऋचः, तथा मातुलकन्यापरिणयनं "मातुलस्य सुतामुढ्वा इति स्मृतिविरुद्धम्" इत्यादि वीरमित्रोदये ( परिभाषाप्र० पृ० २५ ) द्रष्टव्यम् ।

"श्रुत्या सह विरोधे तु बाध्यते विषयं विना; व्यवस्थयाऽविरोधेन कार्योऽन्यत्र परीक्षकैः" ।। अयं पाठो वीरमित्रोदयधृतः; मूले तु सम्प्रति मुद्रितोपलभ्यमानपुस्तके—"व्यवस्थयाऽविरोधेन कार्यो यत्नः परीक्ष्यते" इति पाठो दृश्यते; "व्यवस्था त्वविरोधेन कार्याऽन्यत्र परीक्षकैः" इत्येवं पाठस्तु सङ्गतो ज्ञायते । "विषयं विना" कुत्राऽपि विषयेऽवकाशमन्तरेणयतः 'स्मृतिर्बाध्यते' बाधितार्थिका भवति, अतस्तस्या अविरोधेन व्यवस्थया अविरोधे व्यवस्थायै, 'अन्यत्र' विरुद्धश्रुत्यदर्शनकालादौ, विषयः 'कार्यो' बाधितार्थकत्वं कल्पनीयमिति 'कल्पतरुस्वरसः' । 'व्यवस्थया' इति चतुर्थ्यर्थे तृतीया ।

शबरानुसारिणस्तु—'विषयं विना' विषयबाधाद्विरुद्धा स्मृतिर्बाध्यते एव; यत्र तु विषयान्तरकल्पनं सम्भवति, तत्राह—'व्यवस्थेत्यादि' इत्याहुः ।

भाट्टास्तु—विरुद्धा स्मृतिः 'विषयं बिना' श्रुतिमूलकत्वसन्देहेन प्रामाण्यसन्देहाद्विषयनिश्चयं विना, 'बाध्यते' तत्प्रतिपाद्यार्थाऽनुष्ठानं बाध्यते, इत्यर्थमाहुः इत्यादि वीरमित्रोदये ( परि० प्र० पृ० २८ ) द्रष्टव्यम् ।

स्मृत्या सहाविरोधेन चार्थशास्त्रस्य साधनम् ।
परस्परविरोधे तु अर्थशास्त्रस्य बाधनम् ।।

अदृष्टार्थे विकल्पस्तु व्यवस्था-सम्भवे सति ।
स्मृतिशास्त्रादिकल्पस्तु आकांक्षापूरणे सति ।।

वेदमूले स्थितं त्वेतदनुष्ठानं क्रिया सती ।
एवं शक्यविधानं तु न्यायो ह्येवं व्यवस्थितः ।।

( भवि० पु० ब्रा० प० १८१।१७-२० )

वृद्धयाज्ञवल्क्यवचनम्—

भूयांसो धर्मवक्तारः उत्पन्ना भाविनस्तथाः ।
निधानं सर्वधर्माणां वेद एव तु शाश्वतः ॥

"श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी; अविरोधे सदा कार्यं स्मार्त्तं वैदिकवत्सता" इति मन्वर्थमुक्तावल्याम् ( मनु० २।१३ ), गौतमधर्मसूत्र (१।५)-हरदत्तवृत्तौ, वीरमित्रोदयस्मृतिचन्द्रिकादिषु च धृतं लोगाक्षिजाबालवचनम्। "विरोधे त्वनपेक्षं स्याद् असति ह्यनुमानम्; हेतुदर्शनाच्च" ( मीमांसाद० ( १।३।३-४ ) ।

"अथ यत्र श्रुतिविरोधः, तत्र कथम् ? यथा औदुम्बर्याः सर्ववेष्टनम् "औदुम्बरी स्पृष्ट्वा उद्गायेत्" इति श्रुत्या विरुद्धम् । अष्टाचत्वारिंशद् वर्षाणि वेदब्रह्मचर्यचरणम्, 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इत्यनेन विरुद्धम् । 'क्रीतराजको भोजयान्न' इति 'तस्मादग्नीषोमीये संस्थिते यजमानस्य गृहेऽशितव्यम्' इत्यनेन विरुद्धम् । तत्प्रमाणं कर्त्तृसामान्याद् इति । अतश्च सर्ववेष्टनादि नादरणीयम् ।

लोभाद्वास आदित्समाना औदुम्बरीं कृत्स्नां वेष्टितवन्तः केचित्; तत्स्मृतेर्बीजम् । बुभुक्षमाणाः केचित् क्रीतराजकस्य भोजनमाचरितवन्तः; अपुंस्त्वं प्रच्छादयन्तश्चाष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरितवन्तः; तत एषा स्मृतिरित्यवगम्यते ।

अधिकरणान्तरं वा । "वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति" इति; "यूपहस्तिनो दानमाचरन्ति" इति । तत्कर्त्तृसामान्यात् प्रमाणम्, प्राप्ते ब्रूमः—अप्रमाणं स्मृतिः, अत्राऽन्यन्मूलम्; लोभादाचरितवन्तः केचित्, तत एषा स्मृतिः" इति शाबरभाष्यम् । "वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति, इत्यग्नीषोमप्रणयनार्थं विसर्जनहोमकालसम्बन्धियजमानाच्छादनं वासोऽध्वर्युर्हरति, मुक्तकमेवैतदावरणानुमितं स्मरणम् । एवं "यूपहस्तिनो दानमाचरन्ति" इति यूपपरिव्याणशाटकं 'यूपहस्ति' शब्देन निर्दिश्य अध्वर्युहर्तव्यतया आचाराऽनुमितयैव स्मृत्या प्रतिपादयन्ति ।

तत्राऽपि वेदमूलत्वकल्पना नोपपद्यते, कर्त्तृसामान्यतः प्राप्ताः, लोभसम्भवपूर्वकात् ।

ऋत्विजो हि प्रयोगमध्यपतितं यजमानं प्रक्रान्तकर्माऽवश्यसमापनीयत्वनिबद्धसमाप्त्युत्तरकालभावि स्वाच्छन्द्यं च विदित्वा कार्यवत्तावेलायामेव खलगतधान्यविभागव्यावृत्तभृतकवत्स्वयमुत्पाद्योत्पाद्य तानि तान्यादेयकानि श्रद्धाजनकार्थवादपुरःसरं याचन्ते । प्रत्यक्षश्रुतिविहितदेयान्तरनिदर्शनव्यामोहितश्च यजमानः श्रद्दधानतया तथैव प्रतिपद्य तेभ्यः प्रयच्छतीति तैरेषा स्मृतिः प्रवर्तिता स्यादित्या-

शङ्कायां वेदमूलत्वं नाऽनुमीयते, पूर्ववच्च लोभपूर्वकत्वकल्पनमेवोपपन्नमिति निर्णयात्सन्देहनिवृत्तिः ( मी० त० वा० १।३।४ )।

स्पष्टमेतत्—विरोधे त्वनपेक्षं स्यादसति ह्यनुमीयते; विरोधे वेदवाक्येन, तेन चार्थेऽनधिष्ठिते। इतश्च न प्रमाणत्वं मूलहेत्वन्तरेक्षणात्; व्यभिचारे हि नोत्पत्तिरर्थापत्त्यनुमानयोः। क्वचिद् भ्रान्तिः, क्वचिल्लोभः, क्वचिद्युक्तिविकल्पनम्। प्रतिभाकारणत्वेन निराकर्त्तुं न शक्यते। स्मृतेश्च श्रुतिभग्नायाः कारणान्तरसम्भवः, न तु श्रुतेः; अतः सैव तद्विरोधे हि बाध्यते। न च दृष्टकारणयोः स्मृत्याचारयोः प्रामाण्यम्। उक्तञ्च भट्टपादैः—"विरुद्धा च, विभीता च, दृष्टार्था, दृष्टकरणा, स्मृतिर्न श्रुतिमूला स्याद्, या चैषा सम्भवश्रुतिः" इति मेधातिथिमनुभाष्ये ( २।१८ ) धृतं कुमारिलवचनम्।

"न तु दृष्टार्थे, अवरदौर्बल्यात्" ( गौ० ध० सू० १।५ ) 'दृष्टार्थे, दृष्टप्रयोजने, वेदविदां 'स्मृतिशीले धर्ममूले न भवतः' 'अवरदौर्बल्यात्'—'दृष्टो धर्मव्यतिक्रमः, साहसञ्च महताम्' ते च धर्मव्यतिक्रमसाहसे, स्पष्टमेव लोभक्रोधादिमूलके भवतः; एवञ्चैतादृशयोरपि दृष्टकारणप्रयोजनयोः स्मृतिशीलयोः धर्ममूलत्वे सति, तत्प्रामाण्येन विकर्मसु धर्मबुद्धचो प्रवर्त्तमानः 'अवरो' जनः दौर्बल्यात् सीदति। तथा च श्रूयते—"तेषां तेजोविशेषेण प्रत्यवायो न विद्यते; तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरको जनः" इति। तस्मान्महता वेदविदामपि 'धर्मव्यतिक्रमसाहसरूपे, दृष्टार्थे दृष्टलोभक्रोधादिकारणे च स्मृतिशीले न धर्मे प्रमाणमित्यर्थः। "विषयाऽभिलाषेण यदयुक्तमाचर्यते, स धर्मव्यतिक्रमः क्रोधाद्यभिभवेन यत्क्रियते, तत्साहसम्" तदेतद्द्वयमपि 'हेतु दर्शनात्' न धर्ममूलं भवितुमर्हतीति।

मस्करिभाष्ये तु—"न तु दृष्टार्थेऽवरदौर्बल्यात्" इत्येवं सूत्रपाठमुपादाय दृष्टार्थो, दृष्टप्रयोजनम्, तस्मिन् दृष्टप्रयोजने, 'शीलं' धर्ममूलं न भवति। तथा च वसिष्ठः "अगृह्यमाणकारणो धर्मः" इति। "अवरदौर्बल्यात्" न वरः अवरः निकृष्टः, द्वेषाद्यभिभूतः अपरमार्थज्ञान इत्यर्थः, तस्य "दौर्बल्यात्" धर्माधर्मपरिज्ञानशक्तेरित्यर्थः। एतच्चानेन ज्ञापितं भवति—महतामपि तद्विदां कदाचिदभिवोऽस्तीति, शरीरवतः प्रियाप्रिययोरवश्यं भावित्वात्, तस्मादेतेषां रागादिदोषेणाऽभिभवः, तावत्तेषामाचारोऽपि न ग्राह्यः; तथा वसिष्ठः—"शिष्टः पुनरकामात्मा" इति इत्थं व्याख्यातम्।

"तुल्यबलविरोधे विकल्पः" ( गौ० ध० सू० १।१।५ ) इति कर्त्तव्यं निर्दिष्टम्। तुल्यप्रमाणप्रापितयोरेवंजातीयकयोरर्थयोर्विकल्पः। तद्वेदं वेत्यन्ततरस्वीकारः। न समुच्चयोऽसम्भवात्। प्रकर्षबोधने तु श्रुतिस्मृतिविरोधे स्मृत्यर्थो नाऽऽदरणीयः। अतुल्यत्वात्, इति हरदत्तः। अत्र जाबालिराह:—

श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी ।
अविरोधे सदा कार्यं स्मार्तं वैदिकवत्सता ॥

उक्त गौतमधर्मसूत्रोपरि मस्करिभाष्यञ्च श्रुत्यादीनां बलाबलविवेके द्रष्टव्यम् ।

स्मृत्याचारविरोधे, वा साम्यवैषम्यसंशये, समा विप्रतिपत्तिः स्यान्मूलसाम्याद् द्वयोरपि । यथैव श्रुतिमूलत्वात्स्मरणानां प्रमाणता, तथैवेति न विशेष आचाराणां बलाबले । यद्वाऽऽचारबलीयस्त्वं फलस्थात्प्रतीयते, फलाद्वियुज्यमानं हि प्रमाणं दुर्बलीभवेत् । श्रुतिराचारमूलं या फलस्था सोपलभ्यते । यावद्धि स्मरणं दृष्ट्वा श्रुतिरन्याऽनुमास्यते । तावल्लब्धात्मकः पूर्वमाचारः प्रतितिष्ठति । प्रतिष्ठितस्य बाधश्च कीदृशः परिकल्प्यताम् ? तेनाऽऽचारबलीयस्त्वं समत्वं वेह युज्यते । स्मृतीनां वा बलीयस्त्वं शास्त्रस्था वेति वर्ण्यते । उभयोः श्रुतिमूलत्वं न स्मृत्याचारयोः समम् । सप्रत्ययप्रणीता हि स्मृतिः सोपनिबन्धना । तथा श्रुत्यनमानं निर्विघ्नमुपजायते ।

अत्र मीमांसातर्कवार्त्तिकमतम्—

आचारात्तु स्मृतिं ज्ञात्वा श्रुतिर्विज्ञायते ततः ।
तेन द्व्यन्तरितं तस्य प्रामाण्यं विप्रकृष्यते ॥
न ह्येकैव श्रुतिः काचिदाचाराणां प्रवर्त्तिका ।
भिन्नाभिर्विप्रकीर्णत्वान्नाऽस्मृताभिः प्रवर्त्तनम् ॥
नैकप्रपाठकेनैव ह्याचाराणां विधिस्थितिः ।
क्वचित्प्रकरणे कश्चित्कथञ्चिदुपलभ्यते ॥
एवञ्च विप्रकीर्णानामशक्यैकत्र संहृतिः ।
स्मृतिमेव दृढां मुक्त्वा तस्मादस्त्यन्तरा स्मृतिः ॥
तेनाऽऽचारः स्मृतिं यावदनुमातुं प्रवर्त्तते ।
स्मृतिर्लब्धश्रुतिस्तावद्धर्ममेवाऽवधारयेत् ॥
तस्मादाचारेभ्यः स्मृतिर्बलीयसी सन्निबन्धनेति । ( १।३।९ )

स्मृतिचन्द्रिकाधृतं चतुर्विंशतिवचनञ्च—

स्मृतेर्वेदविरोधेन परित्यागो यथा भवेत् ।
तथैव लौकिकं वाक्यं स्मृतिबाधात्परित्यजेत् ॥

स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः । यत्र स्मृत्योः परस्परतो विरोधस्तत्र विरोधपरिहाराय विषयव्यवस्थापनादावुत्सर्गापवादादिलक्षणो न्यायो बलवान् समर्थः । स च न्यायः कुतः प्रत्येतव्य इत्यत आह—व्यवहारत इति । व्यवहाराद्वृद्धव्यवहारादन्वयव्यतिरेकलक्षणादवगम्यते । अतश्च प्रकृतो-

दाहरणेऽपि विषयव्यवस्थैव उक्ता। एवमन्यत्राऽपि विषयव्यवस्था विकल्पादि यथासम्भवं योज्यम्।

अर्थशास्त्रानु बलवद्धर्मशास्त्रमिति स्थितिः। 'धर्मशास्त्रानुसारेण' इत्यनेनैवौशनसाद्यर्थशास्त्रस्य निरस्तत्वाद् धर्मशास्त्रान्तर्गतमेव राजनीतिलक्षणमर्थशास्त्रमिह विवक्षितम्। अर्थशास्त्रधर्मशास्त्रस्मृत्योर्विरोधे अर्थशास्त्राद्धर्मशास्त्रं बलवदिति स्थितिमर्यादा। यद्यपि समानकर्तृकतया अर्थशास्त्रधर्मशास्त्रयोः स्वरूपगतो विशेषो नास्ति तथापि प्रमेयस्य धर्मस्य प्राधान्यादर्थस्य चाप्राधान्याद्धर्मशास्त्रं बलवदित्यभिप्रायः। धर्मस्य च प्राधान्यं शास्त्रादौ दर्शितम्। तस्माद्धर्मशास्त्रार्थशास्त्रयोर्विरोधेऽर्थशास्त्रस्य बाध एव न विषयव्यवस्था, नापि विकल्पः। किमत्रोदाहरणम्? न तावत्—'गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्। आततायिनमायान्तं हन्यादेवाविचारयन्॥ नाततायिवधे दोषो हन्तुर्भवति कश्चन। प्रच्छन्नं वा प्रकाशं वा मन्युस्तं मन्युमृच्छति ( मनु० ८।३५०-५१ )। तथा—आततायिनमायान्तमपि वेदान्तगं रणे। जिघासन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्", इत्याद्यर्थशास्त्रम्, 'इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम्, कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते, ( मनु० ११।८९ ) इत्यादि धर्मशास्त्रम्, तयोर्विरोधे धर्मशास्त्रं बलवदिति युक्तम्। अनयोरेकविषयत्वासम्भवेन विरोधाभावान्न बलाबलचिन्ताऽवतरति।

तथा हि—शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते ( मनु० ८।३४८ ) इत्युपक्रम्य 'आत्मनश्च परित्राणे दक्षिणानां च संगरे। स्त्री विप्राभ्युपपत्तौ च घ्नन्धर्मेण च दण्डभाक् ( मनु० ८।३४९ ) इत्यात्मरक्षणे दक्षिणादीनां यज्ञोपकरणानां च रक्षणे युद्धे च स्त्रीब्राह्मणहिंसायां च आततायिनमकूटशस्त्रेण घ्नन्न दण्डभाक् इत्युक्त्वा तस्यार्थवादमित्युच्यते गुरुं वा 'बालवृद्धौ वा' इत्यादि। गुर्वादीनत्यन्तावध्यानप्याततायिनो हन्यात्किमुतान्यानिति। 'वा' शब्दश्रवणात् 'अपिवेदान्तपारगम्' इत्यत्र 'अपि' शब्दश्रवणान्न गुर्वादीनां वध्यत्वप्रतीतिः; 'नाततायिवधे दोषोऽन्यत्र गोब्राह्मणवधात्' इति सुमन्तुवचनाच्च, 'आचार्यं च प्रवक्तारं मातरं पितरं गुरुम्। न हिंस्याद्ब्राह्मणान्गाश्च सर्वांश्चैव तपस्विनः' ( मनु० ४।१६२ ) इति वचनाच्च। आचार्यादीनामाततायिनां हिंसाप्रतिषेधेनेदं वचनमर्थवन्नान्यथा; हिंसामात्रप्रतिषेधस्य सामान्यशास्त्रेणैव सिद्धत्वात्। 'नाततायिवधे दोषो हन्तुर्भवति कश्चन' इत्येदपि ब्राह्मणादिव्यतिरिक्तविषयमेव। यतः "अग्निदोगरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारहरश्चैव षडेते ह्याततायिनः" यथा—"उद्यतासिविषाग्निश्च शापोद्यतकरस्तथा। आथर्वणेन हन्ता च पिशुनश्चापि राजनि॥ भार्यातिक्रमचारी च रन्ध्रान्वेषणतत्परः। एवमाद्यान्विजानीयात्सर्वानेवाततायिनः॥ इति सामान्येनाततायिनो दर्शिताः। अतश्च ब्राह्मणादय आततायिनश्च आत्मादित्राणार्थं हिंसा-

नभिसन्धिना निवार्यमाणाः प्रमादाद्यदि विवद्येरंस्तत्र लघुप्रायश्चित्तं राजदण्डाभावश्चेति निश्चयः। तस्मादन्यदिहोदाहरणं वक्तव्यम्। तदुच्यते—'हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः। अतो यतेत तत्प्राप्तौ (आ० ३५९) इत्यर्थशास्त्रम्। 'धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः' (व्य० १) इति धर्मशास्त्रम्। तयोः कस्मिंश्चिद्विषये विरोधो भवति। यथा—'चतुष्पाद्व्यवहारे प्रवर्त्तमान एकस्य जयेऽवधार्यमाणे मित्रलब्धिर्भवति, न धर्मशास्त्रमनुसृतं भवति। अन्यस्य जयेऽवधार्यमाणे धर्मशास्त्रमनुसृतं भवति, मित्रलब्धिर्विपरीता, तत्रार्थशास्त्राद् धर्मशास्त्रं बलवत्। अत एव 'धर्मार्थसन्निपाते अर्थग्रहिण एतदेव' इति प्रायश्चित्तस्य गुरुत्वं दर्शितमापस्तम्बेन। एतदेवेति द्वादशवार्षिकप्रायश्चित्तं परामृश्यते।

नारदस्मृतौ—

धर्मशास्त्रार्थशास्त्राभ्यामविरोधेन यत्नतः।
संपश्यमानो निपुणं व्यवहारगतिं नयेत्॥
यथा मृगस्य विद्धस्य व्याधो मृगपदं नयेत्।
कक्षे शोणितपातेन तथा धर्मपदं नयेत्॥
यत्र विप्रतिपत्तिः स्याद् धर्मशास्त्रार्थशास्त्रयोः।
अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेत्॥
अर्थशास्त्रविरोधे तु युक्तियुक्तो विधिः स्मृतः।
व्यवहारो हि बलवान् धर्मस्तेनाऽवधीयते॥
सूक्ष्मो हि भगवान् धर्मः परोक्षो दुर्विचारणः।
अतः प्रत्यक्षमार्गेण व्यवहारगतिं नयेत्॥ (१।३७–४१)

धर्मशास्त्रापेक्षया अर्थशास्त्रदुर्बलत्वं मत्स्यपुराणेऽपि सूचितम्; तद्यथा—

ततः प्रसाद्य देवेशः क्षमस्वेति दितिं पुनः।
अर्थशास्त्रं समास्थाय मयैतद् दुष्कृतं कृतम्॥
क्षयातिशयदुःखं च नार्थशास्त्रस्य चादरः।
धर्मैकवासना लोकाः पृथौ राज्यं प्रशासति॥
(७।६३; १०।३२)

अन्यत्राऽपि—

प्रत्यक्षेणानुमानेनाऽबाधेनाऽऽप्राज्ञयाऽपि वा।
यो ज्ञापितः, स सत्याख्यः परमार्थःपरिकीर्तितः॥
आज्ञां राज्ञामृषीणाञ्च मातपित्रोर्गुरोस्तथा।
निर्हेतुकं ग्रहीतव्या स्थितिः सभ्यजनस्य सा॥

वस्तुस्थितौ तु केषाञ्चिन्न शब्दानां प्रमाणता।
शब्दैरुक्तेऽप्यनुक्तेऽपि वस्तुन्यनुभवः प्रमा ॥
यन्नाऽनुभूयते साक्षात्, न चैवाऽप्यनुमीयते।
तादृशे शब्दमात्रोक्ते सन्देहो व्याहृतिर्न चेत् ॥
व्याहृते तु न सन्देहः, सद्यश्चाऽसत्यताग्रहः।
सत्याराधनशीलानां सभ्यानां स्थितिरीदृशी ॥
'जलमानय पुत्रेति' विधेयाऽऽज्ञा पितुर्द्रुतम्।
वाराणसी हिमाद्रावित्यपरीक्ष्य न मन्यते ॥
'बन्ध्यापुत्रशिरोवर्ति हेमपात्रं गृहान्तरे।
तदानयेति' व्याघातग्रस्तं सद्य उपेक्ष्यते ॥
( शतश्लो० ध० शा० अ० २ श्लो० ४–१० )

वस्तुतस्तु श्रुतिप्रमाणे धर्मः स्यात्[1]। श्रुतिप्रत्यक्षयोः किं बलवानिति प्रश्नः—"दृष्टं श्रुतमनन्तं हि यत्र संशयदर्शनम्"। केचित्प्रत्यक्षं प्रबलं मत्वा हैतुकास्तार्किकाः परमाण्वादीन् प्रज्ञया नित्यत्वादिगुणयुक्तान् कल्पयन्तः सत्यमबाधितं वाङ्मनसातीतं वस्तु नास्तीत्येव निश्चयं कुर्वन्ति। परैर्वैदिकैरुपालब्धाः सन्तस्तत्र संशयं कुर्वन्ति—

प्रत्यक्षं कारणं दृष्टवा हैतुकाः प्राज्ञमानिनः।
नास्तीत्येवं व्यवस्यन्ति सत्यं संशयमेव च ॥
तदयुक्तं व्यवस्यन्ति बालाः पण्डितमानिनः।
अथ चेन्मन्यसे चैकं कारणं किं भवेदिति ॥
शक्यं दीर्घेण कालेन युक्तेनातन्द्रितेन च।
प्राणयात्रामनेकां च कल्पमानेन भारत ॥
तत्परेणैव नान्येन शक्यं ह्येतस्य दर्शनम्।
हेतूनामन्तमासाद्य विपुलं ज्ञानमुत्तमम् ॥

---

१. या हि चोदना धर्मस्य लक्षणम्, सा स्वविषये नियुञ्जानैव पुरुषमवबोधयति ( ब्र० सू० १।१।१ शाङ्करभाष्यम् )। धर्मजिज्ञासायां···श्रुत्यादय एव प्रमाणम् ( ब्र० सू० १।१।२ शां० भा० )। प्रत्यक्षं श्रुतिः, प्रामाण्यं प्रत्यनपेक्षत्वात्; अनुमानं स्मृतिः, प्रामाण्यं प्रति सापेक्षत्वात् ( ब्र० सू० १।३।२८ शां० भा० )। श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ( रघु० २।२ )।

शास्त्रस्था वा तन्निमित्तत्वात् (मी० द० १।३।९)। कः पुनरत्र निश्चयः? यः शास्त्रस्थानां स शब्दार्थः; के शास्त्रस्थाः? शिष्टाः, तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च; तेन, शिष्टा निमित्तं श्रुतिस्मृत्यवधारणे ( मीमांसाशाबरभाष्यम् १।३।९ )।

ज्योतिः सर्वस्य लोकस्य विपुलं प्रतिपद्यते ।
न त्वेव गमनं राजन् हेतुतो गमनं तथा ॥
अग्राह्यमानिबद्धं च वाचा संपरिवर्जयेत् ।
( महा० अनु० १६२।५-९ )

यदा ज्योतिः प्रत्यक् चैतन्यं विपुलमनन्तं प्रतिपद्यते तदैव भवति हेतुस्तर्काद्यद्वस्त्वधिगमनं तत् अधिगमनं न भवति । तर्केणापि हि शून्यप्रधानपरमाणवः कारणत्वेन प्रतिपाद्यन्ते तच्च अग्राह्यम् । यतः यद्वाचा वेदेन अनिबद्धमप्रतिपादितं तद्वर्जयेदिति न्याय ईक्षतेर्नाशब्दमिति प्रतिपादनात् । एतेन सर्वप्रमाणापेक्षया श्रुतेर्बलीयस्त्वं सिद्धम् ।

लोकतः सिद्धिरनुमानमागमपूर्वः शिष्टाचारश्चेति प्रमाणानि । एतेषां मध्ये किं प्रबलम् ? शिष्टाचारस्य दुरात्मभिरुच्छेदितत्वाद् वेद एव मुख्यं प्रमाणं प्रत्यक्षानुमानयोर्व्यभिचारित्वेनाविश्वसनीयत्वादित्याह—

धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः ।
संस्था यत्नैरपि कृता कालेन प्रतिभिद्यते ॥
अधर्मो धर्मरूपेण तृणैः कूप इवावृतः ।
ततस्तैर्भिद्यते वृत्तं शृणु चैव युधिष्ठिर ॥
अवृत्ता ये तु भिन्दन्ति श्रुतित्यागपरायणाः ।
धर्मविद्वेषिणो मन्दा इत्युक्तस्तेषु संशयः ॥
अतृप्यन्तस्तु साधूनां च एवागमबुद्धयः ।
परमित्येव सन्तुष्टास्तानुपास्व च पृच्छ च ॥
कामार्थौ पृष्ठतः कृत्वा लोभमोहानुसारिणौ ।
धर्म इत्येव सम्बुद्धस्तानुपास्व च पृच्छ च ॥
न तेषां भिद्यते वृत्तं यज्ञाः स्वाध्यायकर्म च ।
आचारः कारणं चैव धर्मश्चैकस्त्रयं पुनः ॥
( महा० अनु० १६२।११-१६ )

प्रमाणभेदात् प्रमेयैर्धर्मैरपि त्रिभिर्भवितव्यम्—

वेदः प्रत्यक्षमाचारः प्रमाणं तत्त्रयं यदि ।
पृथक्त्वं लभ्यते चैषां धर्मश्चैकस्त्रयं कथम् ॥ (अनु० १६२।१८)

ह्रियमाणस्यैकस्यैव धर्मस्य त्रिधा त्रिप्रकारा विचारणा एक एव प्रमाणत्रयसंवादेन परीक्षणीयः । त्रिधा इत्यस्य व्याख्यानमेक एवेति त्रयाणां प्रमाणानां पृथक्त्वे प्रत्येकं स्वातन्त्र्येण धर्मप्रतिपादकत्वे मम बुद्धिर्न च । प्रत्यक्षस्याती-

न्द्रिये धर्मे प्रमाणाभावात् आचारस्य च प्रध्वंसितत्वात् त्रयाणां प्रमाणानां मध्ये परिशेषात् य उक्तो वेदे स एव मार्गः न तु परितर्कणाद्धर्मस्य विचारः कर्त्तव्यः। अत्र वेदेऽशङ्की शङ्काशून्यः—

एक एवेति जानीहि त्रिधा धर्मस्य दर्शनम्।
पृथक्त्वे च न मे बुद्धिस्त्रयाणामपि वै तथा॥

उक्तो मार्गस्त्रयाणाञ्च तत्तथैव समाचर।
जिज्ञासा न तु कर्त्तव्या धर्मस्य परितर्कणात्॥

सदैव भरतश्रेष्ठ मा तेऽभूदत्र संशयः।
अन्धो जड इवाशङ्की यद् ब्रवीमि तदाचर॥

अहिंसा सत्यमक्रोधो दानमेतच्चतुष्टयम्।
अजातशत्रो सेवस्व धर्म एष सनातनः॥

ब्राह्मणेषु च वृत्तिर्वा पितृपैतामहोचिता।
तामन्वेहि महाबाहो धर्मस्यैते हि देशिकाः॥

प्रमाणमप्रमाणं वै यः कुर्याद् बुधो जनः।
न स प्रमाणतामर्हो विवादजननो हि सः॥
( महा० अनु० १६२।२०-२५ )

अत्र युगरूपानुवर्तित्वं विभिन्नत्वं च दृश्यते—

कालावस्था तदा हन्या, न सा वर्त्तति साम्प्रतम्।
अन्यः कृतयुगे कालस्त्रेतायां द्वापरे परः॥

भूमिर्नद्यो नगाः शैलाः सिद्धा देवा महर्षयः।
कालं समनुवर्त्तन्ते यथा भावा युगे युगे॥

बलवर्ष्मप्रभावा हि प्रहीयन्त्युद्भवन्ति च।
युगं समनुवर्त्तामि कालो हि दुरतिक्रमः॥

द्वापरे च युगे धर्मो द्विभागोनः प्रवर्त्तते।
विष्णुर्वै पीततां याति चतुर्धा वेद एव च॥

ततोऽन्ये च चतुर्वेदास्त्रिवेदाश्च तथाऽपरे।
द्विवेदाश्चैकवेदाश्चाऽप्यनृचश्च तथापरे॥

एवं शास्त्रेषु भिन्नेषु बहुधा नीयते क्रिया।
एकदेवस्य चाऽज्ञानाद्वेदास्ते बहवः कृताः॥

युगेष्वावर्त्तमानेषु धर्मो व्यावर्तते पुनः।
धर्मे व्यावर्तमाने तु लोको व्यावर्तते पुनः॥

लोके क्षीणे क्षयं यान्ति भावा लोकप्रवर्त्तकाः।
युगक्षयकृता धर्माः प्रार्थनानि विकुर्वते ॥

एतत्कलियुगं नाम अचिराद्यत्प्रवर्त्तते।
युगानुवर्तनं त्वेतत्कुर्वन्ति चिरजीविनः॥

( महा० वन० १४९।६-९, २७-३८ )

सतामाचारो धर्मो धर्माचारणाच्च सत्त्वमित्यन्योन्याश्रयेण लक्ष्यलक्षणयोः साध्यासाध्ययोरविवेकादपि न सदाचारोऽपि धर्मे मानमित्याह—

सदाचारो मतो धर्मः सन्तस्त्वाचारलक्षणाः।
साध्यासाध्यं कथं शक्यं सदाचारो ह्यलक्षणाः॥ (शान्ति० २६०।५)

अथाऽस्य वेदमुपश्रृण्वतस्त्रपुजतुभ्यां श्रोत्रपूरणम्' इत्यादि निषेधे श्रूयमाणेऽपि प्राकृताः शूद्रा मुमुक्षवो वेदान्तान्धर्मबुद्धया श्रृण्वन्ति। अगस्त्यादिरप्राकृतोऽपि बहुहिंसाकरं दण्डकारण्यशापाख्यमधर्मं चकार। अतो भ्रष्टेषु शिष्टलक्षणदर्शनात् शिष्टेषु च भ्रष्टलक्षणदर्शनात् सदाचारोऽपि दुर्निर्णेयः—

दृश्यते हि धर्मरूपेणाधर्मं प्राकृतश्चरन्।
धर्मं चाधर्मरूपेण कश्चिदप्राकृतश्चरन्॥

पुनरस्य प्रमाणं हि निर्दिष्टं शास्त्रकोविदैः।
वेदवादाश्चानुयुगं ह्रसन्तीतीह नः श्रुतम्॥

अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे।
अन्ये कलियुगे धर्मा यथाशक्ति कृता इव॥

आम्नायवचनं सत्यमित्ययं लोकसङ्ग्रहः।
आम्नायेभ्यः पुनर्वेदाः प्रसृताः सर्वतोमुखाः॥

ते चेत् सर्वप्रमाणं वै प्रमाणं ह्यत्र विद्यते।
प्रमाणेऽप्यप्रमाणेन विरुद्धे शास्त्रता कुतः॥

( शा० २६०।६-१० )

संस्था स्वरूपं जनमेजयाश्वमेधे इन्द्रापराधादश्वमेधसंस्थालोपो दृष्टः—

धर्मस्य क्रियमाणस्य बलवद्भिर्दुरात्मभिः।
या या विक्रियते संस्था ततः सापि प्रणश्यति॥

विद्म चैवं न वा विद्म शक्यं वा वेदितुं न वा।
अणीयान् क्षुरधाराया गरीयानपि पर्वतात्॥

( शान्ति० २६०।११-१२ )

प्रथमं कर्मकाण्डे 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति। अपाम सोमममृता अभूम्' इत्यादि श्रुतेर्गन्धर्वनगरवदद्भुत इव दृश्यते। कविभिरन्वीक्ष्यमाणः यत्कृतकं तदनित्यं कार्यत्वाद् घटवत्। 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इत्युपपत्तिपूर्वकमुपनिषत्सु ईक्ष्यमाणोऽदर्शनं याति तुच्छ इव भवति। निपीयते पशुभिर्जलमस्मिन्निति निपानं वाप्यादिसमीपस्थः क्षुद्रजलाधारः कुल्या वा केदारान् प्रति नीयमाना यथा सद्यः शुष्यति एव शाश्वतो वैदिको धर्मो विप्रहीणः सन् कलेरन्ते न दृश्यते इति स्मृतिरस्ति भविष्य विषया—

गन्धर्वनगराकारः प्रथमं सम्प्रदृश्यते।
अन्वीक्ष्यमाणः कविभिः पुनर्गच्छत्यदर्शनम्॥
निपानानीव गोभ्योऽपि क्षेत्रे कुल्ये च भारत।
स्मृतिर्हि शाश्वतो धर्मो विप्रहीणो न दृश्यते॥
कामादन्येच्छया चान्ये कारणैरपरैस्तथा।
असन्तोऽपि वृथाचारं भजन्ते बहवोऽपरे॥
(शान्ति० २६०।१३-१५)

सकामादिमद्भिः कृतो धर्मो भवति मूढदृष्टचा साधुषु च धर्मः प्रलापमात्रं धर्मो नास्तीति वदन्ति मूढाः प्रलापमेवाहाथेति—

धर्मो भवति स क्षिप्रं प्रलापस्त्वेव साधुषु।
अथैतानाहुरुन्मत्तानपि चावहसन्त्युत॥
(शान्ति० २६०।१६)

महाजनाः द्रोणाचार्यादयः ब्रह्मकर्मादरे सुरकार्यं न स्यात् अनादरे शिष्टाचारव्याकोपः तेनैवाचारेणैवान्यो विश्वामित्रादिरपरं जामदग्न्यादिकं स आचारवान् तुल्यरूपो वसिष्ठादिः। निष्कर्षस्तु तत्रैव प्रस्तुतः—

महाजना ह्युपावृत्ता राजधर्मं समाश्रिताः।
न हि सर्वहितः कश्चिदाचारः सम्प्रवर्तते॥
तेनैवान्यः प्रभवति सोऽपरं बाधते पुनः।
दृश्यते चैव स पुनस्तुल्यरूपो यदृच्छया॥
येनैवान्यः स भवति सोऽपरानपि बाधते।
आचाराणामनैकाग्र्य सर्वेषामुपलक्षयेत्॥
चिराभिपन्नः कविभिः पूर्वं धर्म उदाहृतः।
तेनाचारेण पूर्वेण संस्था भवति शाश्वती॥
(शान्ति० २६०।१७-२०)

एतदनुसृत्येवाऽधस्तनः कुसुमाञ्जलिः—

जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः ।
ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम् ॥

पूर्वं हि मानस्यः प्रजाः समभवन्, ततोऽपत्यैकप्रयोजनमैथुनसंभवाः, ततः कामावर्जनीयसन्निधिजन्मानः, इदानीं देशकालाद्यव्यवस्थया पशुधर्मादेव भूयिष्ठाः; पूर्वं चरुप्रभृतिषु संस्काराः समाधायिषत, ततः क्षेत्रप्रभृतिषु, ततो गर्भादितः, इदानीं तु जातेषु लौकिकव्यवहारमाश्रित्य; पूर्वं सहस्रशाखो वेदोऽध्यगायि, ततो व्यस्तः, ततः षडङ्ग एकः, इदानीन्तु क्वचिदेका शाखेति; पूर्वमृतवृत्तयो ब्राह्मणाः पाद्योतिषत, ततोऽमृतवृत्तयः, सम्प्रति प्रमृतसत्यानृतकुसीदपशुपाल्यश्ववृत्तयो भूयांसः; पूर्वं दुःखेन ब्राह्मणैरतिथयोऽलभ्यन्त, ततः क्षत्रियातिथयोऽपि संवृत्ताः, ततो वैश्यावेशिनोऽपि, सम्प्रति शूद्रान्नभोजिनोऽपि; पूर्वममृतभुजः, ततो विघसभुजः, ततोऽन्नभुजः, सम्प्रति अघभुज एव; पूर्वं चतुष्पाद् धर्म आसीत्, ततस्तनूयमाने तपसि त्रिपात्, ततो म्लायति ज्ञाने द्विपात्, सम्प्रति जीर्यति यज्ञे दानैकपात्; सोऽपि पादो दुरागतादिविपादिकाशतदुःस्थोऽश्रद्धामलकङ्कितः कामक्रोधादिकण्टकशतजर्जरः प्रत्यहमपचीयमानवीर्यतया इतस्ततः स्खलन्निवोपलभ्यते ( कुसु० स्तव० २ का० ३ ) ।

इदानीमिव सर्वत्र दृष्टान्नाऽधिकामिष्यते इति चेन्न, स्मृत्यनुष्ठानाऽनुमितानां शाखानामुच्छेददर्शनात्; स्वातन्त्र्येण स्मृतीनामाचारस्य च प्रामाण्याऽनभ्युपगमात्; मन्वादीनामतन्द्रियार्थदर्शने प्रमाणाभावात् । अथमयमाशयः--वैदिका अप्याचारा राजसूयाऽश्वमेधादयः समुच्छिद्यमाना दृश्यन्ते, यत इदानीं नाऽनुष्ठीयन्ते; न चैते प्रागपि नाऽनुष्ठिता एव, तदर्थवेदराशेरप्रामाण्यप्रसङ्गात्, समुद्रतरणोपदेशवत् ।··· तस्मात् प्रत्यक्षश्रुतिरेव मूलमाचारस्य, सा चेदानीं नास्तीति शाखोच्छेदः; ··· विश्वपरिग्रहाच्च न सहसा सर्वोच्छेद इति ( कुसु० स्तव० २ का० ३ ) ॥

····"वेदह्रासदर्शनात्; यत इदानीमश्रूयमाणस्यापि वेदस्यार्थोऽनुष्ठीयते, निबद्ध्यते च मन्वादिभिः; पुरुषाणामपचीयमानशक्तित्वाच्च, यथा ह्यश्वमेधराजसूयाद्यनुष्ठानशक्तेरपचयस्तथाऽध्ययनशक्तेरपि । न च पूर्वमिमं नाऽनुष्ठिता एव राजसूयादयः, तदर्थस्य वेदवाक्यस्य वैयर्थ्यप्रसङ्गात् । न च नित्याऽनुमेयवेदसम्भवः, वर्णानां नित्यत्वेऽपि, आनुपूर्व्याः पाठायत्तत्वात् ।··· तस्मात्, पुरुषाणामनुष्ठानशक्तिवद् अध्ययनशक्तिरपि युगक्रमेणापचीयते; ततो वेदानां शाखोच्छेदः, तदर्थानामनुष्ठानोच्छेदः, वर्णाश्रमाचारव्यवस्थाविप्लवश्चेति । अत एव भगवतो व्यासस्य पुरुषशक्त्यपचयमात्रेण वचनानि –'स्वल्पायुषः स्वल्पसत्त्वाः" इत्यादीनि, वेदोत्सादमवेक्ष्य—"प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते" इत्यादीनि, अनुष्ठानो-

त्सादमवेक्ष्य—"दानमेकं कलौ युगे" इत्यादीनि, आचारविप्लवमवेक्ष्य "प्रजास्त्वत्र भविष्यन्ति शिश्नोदरपरायणाः" इत्यादीनि । तथा च श्रूयमाणा अपि वेदाऽवयवा उत्सादमुपयास्यन्ति, वेदत्वाद्वाक्यत्वाद्वा, उत्सन्नशाखावद्, इति न्यायः" इत्यादि उदयनाचार्यस्य "आत्मतत्त्वविवेके' ( परि० ४ पृ० ४२४-२५ ) द्रष्टव्यम् ।

"ननु मन्वादिस्मृतयोऽपि वेदमूलत्वात् प्रमाणम्, नान्यत इति ? अत्रोच्यते; तदेतद्वेदमूलतया प्रामाण्यं योगिप्रत्यक्षं धर्मग्राहकममृष्यमाणाः किलाचक्षते भवन्तः । एतच्च न युक्तम् । यथा भगवानीश्वरः सर्वस्य कर्त्ता सर्वस्येशिता सर्वदर्शी सर्वानुकम्पी च वेदानां प्रणेता समर्थितः, तथा योगिप्रत्यक्षमपि धर्मग्रहणे निपुणमस्मदादिप्रत्यक्षविलक्षणं प्रत्यक्षलक्षणे समर्थितमेव; तस्मात्, तन्मूला एव मन्वादिदेशना भवन्तु । यत्तु त्रिकालाऽनवच्छिन्नः कथं प्रत्यक्षगम्यो धर्मः स्यादिति चोदनैव तत्र प्रमाणमुच्यते, प्रतिविहितं तत् । ईश्वरप्रत्यक्षं यथा अग्निहोत्रादेर्धर्मत्वस्य ग्राहकम्, एवमष्टकादियागे तस्य ग्राहकं मन्वादिप्रत्यक्षं भविष्यतीति किमत्र त्रिकालानवच्छेदेन तदवच्छेदेन वा कृत्यम् ? यद्येवमष्टकादि-कर्मणां धर्मत्वाऽग्राहित्वादसर्वज्ञ ईश्वरः स्यात्, ज्ञात्वा वाऽनुपदिशन्न कारुणिको भवेत् ? नैष दोषः; सर्वं जानात्येव भगवान्, किञ्चित्स्वयमुपदिशति; किञ्चित्परा-नुपदेशयति; ते हि तस्याऽनुग्राह्या भगवतः, तेषां च तदनुग्रहकृतैव तथाविधज्ञान-प्राप्तिः । मन्वादीनां प्रत्यक्षो धर्म इति वेदेऽपि पठ्यते –'साक्षात्कृतधर्माण ऋषयो बभुवुः, ते परेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्राहुः" इति । नन्वेवं प्रत्यक्षमूलत्वाऽविशेषात् श्रुतिस्मृत्योर्विरोधे विकल्पः प्राप्नोति, बृहद्रथन्तरविध्यो-रिव, न बाध्यबाधकभावः; न हि ईश्वरप्रत्यक्षस्य योगिप्रत्यक्षस्य च प्रामाण्ये कश्चिद्-विशेषः, नैसर्गिकाहार्यत्वकृतस्तु भविष्यति; किं तेन ? उच्यते, भवतु विकल्पः; को दोषः ? वेदमूलत्ववादिभिरपि कश्चिद् विकल्पो व्याख्यात एव; विषयविभागेन वा विकल्पो व्याख्यास्यते; न च श्रुतिस्मृतिविरोधोदाहरणं किञ्चिदस्तीति स्वाध्या-याभियुक्ताः । तस्माद्, आप्तप्रत्यक्षमूलत्वेन वेदानामिव धर्मशास्त्राणां हि पञ्चमं वेदत्वमाहुः । उक्तञ्च—

**'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्; बिभेत्यल्पश्रुताद्वेदो मामयं** प्रतरिष्यति' इति ( न्यायमं० आ० ४ पृ० २६३-६४ ) ।

## अध्यायः ७

# विधेः स्रोतांसि (३)

## सदाचारः आत्मतुष्टिप्रमाणवादश्च:

### सदाचारः

'मूलस्य' प्रामाण्यं स्वीकृत्य हरदत्तः 'सामयाचारिकान्' इत्थं प्रस्तौति—"पौरुषेयी व्यवस्था समयः, स च त्रिविधः, विधिर्नियमः प्रतिषेध इति। समयमूला आचाराः समयाचारास्तेषु भवाः सामयाचारिकाः, एवंभूतान् धर्मानिति। कर्मजन्योऽभ्युदयनिःश्रेयसहेतुरपूर्वाख्य आत्मगुणो धर्मः"। सदाचारस्य प्रामाण्यविषये धर्मशास्त्रकारणां मतमत्यन्तं स्पष्टं विद्यते—

वेदो धर्ममूलम्। तद्विदां च स्मृतिशीले—( गौ० १।१–२ )

अथातः सामयाचारिकान् धर्मान् व्याख्यास्यामः। धर्मज्ञसमयः
प्रमाणं वेदाश्च—( आप० ध० सू० १।१।१।१–३ )

श्रुतिस्मृतिविहितो धर्मः। तदलाभे शिष्टाचारः प्रमाणम्।
शिष्टः पुनरकामात्मा। अगृह्यमाणकारणो धर्मः—( वसिष्ठ० १।४–७ )

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
सम्यक् संकल्पजः कामः धर्ममूलमिदं स्मृतम्॥ ( याज्ञ० १।७ )

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामत्मानस्तुष्टिरेव च॥ ( मनु० १।६ )

विधेः प्रामाण्यविषये पर्यायेण मूलप्रमाणस्य प्रयोगाः लभ्यन्ते, परञ्च अस्य सम्बन्धः स्थानपदेनाऽपि विचारणीयः। भेदस्तु स्पष्ट एव—

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥ (याज्ञ० १।३)

अत्र मिताक्षरावचनमवधेयम्—धर्मस्य च चतुर्दशस्थानानि हेतवः। एतानि च त्रैवर्णिकैरध्येतव्यानि। मित्रमिश्रस्य व्याख्यानम्—"विद्यानां पुरुषार्थसाधनज्ञानानाम्। अत एव धर्मस्याऽपि स्थानाभ्युपायाः विद्यायाः प्रवृत्तिद्वारा धर्मप्रयोजकत्वात्"। "पुराणादीनां स्वर्गादिकथाप्राधान्यादितिहासबहुलत्वेनार्थवादादिरूपतया न्यायमीमांसयोस्तर्कद्वारा शिक्षादीनामङ्गानां तत्तदुपकारसम्पादनेन वेदानु-

ग्राहकतया धर्मे प्रामाण्यं न साक्षादिति न तान्यत्र गणितानि"। गौतमधर्मसूत्रेऽपि प्रस्तुतभेदो दृश्यते—तस्य च व्यवहारो वेदो धर्मशास्त्राण्यङ्गान्युपवेदाः पुराणम् ( गौ० ११।१९ )।

जैमिनीये सूत्रे सदाचारविषये प्रस्तुतमतमङ्गीकृतं भट्टपादेन—

दृष्टकारणहीनानि यानि कर्माणि साधुभिः।
प्रयुक्तानि प्रतीयेरन् धर्मत्वेनेह तान्यपि॥
शरीरस्थितये यानि सुखार्थं वा प्रयुञ्जते।
अर्थार्थं वा न तेष्वस्ति शिष्टानामेव धर्मधीः॥
धर्मत्वेन प्रपन्नानि शिष्टैर्यानि तु कानिचित्।
वैदिकैः कर्तृसामान्यात्तेषां धर्मत्वमिष्यते॥
नैव तेषां सदाचारनिमित्ता शिष्टता मता।
साक्षाद्विहितकारित्वाच्छिष्टत्वे सति तद्वचः॥

प्रत्यक्षवेदविहितधर्मक्रियया हि लब्धशिष्टत्वव्यपदेशा यत्परम्पराप्राप्तमन्यदपि धर्मबुद्ध्या कुर्वन्ति तदपि स्वर्ग्यत्वाद्धर्मरूपमेव ( तंत्र० पृ० २०५–६)।

परम्परायाः प्रामाण्ये शिष्टाचार अनिवार्यतया स्वीकृतः। अत्र जपादीनां कर्मणामुदाहरणानि भट्टपादः प्रस्तौति। महाभारतस्य आदिपर्वणि तत्रत्य नीलकण्ठभाष्येऽपि विषयोऽस्ति स्पष्टीकृतः—

यष्टिं चैव वैष्णवीं तस्मै ददौ वृत्रनिषूदनः।
इष्टप्रदानमुद्दिश्य शिष्टानां प्रतिपालनीयम्॥
तस्याः शक्रस्य पूजार्थं भूमौ भूमिपतिस्तदा।
प्रवेशं कारयामास गते संवत्सरे तदा॥
ततः प्रभृति चाद्यापि यष्टेः क्षितिपसत्तमैः।
प्रवेशः क्रियते राजन्यथा तेन प्रवर्तितः।
भगवान् पूज्यते चाऽत्र हंसरूपेण चेश्वरः॥
स्वयमेव गृहीतेन वसोः प्रीत्या महात्मनः।

( आदि० ६३।१७–१९, २१-२२ )

"फाल्गुनकृष्णप्रतिपदिक्रियमाणः परस्परजलसेकः वसन्तोत्सवः" ( जैमि० १।३।७ उपरि शास्त्रदीपिका तत्रत्या मयूखमालिका च )।

प्रवृत्तिर्हेतुः सदाचारनिर्णये न तु व्यवहार एव। यथा तन्त्रवार्त्तिके स्पष्टम्—

"यानि तु म्लेच्छादिसमानानि नियतानियतक्रियान्तराण्यर्थसुखसाधनकृषिसेवाव'णिज्यादीनि मृष्टान्नपानमृदुशयनासनरमणीयगृहोद्यानालेख्यगीतनृत्यगन्धपुष्पादिकर्माणि प्रसिद्धानि तेषु नैव कस्यचिद्धर्मत्वाशङ्कास्तीति न तत्सामान्यतो दृष्टेनेतरनिराक्रियोपपत्तिः केषाञ्चिद्वा धर्मत्वाभ्युपगमान्न सर्वेषामेव तत्प्रसङ्गः। किन्तु देवब्राह्मणपूजादि यत्तेषामपि किञ्चन। तत्रेष्टमेव धर्मत्वं शिष्टाचारमतं हि तत्। लोके हि कश्चिदाचारः शिष्टत्वेन विशिष्यते। कश्चित्तु प्राणिसामान्यप्राप्तैरपि सङ्गतः। तत्र यः कार्यरूपेण शिष्टानेवानुवर्तते। स एव केवलो धर्मो नेतरः प्राणिमात्रगः ( तन्त्र० पृ० २०६ )। यो हि सदाचारः पुण्यबुद्धया क्रियते स धर्मादर्शत्वं प्रतिपद्यते। यस्तु कामक्रोधलोभमोहशोकादिहेतुत्वेनोपलभ्यते स यथाविधिप्रतिषेधं वर्तिष्यते ( तंत्र० पृ० २०८ )।

धर्मविषये शिष्टाचारविषये चान्योविषयः पुर आयाति। महतां धर्मव्यतिक्रमः साहसञ्च दृष्टः। अवरदौर्बल्यात्[१]। तेषां तेजोविशेषेण प्रत्यवायो न विद्यते। तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरः[२]। अवतारेष्वऽपि धर्मव्यतिक्रमः दृष्टः। द्वादशोदहारणानि भट्टपादेन प्रस्तुतानि। रागद्वेषादिकारणत्वात्तेषान्नहि शिष्टाचारप्रयोजकत्वं विद्यते। उदाहरणानि च—(१) प्रजापतिदुहितासम्बन्धः[३], (२) अहिल्यायै जारप्रसङ्गः, (३) नहुषाख्यानम्[४], (४) वसिष्ठस्य धर्मव्यतिक्रमः[५], (५) उर्वशीपुरूरवाप्रेमप्रसङ्गः[६], (६) विश्वामित्रपौरोहित्यम्[७], (७) युधिष्ठिरस्य द्रौपद्या सह परिणयः[८], (८) कृष्णद्वैपायननियोगः[९], (९) स्त्रीं बिना भीष्मेण अश्वमेधानुष्ठानमनाश्रमस्थितिश्च, (१०) स्वर्णमयों सीतामङ्गीकृत्य रामेणाश्वमेधानुष्ठानम्, (११) अन्धेनाऽपि धृतराष्ट्रेण यज्ञानुष्ठानम्, (१२) रुक्मिणिसुभद्रयोः वासुदेवार्जुनाभ्यां सहः विवाहसम्बन्धश्च।

"लोभाद्यभिभवात् सन्निहितानर्थादर्शनेनाधर्माचरणं धर्मव्यतिक्रमः। दृष्टस्याप्यनर्थस्य बलदर्पेणानादरादधर्माचरणम् साहसम्—न्यायसुधा पृ० १८५।

---

१. गौ० १।३-४।
२. आप० ध० सू० २।६।१३।७-९; भाग० पु० पूर्वा० ३३।३०।
३. शत० ब्रा० १।७।४।१; ऐ० ब्रा० १३।९।
४. उद्योग० अ० १३।
५. निरुक्त० ९।२६; आदि० १७७।१-६; वन० १३०।८-९; अनुशा० ३।१२-१३।
६. ऋग्वेदः १०।९५।१४; शत० ब्रा० ११।५।१-८।
७. आदि० ७१।३१-३३।
८. द्रोण० १९०।५५।
९. आदि० २१९।१८।

"भ्रातॄणामेक...मनुरब्रवीत् ( मनु० ९।१८२ )—इत्येवं विचित्रवीर्यक्षेत्रपुत्रलब्धपित्रनृणत्वः केवलयज्ञार्थपत्नीसम्बन्ध आसीदित्यर्थापत्त्यानुक्तमपि गम्यते। यो वा पिण्डं पितुः पाणौ विज्ञातेऽपि न दत्तवान्। शास्त्रार्थातिक्रमाद्भीतो यजतैकाक्यसौ कथम्"--तंत्र० पृ० २०८।

"अथवा बह्व्य एव ताः सदृशरूपा द्रौपद्य एकत्वेनोपचरिता इति व्यवहारार्थापत्त्या गम्यते"--तन्त्र० पृ० २०९।

"एवमर्जुनस्य मातुलकन्यायाः सुभद्रायाः परिणयेऽपि सुभद्रायाः वसुदेवकन्यात्वस्य साक्षात् क्वचिदप्यश्रवणात्"—मीमांसाकौ० पृ० ४०।

परश्च महाभारते स्पष्टं लिखितं यत् सुभद्रा 'दुहिता वसुदेवस्य वासुदेवस्य च स्वसा'।

'मृतायामपि भार्यायां वैदिकाग्निं न हि त्यजेत्। उपाधिनापि तत्कर्म यावज्जीवं समापयेत्॥ रामोऽपि कृत्वा सौवर्णीं सीतां पत्नीं यशस्विनीम्। ईजे यज्ञैर्बहुविधैः सहभ्रातृभिरर्चितैः ( गोभिलस्मृतिः ३।९-२० )।

भट्टपादेनानेके आचाराः खण्डिताः—"अद्यत्वेऽप्यहिच्छत्रमथुरानिवासिब्राह्मणीनां सुरापानम्। केसर्यश्वाश्वतरखरोष्ट्रोभयदद्दानप्रतिग्रहविक्रयव्यवहारभार्यापत्यमित्रसहभोजनाद्युदीच्यानाम्। मातुलदुहितृद्वाहासन्दीस्थभोजनादीनि दाक्षिणात्यानाम्। मित्रस्वजनोच्छिष्टस्पृष्टभोजनं सर्ववर्णपरस्परस्पृष्टताम्बूलादनतदवसानानाचमननिर्णेजकधौतगर्दभारूढवस्त्रपरिधानब्रह्महत्यातिरिक्तमहापातककार्यपरिहरणादीन्युभयेषाम्। अतिस्थूलानि प्रतिपुरुषजातिकुलावस्थितसूक्ष्मस्वधर्मव्यतिक्रमणानि त्वनन्तभेदानि सर्वविगानहेतुदर्शनानि च प्रायेणैव सम्भवन्तीति नैवंजातीयकमिश्रसदाचारधर्मत्वाध्यवसानसम्भवः"। ( तन्त्र० पृ० २०४ )।

जैमिनिमतानुसारेण आर्यम्लेच्छयोर्मध्ये 'युववराहवेतसा' इति भिन्नार्घम्[1]। शबरस्वामिमतमन्यथा प्रतीयते। भट्टपादेनाऽपि शबरस्वामिमतं न स्वीकृतम्—

"तेनाचारबलीयस्त्वं समत्वं वेह युज्यते। स्मृतीनां वा बलीयस्त्वं शास्त्रस्था वेति वर्ण्यते। उभयोः श्रुतिमूलत्वं न स्मृत्याचारयोः समम्। सप्रत्ययप्रणीता हि स्मृतिः सोपनिबन्धना। तथा श्रुत्यनुमानं हि निर्विघ्नमुपजायते। आचारात्तु स्मृतिं ज्ञात्वा श्रुतिर्विज्ञायते ततः। तेन द्व्यन्तरितं तस्य प्रामाण्यं विप्रकृष्यते।...तेनाचारः स्मृतिं यावदनुमातुं प्रवर्तते। स्मृतिर्लब्धश्रुतिस्तावद्धर्ममेवावधारयेत्। तस्मादाचारेभ्यः स्मृतिर्बलीयसी सन्निबन्धनेति[2]"।

१. जै० १।३।८-९।
२. तन्त्र० पृ० २२०-२२१।

एवं सति दाक्षिणात्यानां मातुलसुतासम्बन्धिसदाचारस्तु श्रुतिस्मृति-विरुद्धादग्राह्य एव । तत्र कामादिहेत्वन्तरं स्पष्टमेव दृश्यते ।

समा विप्रतिपत्तिः स्यात् । शास्त्रस्था तन्निमित्तत्वात् ( जै० १।३।८-९ ) इति सूत्रे कुमारिलभट्टेन शास्त्रशब्दस्य स्मृतिः इत्यर्थः कृतः, परञ्च शबरस्वामी शास्त्रस्था इत्यस्य शिष्टा इत्यर्थः कृतवान् । मीमांसा कौस्तुभे—"अथवाचार एव बलवान्...तदनङ्गीकरणे तु परं समा विप्रतिपत्तिर्भवेत् न तु स्मृतिप्राबल्यमिति सूत्रार्थः । सिद्धान्तस्तु स्मृतिशास्त्रस्थैव प्रतिपत्तिर्बलीयसी" । 'तन्निमित्तत्वात्' इति न्यायसुधाकारेणेत्थं व्याख्यातम्—"तन्निमित्तत्वादिति शास्त्रत्वसामान्येन प्रकृतत्वाद् वेदाख्यं शास्त्रं तच्छब्देन परामृश्य श्रुतिमूलत्वं हेतुरुच्यते तच्चोभयोः स्मृत्यधिकरणे प्राप्तं विरोधे पुनरुच्यमानमाचाराणां श्रुतिमूलत्वपरिसंख्यार्थम् (पृ० २१२ ) ।

होलाकाधिकरणं सामान्यश्रुतिकल्पनाधिकरणं वा जैमिनिः प्रस्तौति[१] । तत्राधोलिखितसूत्राणां वैशिष्ट्यं विद्यते—

अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ।
अपि वा सर्वधर्मः स्यात्तन्न्यायत्वाद्विधानस्य ॥

कर्म धर्मो वा प्राणवत् ।
तुल्यं तु कर्तृधर्मेण ॥ ( जै० १।३।१५-२३ )

अत्रत्या विचारा अवधेयाः—

"अनुमानात् स्मृतेराचाराणां च प्रामाण्यमिष्यते । येनैव हेतुना ते प्रमाणं तेनैव व्यवस्थिताः प्रामाण्यमर्हन्ति । तस्माद् होलाकादयः प्राच्यैरेव कर्त्तव्याः, आह्नीनैबुकादयो दाक्षिणात्यैरेव, उद्वृषभयज्ञादय उदीच्यैरेव।... अपि वेति पक्षव्यावृत्तिः । एवंजातीयकः सर्वधर्मः स्यात् । कुतः तन्न्यायत्वात् विधानस्य । विधीयतेऽनेनेति विधानं शब्दः । सोऽनुमीयते स्मृत्या ।... तस्मात्सर्वधर्मता विधेर्न्याय्या"—इति शबरः ।

"अनुमानस्य कल्पकस्य व्यवस्थितत्वात्प्रमाणमूलभूता श्रुतिः व्यवस्थापकोपपदसंयुक्ता स्यात् । न व्यवस्थितमूलत्वं भवितुमर्हति, अपि तु सर्वधर्मः स्यात् । मूलभूते विधायके वाक्ये सर्वधर्मत्वोपपादकस्य न्यायस्य सत्त्वात् ( मीमांसाकौ० पृ० १००-१०१ ) ।

"वसन्तोत्सवो होलाका । स्वस्वकुलागतं करञ्जार्कादिस्थावरदेवतापूजादिकमाह्नीनैबुकशब्देनोच्यते । ज्येष्ठमासस्य पौर्णमास्यां बलीवर्दानभ्यर्च्य धावयन्ति सोऽयमुद्वृषभयज्ञः ( जै० न्या० मा० ) ।

---

१. जै० १।३।१२-२३ ।

त्रिधैव जायते कर्त्ता विशेषेण प्रतिक्रियम् । योग्यत्वाप्रतिषिद्धत्वविशेषोपपदान्वयैः[1] । यस्माच्छक्तमात्रं पुरुषं विधायकवाच्यमधिकरोति नातिरिक्तं विशेषणमपेक्षते तस्मात्तस्य सर्वविषयविधित्वं न्याय्यमित्यर्थः[2] । सम्बन्धैर्बहुभिर्देशसमाख्या हि प्रवर्त्तते । निवासभवजातत्वतदागमनहेतुभिः[3] । प्राच्यादिसमाख्यापि व्यभिचारिणी तद्देशागतानामपि केषाञ्चिदनाचरणात् । चिरविनिर्गतपुत्रपौत्रादीनां चासत्यामपि समाख्यायामाचरणात् । तस्मादसति विशेषणे सर्वधर्मत्वमाचाराणां स्मृतीनां चेति सिद्धम्[4] ।

देशान्तरे धार्मिकैः सद्भिर्द्विजैर्यदविरुद्धं श्रुत्या स्मृत्यन्तरेण वाऽऽर्च्यते तद्देशान्तरेऽपि राजा प्रकल्पयेत् । यथोद्वृषभयज्ञादय उदीच्येषु प्रसिद्धास्ते प्राच्यैर्दाक्षिणात्यैः प्रतीच्यैश्चानुष्ठेयाः । कुतः । आचाराद्धि स्मृतिरनुमातव्या । स्मृतेः श्रुतिः सा च यद्येवमनुमीयते 'उदीच्यैरेतत्कर्त्तव्यमिति' तत्र तद्धितस्य बहुष्वर्थेषु स्मरणात्तत्र जातस्तत्र भवस्तत आगतस्तमभिप्रस्थितः शेष इति चैतस्य लक्षणविकारोभयरूपत्वादन्येष्वप्यर्थेषु प्रतिपदमनुपातेषु तद्धितस्मरणान्नास्त्युदीच्यो नाम च उदीच्यशब्देन निवर्त्येत । ततश्च पुरुषमात्रेणैतत्कर्त्तव्यमित्यापतति । देशसमाख्याया नियतनिमित्तत्वाभावेनानियामकत्वात् । अथैवं वाक्यमनुमीयेत— 'उदीच्यां जातेन तद्देशवासिना वा' तदपि व्यभिचारि । तत्र जातोऽपि नाऽन्यत्र करोति, तन्निवास्यप्यन्यत्र जातो न करोत्येव । अथोदग्देशाभिजनस्तन्निवासी चेति—नित्यत्वादभिजननिवासयोस्तदपि न युक्तमेव । न हि जातिगुणगोत्राणीवाभिजननिवासौ नित्यौ । तस्मान्नित्यस्य कस्यचिदनुष्ठातॄणामवच्छेदकस्यानुपपत्तेः सर्वविषया धर्माः । न देशधर्मा नाम केचन सन्ति । अनेनैव न्यायेन कुलधर्मा अपि । कथं तर्हि 'देशधर्माः कुलधर्मा' इति च स्मृतिकारैर्भेदेन व्यपिदिश्यन्ते । उक्तं दृष्टार्था नियता व्यवस्था । तत्र धर्मस्तस्य च नियम उपपद्यते । कुलञ्च गोत्रैकदेशः । यस्तु कृत्स्नगोत्रधर्मो—यथा 'न वासिष्ठा वैश्वामित्रैः सम्बन्धीयुरिति'— स नित्यत्वाद्गोत्रव्यपदेशस्य नित्य एव ।

देवाधर्मानुदाहृत्य संप्रत्येतद्विचार्यते । किं व्यवस्थितमूलास्ते किं वैषां सर्वधर्मता । ... आद्यं सूत्रद्वये यावदिदमप्यत्र चिन्त्यताम् । गृह्यगौतमसूत्रादिव्यवस्थासर्वगामिते । पुराणमानवेतिहासव्यतिरिक्तगौतमवसिष्ठशङ्खलिखितहारीतापस्तम्बबौधायनादिप्रणीतधर्मशास्त्राणां गृह्यग्रन्थानाञ्च प्रातिशाख्यलक्षणवत्प्रतिचरणं पाठव्यवस्थोपलभ्यते । तद्यथा । गौतमगोभिलीये छन्दोगैरेव च

१. तन्त्र० पृ० २४५ ।
२. न्यायसुधा पृ० २४६ ।
३. तन्त्र० २५१ ।
४. शास्त्रदीपिका, जै० १।३।२३ ।

परिगृहीते। वासिष्ठं वह्वृचैरेव शङ्खलिखितोक्तं च वाजसनेयिभिः। आपस्तम्बीय-बौधायनीये तैत्तिरीयैरेव प्रतिपन्ने। इत्येवं तत्र तत्र गृह्यव्यवस्थाभ्युपगमादि दर्शयित्वा विचारयितव्यम्। किं तानि तेषामेव प्रमाणानि, उत सर्वाणि सर्वेषाम्[1]। कर्त्ता हि छन्दोगः स्वशिष्यांश्छान्दोगान् स्वग्रन्थमध्यापयामास तेप्यन्यांश्छन्दोगानित्येवं गौतमीयस्य छन्दोगैः पाठः। तथाप्यापस्तम्बग्रन्थस्य तैत्तिरीयैरेवं गृह्यग्रन्थानामपीति व्यवस्थितधर्मविषयत्वमप्रमाणकम्। आचाराणां तु सर्वाचरित्रमनुगतमनाचरितृभ्यश्च व्यावृत्तमाकृतिव्यक्तिगुणसंस्थानादिकं न किञ्चिद्विशेषणं सम्भवति यद्वुपादाय होलाकाद्यधिकारं विशिंष्यात्[2]।

यत्तु अहिच्छत्रब्राह्मणीनां सुरापानं दाक्षिणात्यानाञ्च मातुलकन्यापरिणयादि तत्र केचिदेवं परिहरन्ति 'येषां परम्पराप्राप्ताः पूर्वजैरप्यनुष्ठिताः। स एव तैर्न दुष्येयुराचारैर्नेतरे जनाः' इत्यापस्तम्बवचनात्, 'येनाऽस्य पितरो...दुष्यति' इति मनुवचनाच्च देशव्यवस्थया स्मृत्याचारयोः प्रामाण्यम्। अतश्च यस्मिन्देशे य आचारः पारम्पर्यक्रमागतः अतस्तदन्यदेशविषयैव तन्निषेधस्मृतिरिति विरोध इति।

परञ्च स्मृतिकौस्तुभेऽन्यन्मतमङ्गीकृतम्— तन्न...आपस्तम्बवचनं तु गर्हानिराकरणपरतया व्याख्येयं मनुवचनं तु सतां मार्गमिति विशेषणादविरुद्धाचारपरं व्याख्येयमिति न विरोधः। अतश्चाहिच्छत्रब्राह्मणीसुरापानादेरनाचारत्वमेव[3]।

आर्यावर्त्तीयाः शिष्टाचाराः सदाचाररूपेणैव व्यवहर्त्तव्याः, इत्यपि मान्यता स्मृतिकौस्तुभकारेण स्वीकृता—

"श्रुतिस्मृत्यविरुद्धानां शिष्टैर्धर्मबुद्ध्यनुष्ठीयमानानामाचाराणां वेदमूलकत्वम्। अत एव स्मृतौ 'श्रुतिस्मृत्यविरुद्धो यः स सदाचार उच्यते' इत्युक्तम्। वार्तिके तु आर्यावर्त्तनिवासिशिष्टप्रयोज्यत्वमेव सदाचारोपलक्षणम्। अतश्च तत्रैव श्रुतिकल्पनमित्युक्तम्। वस्तुतस्तु आर्यावर्त्तगतानामप्याचाराणां श्रुतिस्मृतिविरोधेऽग्राह्यत्वात्तस्यैव सदाचारोपलक्षणत्वं न युक्तम्। अतश्चाचाराणामपि श्रुतिमूलकत्वात्प्रामाण्योपपत्तिः[4]"।

अत्र खण्डदेवेन शिष्टाचारस्थाने आचारशब्दस्य प्रयोगेणोक्तं मतं व्यक्तमन्यथा शिष्टानामाचारा वेदविरुद्धतयैव प्रमाणतामाप्नुवन्ति। स्थितिरेषा मेधा-

---

१. तन्त्र० पृ० २४३-२४४।

२. शास्त्रदीपिका पृ० ४२।

३. मी० कौ० पृ० ५१, जै० १।३।७।

४. तदेव पृ० पृ० ४३-४४।

तिथिना[१] भट्टपादवचनमुद्धृत्य स्पष्टीकृता—"न च दृष्टकारणयोः स्मृत्याचारयोः प्रामाण्यम्। उक्तश्च भट्टपादैः। विरुद्धा च विगीता च दृष्टार्थादिष्टकारणे। स्मृतिर्न श्रुतिमूला स्याद्या चैषा सम्भवश्रुतिः"। अत्र दृष्टार्था च आदिष्टकारणा च दृष्टार्थादिष्टकारणे ( स्मृती ); या चैषा सम्भवश्रुतीः इति स्मृतिभेदाः। अनेकेषु बाधविवेचनेषु प्रस्तुतकुमारिलभट्टकृतबाधनिरूपणमवधेयम्—

"अथ यत्तत्र तत्रोच्यते इदमनेन बाध्यते ( शबरः )—प्रत्यक्षेणानुमानम् श्रुत्याः स्मृतिः, आप्ताविगीतस्मृत्या अनाप्तविगीतास्मृतिः, अदृष्टार्थया दृष्टार्था, श्रुतिप्रभवया लिङ्गादिप्रभवार्थवादप्रभवा च, स्मृत्याप्याचारः, सोऽप्यभियुक्ततराचारेण सन्दिग्धमसन्दिग्धेन[२]"।

धर्मशास्त्रकारणामपि मतं सदाचारसम्बन्धे विचारणीयमस्ति। हारीतः मन्यते—

साधवः क्षीणदोषाः स्युः सच्छब्दः साधुवाचकः।
तेषामाचरणं यत्तु स सदाचार उच्यते[३]॥

सूत्रकालत एव सदाचारस्य व्यवस्था आयाति। आश्वलायनगृह्यसूत्रे विवाहविषये सदाचारस्य व्यवस्था - अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च तान् विवाहे प्रतीयात्। यत्तु समानं तद्वक्ष्यामः। केचिद्देशेषु सद्यः समावेशनं दृष्टं वक्ष्यमाणेन त्रिरात्रं द्वादशरात्रमिति ब्रह्मचर्येण बाध्यते[४]। फलतः जनपदधर्मा ग्रामधर्माश्च देवादिसम्बन्धेन भिन्नाः भवन्ति, तत्र तेषां प्रमाणमस्ति, यत्तु सार्वत्रिकं तदेव शास्त्रस्य विषयो भविष्यति सार्वभौमविधौ देशधर्मस्य प्रमाणं नाङ्गीकरणीयम्। वैदेहेषु सद्य एव व्यवायो दृष्टः गृह्ये तु ब्रह्मचारिणौ त्रिरात्रमिति ब्रह्मचर्यं विहितं तत्र गृह्योक्तमेव कुर्यान्न देशधर्ममिति सिद्धम्।

सर्वजनपदेष्वेकान्तसमाहितमार्याणां वृत्तं सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेत। एवमुभौ लोकावभिजयति। स्त्रीभ्यः सर्ववर्णेभ्यश्च धर्मशेषान् प्रतीयादित्येके[५]। बौधायनश्च—शेषक्रियायां लोको-

---

१. मनु० ११।१८।

२. तन्त्र० ८५९-८६०।

३. परा० माध० १।१ पृ० १४४; विष्णुपुराणवचनम् ( ३।११।३ ) दीपकालिकया याज्ञवल्क्यस्मृतिः ( १।७ ) व्याख्याने उद्धृतम्।

४. आश्व० गृ० १।७।१-२।

५. आप० ध० सू० १।७।२०।८।

ऽनुरोद्धव्यः[1]। अनेके सूत्रकाराः कृष्यादिविषये लोकाचारमेव स्वीकुर्वन्ति[2]। मनुः सामान्यविधिं स्वीकरोति—

येनाऽस्य पितरो याता येन याताः पितामहाः।
तेन यायात् सतां मार्गं तेन गच्छन्न रिष्यते॥

(मनु० ४।१७८)

तन्त्रवार्तिकोऽप्यनुसरित—"येषां तु यः पित्रादिभिरेवार्थो नाचरितः स्मृत्यन्तरप्रतिषिद्धश्च ते तं परिहरन्त्येव[3]"। सामान्यजनानां कृतेऽयम्। किञ्च कारणग्रहणाच्चैवमादेराचारस्य। रूपवतीं मातुलकन्यां कामयमाना राजभयाद्‌ढवन्तः कन्यागमनदण्डो मा भूदिति। अन्ये त्वविद्वांसो 'येनाऽस्य पितरो याताः' इत्यस्य यथाश्रुतमर्थं गृहीत्वा धर्मोऽयमिति प्रतिपन्नाः। अविदुषां मूलमजानानामुपदेशोऽयमिति।... यदि पितृपितामहादिभिः कैश्चित्कथञ्चिदधर्म आचरितपूर्वः स न आश्रयणीय इति सतां मार्गमित्याह। याज्ञवल्क्यव्याख्याने (१।२५४) विशदीकृतमस्ति तदपि द्रष्टव्यः। वेदस्मृतिभ्यां सम्यगुक्तं स्वेषु कर्मस्वध्ययनादिष्वङ्गत्वेन सम्बद्धं धर्मस्य हेतुं साधूनामाचारमनलसः सन्नितान्तं सेवेतेति सामान्येनाचारानुष्ठानोपदेशः फलकथनाय[4] मनुवचनानि—

श्रुतिस्मृत्युदितं सम्यङ्निबद्धं स्वेषु कर्मसु।
धर्ममूलं निषेवेत सदाचारमतन्द्रितः॥

आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः।
आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम्॥

दुराचारो हि पुरुषो लोके भवति निन्दितः।
दुःखभागी च सततं व्याधितोऽल्पायुरेव॥

(मनु० ४।१५५-५८)

स्पष्टं यत् सदाचाराचारशब्दौ प्रयुक्तौ स्तः पर्यायेण। सदाचारस्य प्रामाण्यविषये सामान्यनियमा :—

देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणम्। कर्षकवणिक्पशुपालकुसीदिकारवः स्वे स्वे वर्गे। तेभ्यश्च यथाधिकारमर्थान् प्रत्यवहृत्य धर्मव्यवस्था—गौ० ११।२०-२२।

---

१. बौधा० ध० सू० १।५।१३।

२. पारस्कर० २।१७; मानवगृ० १।४।६।

३. तन्त्र० २११; जै० १।३।७।

४. वशिष्ठ० ६।६-८; अनुशासन० १०४।६-९; विष्णु० ध० सू० ७१।९०-९२; मार्क० पु० अ० ३४; ब्रह्मपु० १२१।६-९; विष्णुपु० अ० ३।११-१२; कूर्मपु० उत्त० अ० १५।

देशधर्मजातिकुलधर्मान् श्रुत्यभावादब्रवीन्मनुः— वसिष्ठ० १।१७।

आपस्तम्बो देशाचारकुलाचारान् स्वे स्वे देशे च प्रमाणमित्यङ्गीकरोति[1]। परञ्च बौधायनेनापस्तम्बमतं खण्डितम्—

पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः। यानि दक्षिणतस्तानि व्याख्यास्यामः यथैतदनुपेतेन सह भोजनं स्त्रिया सह भोजनं पर्युषितस्तानि मातुलपितृष्वसृदुहितृगमनमिति अथोत्तरत ऊर्णाविक्रयः सीधुपानमुभयतोदद्भिर्व्यवहार आयुधीयकं समुद्रसंयानमिति। इतरदितरस्मिन् कुर्वन् दुष्यतीतरस्मिन्। तत्र तत्र देशप्रामाण्यमेव स्यात्। मिथ्यैतदिति गौतमः। उभयञ्चैव नाद्रियेत शिष्टस्मृतिविरोधदर्शनात् ( बौ० ध० सू० १।१।१९-२६ )।

अत्र स्मृतिचन्द्रिका[2]—"इतरो दाक्षिणात्यः इतरस्मिन् देशे उदीच्यदेशे अनुपनीतभोजनं कुर्वन् दुष्यतीति न स्वदेशे। कुतः देशप्रामाण्यात् तद्देशनिबन्धनत्वात्प्रामाण्यास्येत्यर्थः"। स्मृतिमुक्तावलिरपि—"अब्रह्मचारिदाराद्यैः सार्धं भोजनकर्म च मातुलादिसुतायां च विवाहः शिष्टसम्मतः इत्येते दाक्षिणात्यानामपि गीता उदाहृताः। समुद्रयानं मांसस्य भक्षणं शस्त्रजीविका। शीधुपानमुदीच्यानामविगीतानि धर्मतः[3]।

नैतिकताया उभयप्रकारकं मानदण्डमस्वीकरोति गौतमः शिष्टाचारविरोधात्। अत्र भट्टपादस्योपपत्तिः—

"सर्वेषामेवमादीनां प्रतिदेशं व्यवस्थया। आपस्तम्बेन संहृत्य दुष्टादुष्टत्वमाश्रितम्। येषां परम्पराप्राप्ताः पूर्वजैरपि अनुष्ठिताः। त एव तैर्न दुष्येयुराचारैर्नेतरे जनाः।... ततश्च मन्वादिवाक्यप्रतिषिद्धाचाराणां प्रामाण्यमावश्यकमभ्युपगन्तुम्। आपस्तम्बवचनन्तु बौधायनेन स्मृतिविरुद्धदुष्टाचारोदाहरणान्येव प्रयच्छता निराकृतम्। स्पष्टकामादिहेत्वन्तरदर्शनान्न विरुद्धाचाराणामापस्तम्बवचनस्य वा श्रुतिमूलत्वोपपत्तिः[4]"।

"येषां परम्पराः" इत्युद्धरन् व्यवहारप्रकाशे स्वीकृतम्—"न दुष्येयुः अव्यवहार्या राजदण्डयाश्च न भवेयुरित्यर्थः" ( पृ० २२ )। स्मृतिविरुद्धत्वाद्देशाचारादीनामप्रमाणता प्रस्तौति गौतमः[5], परञ्च स्वयं मनुना सदाचारराज्यसम्बन्धे देशाचारादीनां महत्त्वं स्वीकरोति—

---

१. आप० ध० सू० २।६।१५।१।

२. स्मृ० चं० १ पृ० १०।

३. स्मृतिमु० ( वर्णा० पृ० १३० )।

४. तंत्र० पृ० २११।

५. गौ० ११।२०।

जातिजानपदान् धर्मान् श्रेणीधर्मांश्च धर्मवित् ।
समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपादयेत् ॥
... ... ...

सद्भिराचरितं यत्स्याद्धार्मिकैश्च द्विजातिभिः ।
तद्देशकुलजातीनामविरुद्धं प्रकल्पयेत् ॥

( मनु० ८।४१, ४६ )

कुल्लूकमेधातिथिसदृशटीकाकारा "देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाण" मिति गौतममतमनुसरन्ति । कुल्लूकभट्टः स्वयमसङ्गतिं प्राप्नोति–धर्मान् ब्राह्मणादिजातिनियतान्याजनादीन् जानपदांश्च नियतदेशव्यवस्थितानाम्नायाविरुद्धान्... ...। श्रेणीधर्मांश्च वणिगादिधर्मान् प्रतिनियतकुलव्यवस्थितांश्च ज्ञात्वा तदविरुद्धान् राजा व्यवहारेषु तत्तद्धर्मान् व्यवस्थापयेत्" । स्पष्टं यदाम्नायैरविरुद्धा एव कुलादिधर्माः स्वीकर्त्तव्या राज्ञा, तदा श्रेष्ठ्यादिधर्मानुरूपेणैव, यदि विरोधोऽस्ति वेदेन सह कथं राजा व्यवस्थापयेत् ? मेधातिथिरपि—"समीक्ष्य विचार्य किमाम्नायैर्विरुद्धा अथ न तथा पीडाकराः कस्यचिदुत न एवं विचार्य येऽविरुद्धास्तान् प्रतिपादयेत्, अनुष्ठापयेदित्यर्थः ।... मातृविवाहादिः सार्वभौमेन निवारणीयः । ... ... एककार्यापन्ना वणिक्कारुकुसीदचातुर्विद्यादयः तेषां धर्माः श्रेणीधर्माः ।

मनुवचनव्याख्याने ( मनु० २।६ ) मेधातिथिराचारस्य स्पष्टीकरणे विशदेन भाषितम्—

"आचारश्चैव साधूनां च शब्देन वेदविदामिति सम्बध्यते । पदद्वयेन शिष्टत्वं लक्ष्यते । शिष्टानां य आचारः सोऽपि धर्मे मूलम् । आचारो व्यवहारः अनुष्ठानं यत्र श्रुतिस्मृतिवाक्यानि न सन्ति शिष्टाश्च धर्मबुद्ध्यानुतिष्ठन्ति तदपि वैदिकमेव पूर्ववत्प्रतिपत्तव्यम् । यथा विवाहादौ कङ्कणबन्धनादि माङ्गलिकत्वेन यत् क्रियते या च कन्यायास्तदर्हविवाहयिष्यमाणायाः प्रख्यातवृक्षयक्षचतुष्पथादिपूजा देशभेदेन तथा चूडासंख्या देशभेदश्च ( दाच्च ? ) या चातिथ्यादीनां गुर्वादीनामनुवृत्तिः प्रियहितवचनाभिवादनाभ्युत्थानादिरूपा" ( मेधा० ) ।

"तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नैको मुनिर्यस्य मतं प्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः" ॥

( वनपर्व ३१३।११७ )

इति महाभारतवचनेन वेदाविरुद्धशिष्टाचारप्रामाण्यसिद्धान्तेन सहोपस्थितासङ्गतिविषये विश्वरूपः ( याज्ञ० १।९ ) मेधातिथिः ( मनु० २।१ ) एव-

मन्ये टीकाकारा विचारितवन्तः। तत्र मेधातिथिः—"अथाप्यं न्यायो महाजनो येन गतः स पन्था इति ...। विद्वान्सो ह्यत्र निष्कामाः प्रवृत्तिपूर्वा अनिन्द्याश्च लोके। अथाप्रामाणिकी प्रवृत्तिः साऽपि वेदप्रामाण्यात्सिद्धचैवेति।

अत्रेदमवधेयं यत् मनुगौतमादिस्मृतिकाराः स्पष्टरूपेण देशाचारपरिपालनं स्वीकुर्वन्ति राज्ञा यथा 'तथैव'—

यस्मिन्देशे य आचारो व्यवहारः कुलस्थितिः।
तथैव परिपाल्योऽसौ यदा वशमुपागतः॥ ( याज्ञ० १।३४३ )

परञ्च टीकाकाराः 'यदि शास्त्रविरुद्धो न भवति' इति योजयन्ति। याज्ञवल्क्यस्य वचनस्य (१।३४३) व्याख्याने विश्वरूपस्यासङ्गतिर्दृश्यते—'किञ्च, यदा परदेशो वशमुपागतस्तदा न स्वदेशाचारादिसंकरः कार्यः, किन्तु यस्मिन्देशे य आचारः कुलस्थितिर्व्यवहारो वा यथैव प्रागासीत्तथैवासौ परिपालनीयो यदि शास्त्रविरुद्धो न भवति"। यदा 'परदेशो' अवैदिकः स्यात्तदा 'शास्त्र-विरुद्धो न भवति' इति कथं संगच्छते ? टीकाकारस्य मतं याज्ञवल्क्यस्यैव वचनेन सह विचारणीयम्—

श्रेणिनैगमपाखण्डिगणनामप्ययं विधिः।
भेदं चैषां नृपो रक्षेत्पूर्ववृत्तिं च पालयेत्॥ ( २।१९२ )

## सदाचारः राज्यश्च

पाखण्डिनो वेदमार्गविरोधिन आसन्; तेषामपि विधेः संरक्षणं राज्ञः कर्तव्यम्। यथा देवलः—

यस्मिन्देशे पुरे ग्रामे त्रैविद्ये नगरेऽपि वा।
यो यत्र विहितो धर्मस्तं धर्मं न विचारयेत्॥
( स्मृ० चं० १ पृ० १० )

अर्थशास्त्रेऽप्येषा व्यवस्था—

देशस्य जात्या संघस्य धर्मो ग्रामस्य वाऽपि यः।
उचितस्तस्य तेनैव दायधर्मं प्रकल्पयेत्॥ ( अर्थ० ३।७ )

अक्षपटलमध्यक्षः...निबन्धपुस्तकस्थानं कारयेत्। तत्राधिकरणानां संख्याम् ...देशग्रामजातिकुलसङ्घातानां धर्मव्यवहारचरित्रसंस्थानं ... निबन्धपुस्तकस्थं कारयेत्। ( अर्थ० २।७ )।

महाभारतानुसारेण स्पष्टं यत् 'न हि सर्वहितः कश्चिदाचारः सम्प्रवर्त्तते' ( शान्ति० २६१।१७ )। अतः राज्ञा सर्वेषामाचाराणां विशेषव्यवस्था परिपाल-नीया—

देशजातिकुलानाञ्च ये धर्मास्तत्प्रवर्तिताः ।
तथैव ते पालनीयाः प्रक्षुभ्यन्त्यन्यथा प्रजाः ॥
जनापरक्तिर्भवति बलं कोशश्च नश्यति ।
उद्बाह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ॥
मध्यदेशे कर्मकराः शिल्पिनश्च गवाशिनः ।
मत्स्यादाश्च नरा पूर्वे व्यभिचारताः स्त्रियः ॥
उत्तरे मद्यपा नार्यः स्पृश्या नृणां रजस्वलाः ।
खशजाताः प्रगृह्णन्ति भ्रातृभार्यामभर्तृकाम् ॥
अनेन कर्मणा नैते प्रायश्चित्तदमार्हकाः ।

( स्मृ० चं० १।१०; स्मृ० मु० वर्णा० पृ० १३०, शुक्र० ४।५।४८-५२;
व्य० मयू० पृ० ७, व्य० प्र० पृ० २२ )

अन्ये शास्त्रकाराः सदाचारस्य व्याख्यानं राज्येन तस्य प्रयोगप्रकारादीनां वर्णनमित्थं कुर्वन्ति[१] । स्मृतिचन्द्रिकायां कात्यायनस्य वचनम्—

यस्य देशस्य यो धर्मः प्रवृत्तः सार्वकालिकः ।
श्रुतिस्मृत्यविरोधेन देशदृष्टः स उच्यते ॥
गोत्रस्थितिस्तु या तेषां क्रमादायाति धर्मतः ।
कुलधर्मं तु तं प्राहुः पालयेत्तं तथैव तु ॥
देशपत्तनगोष्ठेषु पुरग्रामेषु वासिनाम् ।
तेषां स्वसमयैर्धर्मशास्त्रतोऽन्येषु तैः सह ॥
तस्माच्छास्त्रानुसारेण कार्याणि साधयेत् ।
वाक्याभावे तु सर्वेषां देशदृष्टेन सन्नयेत् ॥
देशस्यानुमतेनैव व्यवस्था या निरूपिता ।
लिखिता तु सदा धार्या मुद्रिता राजमुद्रया ॥
शास्त्रवद्यत्नतो रक्ष्या तां निरीक्ष्य विनिर्णयेत्[२] ।

पितामहोऽपि—

ग्रामगोष्ठपुरश्रेणिसार्थसेनानिवासिनाम् ।
व्यवहारश्चरित्रेण निर्णेतव्यो बृहस्पतिः ॥ (स्मृ० चं० २ पृ० २६)

१. परा० मा० ३।४१; अपरार्कः पृ० ५९९; व्य० प्र० पृ० २१-२२; व्य० नि० १५-१६ ।
२. स्मृ० चं० २ पृ० २६ ।

**देशदृष्टः**

मनुः अष्टादशसु मार्गेषु "देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः" देशदृष्टस्य प्राथमिकतां स्वीकरोति। मेधातिथिः स्वस्मिन् भाष्ये देशदृष्टविषये प्रचुरप्रमाणाः प्रस्तौति।

प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः।
अष्टादशसु मार्गेषु निबद्धानि पृथक् पृथक् ॥ ( मनु० ८।३ )

हेतुभिरिति हेतुर्निर्णयसाधनम्। स च द्विविधः। प्रमाणरूपो व्यवस्थारूपश्च। तत्र प्रमाणरूपोऽर्थनिर्णयहेतुः साक्ष्यादिः। व्यवस्थारूपो यतोऽसक्ते वाऽर्थनिश्चये व्यवहारः संतिष्ठते। यथा सत्यशपथ...निर्णयहेतुतां प्रतिपद्यते। न च परीक्षितस्य पुंसो वचनादसत्यात्पूर्ववदर्थनिश्चयः प्राश्निकानामभ्युपगमेऽपि व्यवस्थाहेतुर्भवति।

सा च व्यवस्था द्विविधा। साधारण्यसाधारणी च। देशभेदादाश्रयभेदात्साऽपि द्विविधा। अविरुद्धा विरुद्धा च। अविरुद्धा यथा केषाञ्चिद्दाक्षिणात्यानामपुत्रा स्त्री भर्तर्युपरते सभास्थाणुमुपारोहति तमुपारूढाऽधिकृतैः परीक्षिता कृतलक्षणा तत्क्षणानन्तरं सपिण्डेषु ऋक्थं लभते। तथोदीचां लभ्यमानां कन्यां याचमानाय भोजनं यदि दीयते तत इयं तुभ्यं दत्तेत्यनुक्तेऽपि प्रतिश्रुता भवति। क्वचिद्देशे वसन्ते धान्यं प्रयुज्यते शरदि द्विगुणं प्रत्यादीयते। तथाऽनुज्ञातभोग आधिर्द्विगुणेऽपि तदुत्थधने प्रविष्ट आ मूलहिरण्यदानाद्भुज्यत एव। एषा हि "अशितिभागं गृह्णीयात् "कुसीदवृद्धिर्द्वैगुण्यं नात्येतीति" विरुद्धा।

तत्र भेदाश्रया देशदृष्टहेतुशब्देनाभिहिताः। शास्त्रदृष्टास्तु हेतवः शास्त्रे पठिताः। ते च केचन शास्त्रकारैः कल्पितव्यवस्थाः केचिद्यथावस्त्ववस्थिता अनुदिताः। तत्र कल्पितव्यवस्था यथालेख्यं यथोपभोगः साक्षिणश्चानुमानं वस्तुनियतं "यथा नयत्यसृक्पातैर्मृगस्य मृगयुः पदम्" ( ४४ ) इति। यद्यपि सर्वं लौकिकं न शास्त्रकारवचनवत्प्रामाण्यं लभते तथाऽपि लौकिकमेव क्वचिच्छास्त्रमाश्रयितव्यम्। यच्चेदृशे चापराध इदं दिव्यमियता च कालेन भोगः प्रमाणमिति लौकिकमपि तच्छास्त्रदृष्टमित्युक्तम्। तस्यां व्यवस्थायां शास्त्रकाराणां मूले संभवति सा प्रमाणम्। या त्वसम्भवतन्मूला सा नादरणीया।

## परस्परविरोधे प्रामाण्यम्

श्रुतिस्मृतिसदाचारेषु परस्परविरोधे प्रामाण्यस्य व्यवस्था विचारणीया। मिताक्षरानुसारेण एतेषां विरोधे पूर्वपूर्वस्य बलीयस्त्वम्[1]। सर्वैः स्मृतिकारैः श्रुतेः मूलत्वं स्वीकृतम्—"धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः" ( मनु० २।१३ );

---

१. याज्ञ० १।७।

धर्म...प्रथमं श्रुतिः। द्वितीयं तु स्वशास्त्राणि तृतीयं लोकसङ्ग्रहः ( वृद्धगौतमः १४ पृ० ५९९ ); "वेद एव द्विजातीनां निःश्रेयसकरः परः" ( याज्ञ० १।४० )। तुल्यबलविरोधे विकल्पव्यवस्था, यथा गौतमः—"तुल्यबलविरोधे विकल्पः" ( गौ० १।५ )। "श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ। स्मृतिद्वैधे तु विधयः कल्पनीयाः पृथक् पृथक् ( जाबालिः स्मृ० चं० २१-४९६ )। सामान्य-विशेषयोर्मध्ये सामान्यो विधिः विशेषोऽर्थवादः। यथा ब्रह्महत्या निषेधः सामान्य-विधिः ( मनु० ८।३८ ) किन्तु प्राणरक्षायां ब्राह्मणवधो विशेषविधिः ( मनु० ८।३५० ), एवमेवाततायिब्राह्मणवधे न पातकः ( मनु० ८।३५१ ) इत्यपि ज्ञेयः।

स्मृतिसदाचारमध्ये विरोधे सति स्मृतेः प्रामाण्यमिति तु सामान्यनियमः[1]। विशेषविधिर्विचारणीयः। याज्ञवल्क्यस्मृतेः ( ३।२५० ) व्याख्याने विश्वरूपः— "लोकश्च शब्दार्थाधिगमहेतुरिति नातीव क्लेशनीयम्। यथैवार्यावर्तनिवासिशिष्ट-व्यवहारस्थितिस्तथैव स्मृत्यर्थोऽनुसर्तव्यो न तद्विपर्ययेण"। मेधातिथिः स्पष्टरूपेण लोकविक्रुष्टत्वात्स्मृतेर्बाधः स्वीकरोति—"इदं तु युक्ततरमुदाहरणम्। नियोगधर्मः स्मृत्या विहितः[2] लोकसंक्रुष्टत्वान्न क्रियन्ते" ( मनु० ४।१७६ )।

शिष्टाचारादपि धर्मस्य कर्त्तव्यतावगतिः, सोऽपि स्मृतिरेवेति मेधातिथिः— "इह सदाचारो न श्रुतिर्न स्मृतिर्निबन्धाभावात्। निबन्धाक्षरा हि स्मृतयः प्रसिद्धाः। अतस्तस्य स्मृतित्वमुपपादयति। यत्कार्यं धर्मप्राप्त्यर्थं तद्धर्मशास्त्रम्। यत्र धर्मः शिष्यते कर्त्तव्यतया प्रतीयते सा स्मृतिः। निबन्धानिबन्धावप्रयोजकौ शिष्टसमाचारादपि धर्मस्य कर्त्तव्यतावगतिः। सोऽपि स्मृतिरेव ( मेधा०, मनु० २।१० )। पक्षोऽयं समर्थितोऽधोलिखितवचनैः—

अस्मिन्धर्मोऽखिलेनोक्तो गुणदोषौ च कर्मणाम्।
चतुर्णामपि वर्णानामाचारश्चैव शाश्वतः॥ ( मनु० १।१०७ )

शाश्वतो वृद्धपरम्परया नेदानीन्तनैः प्रवर्तित इति मेधातिथिः।

आचारः प्रथमो धर्मः श्रुत्युक्तः स्मार्त एव च।
तस्मादस्मिन् सदा युक्तो नित्यं स्यादात्मवान् द्विजः॥
( मनु० १।१०८ )

"यः श्रुत्युक्त आचारः पुरुषसाधारणप्राधान्यख्यापनार्थं च धर्माख्यः यश्च स्मार्तः स परमः प्रकृष्टो धर्मः परमो ज्योतिष्टोमाष्टकादिभ्यः श्रौतस्मार्तधर्मेभ्यः" इति गोविन्दराजः। "श्रुत्युक्तोऽग्निहोत्रहोमादिः स्मार्तोऽष्टकादिः"। तुलनीय-मेतत्—

---

१. वसिष्ठ० १।५; याज्ञ० १।७; २।१।७ मिता०; स्मृ० चं० २ पृ० २६६; कुल्लूकभट्टः, मनु० २।१०।

२. गौ० १८।४-१४; याज्ञ० १।६८-६९; वसि० १७।५६-६५, याज्ञ० १।६८-६९।

वेदोक्तः परमो धर्मः स्मृतिशास्त्रगतोऽपरः ।
शी टाचीर्णः परः प्रोक्तस्त्रयो धर्माः सनातनाः ॥
(अनुशासन० १४१।६५)

सदाचारः स्मृतेर्वेदस्त्रिविधं धर्मलक्षणम् ।
(शान्ति० २५९।३)

तस्मिन् कुलक्रमागतमाचारं त्वाचरेद् बुधः ।
स गरीयान् महाबाहो सर्वशास्त्रोदितादपि ॥
(सुमन्तुः, स्मृ० मु० वर्णा० पृ० ७)

श्रुतिस्मृत्युदितः सम्यक्साधुभिर्यश्च सेवितः ।
समाचारं निषेवेत नेहेतान्यत्र कर्हिचित् ॥
(कूर्म० उ० १५।१९)

आचारशब्दस्य प्रयोगोऽपि युगक्रमात् परिवर्तितोऽस्ति । उपनिषत्कालतः[1] आचारपदेन वेदविद्ब्राह्मणघोषिताचारस्यैव ग्रहणमासीत् । मनोर्व्याख्याने (२।६) एष एव नियमः स्वीकृतो मेधातिथिना । परञ्च उत्तरवर्तिकाले प्रतिलोमादीनामप्याचारास्तेषां विषये प्रामाण्यविषयाः राज्ञा, परिपालनीयाश्च ।

अतो ब्राह्मादिविवाहेषु निवृत्तसपिण्डभावाया मातुरसपिण्डत्वान्मातुलसुता परिणेया । एवं पैतृष्वसेय्यपि । न च तथाविधा मातृष्वसा तद्दुहिता च किमिति न परिणेयेति वाच्यम् । शास्त्राविरोधेऽपि लोकविरुद्धत्वाद्धर्म्यमपि लोकविद्विष्टं तन्नानुष्ठेयम् । तदुक्तं मनुना अस्वर्ग्यः...चरेन्न तु इति[2]। ननु च यदि मातुरसपिण्डतया मातुलसुता परिणेया तथाविधा मातृष्वसा तद्दुहिता च किमिति न परिणेया । उच्यते । सत्यम् । न ब्रूमः शास्त्रतो न परिणेयेति किं तु लोकविरुद्धत्वात् । यच्च धर्म्ममपि, लोकविरुद्धं तन्नानुष्ठेयम् । तदुक्तं मनुना अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु[3] । यानि तु चतुर्थीमुद्वहेत्कन्यां चतुर्थः पञ्चमो वरः । ... इत्यादि वचनानि कानिचिन्निर्मूलानि कानिचिद्दत्तकसापत्न्यादिसंबन्धविषयतया विप्राणां क्षत्रियादिषु सापिण्ड्यश्चविषमतया वा नेयमिति निर्णयसिन्धुमतम् (३ पूर्वार्धं पृ० २२८) । येषां कुले देशे चानुकल्पत्वेन सापिण्ड्यसङ्कोचः परम्परया समागतस्तेषां सापिण्ड्यसङ्कोचेन विवाहो न दोषाय स्वकुलदेशविरुद्धेन सापिण्ड्यसङ्कोचेन विवाहे दोषो भवत्येव (धर्मसिन्धुः ३ पूर्वा० पृ० २२८) । यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत् । नित्यं स व्यवहार्यः स्याद् वेदाच्चैतत्प्रती-

१. गौ० २८।४८, ५१; बौ० ध० सू० १।१।४९; मनु० ७।१०८-१०९; वसिष्ठ० १।६ ।
२. स्मृ० मु० (वर्णाश्रम० पृ० १।३१)
३. स्मृ० चं० १ पृ० ७१ ।

यते । इति चतुर्विंशतिमताच्च । तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा । विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥ इति चन्द्रिकापारिजातोदाहृतषट्त्रिंशन्मताच्च । ... अतः सिद्धमेतत् । कलावपि येषां कुले देशेऽनुकल्पत्वेन सापिण्डचसङ्कोचः परम्परया समागतः तेषां तादृशसङ्कोचेन न दोषः, अस्ति च भार्यात्वोत्पत्तिः । अन्येषां तैः सह व्यवहारे नैव दोषः । स्वयं तु कुलदेशविरुद्धसापिण्डचसङ्कोचेन विवाहे भवत्येव दोषः[1] । यद्यपि मातुलसुतापरिणयनमुदीच्यशिष्टगर्हितं तथापि दाक्षिणात्यशिष्टैराचरितत्वेन नाविगीतोऽयमुदीच्यानामाचारः । न च दाक्षिणात्यानां रागमूलत्वं शङ्कनीयं विधिनिषेधपरीक्षकैरेव तद्विवाहकरणात् । मातृष्वसृसुताविवाहस्तु अविगीतेन शिष्टाचारेण गर्हितः[2] ।

देशाचारानुसारेण धार्मिकव्यवहारस्य भिन्नता वैदिककालत एव आयाति[3] । धर्मशास्त्रेऽनेके आचाराः देशाचारेण भिन्नरूपेण उपस्थिता आसन् । परस्परविरुद्धेऽपि वैधाः स्वीकृताश्च । एवंप्रकारका अनेके आचारा मिताक्षरया ( याज्ञ० १।२५६ ) प्रस्तुताः । धर्मद्वैतनिर्णयस्य प्रस्तावनायां शङ्करभट्टः—"मीमांसाद्वैतसाम्राज्यनीतिज्ञो भट्टशङ्करः । ... गुरोश्च त्रिस्थलीसेतुकर्त्तुर्ज्ञात्वा मतानि तु । दाक्षिणात्यमते स्थित्वा धर्मद्वैतेषु निर्णयम् । तनुते सोऽविगाहचैव नावमान्यः कथञ्चन" । निर्णयसिन्धुः सपिण्डविवाहविषये शूलपाणिवाचस्पतिशुद्धिविवेकादीनां मतानि दाक्षिणात्यादीनां मतविरोधे प्रस्तौति । सपिण्डस्याधारविषयेऽप्यस्ति परस्परवैमत्यं विज्ञानेश्वरमदनरत्नपारिजातवाचस्पतिशूलपाणिप्रभृतिषु मतेषु अपरार्कस्मृतिचन्द्रिकामाधवादिषु मतेषु च । अत्र मिताक्षराकारेण याज्ञवल्क्यव्याख्यायाम् ( याज्ञ० २।११९ ) मार्गं निर्दिशति—'न ह्यत्र प्राप्तस्य प्रतिषेधः किन्तु सिद्धस्यानुवादोऽयम् । लोकसिद्धस्यैवानुवादकान्येव प्रायेणास्मिन् प्रकरणे वचनानि" । व्यवहारप्रकाशेऽपि ( पृ० ४२० ) प्रायेण व्यवहारस्मृतीनां लोकसिद्धार्थानुवादकत्वमिति सकलनिबन्द्धृभिरभिधानात् । मनुस्मृतिव्याख्याने ( ९।२१० ) व्यवहारमयूखस्यापि पक्षोऽयम् "तेनाचारमूलकत्वेऽस्य वचसः सम्भवति तद्विरुद्धश्रुतिकल्पनमन्याय्यम् । व्यवहारशास्त्रस्य व्याकरणवत्प्रायेणाचारमूलकत्वाच्चेति तु परे ( पृ० १४६ ) ।

वरवधुयौनसम्बन्धेऽप्यस्ति वैमत्यम् । अश्वलायनगृह्यसूत्रस्य ( १।७।१-२ ) व्याख्याकारौ हरिदत्तनारायणौ देशाचारकुलाचारानुसारेण भिन्नतां स्वीकुरुतः । विद्यते च आपस्तम्बगृह्यसूत्रम्—आवृत्तश्चा स्त्रीभ्यः प्रतीयेरन् ( २।१५ ) । अत्र

१. संस्कारकौ० पृ० ६१३, ३२०; वैजयन्ती—विष्णु ध० सू० २४।१० ।

२. परा० मा० १।२ पृ० ६५ ।

३. शत० ब्रा० १।१।४।१३; ३।५।१०; १२।६।१।४१; ऐ० ब्रा० १२।७।१७।१; १८।८।२८; १।२९।५; तै० ब्रा० १।१।८; १।३।१; ३।८।८ ।

हरदत्तः—"मन्त्ररहिताः क्रिया आवृत उच्यन्ते"। तात्पर्यदर्शने विस्तरेण व्याख्या प्राप्यते—"आ स्त्रीभ्यः सर्ववर्णेभ्यः सकाशात् अवगम्य प्रतीयेरन् कुर्वीरन् विवोढारः। तत्र समन्त्रका ग्रहपूजाङ्कुरारोपणप्रतिसरबन्धाद्या आचारसिद्धाः। अमन्त्रका नागबलियक्षबलीन्द्राणीपूजादयः। ताश्च यथाजनपदं यथावर्णं यथाकुलं यथास्त्रीपुंसं व्यवस्थिता एव। न तु सर्वाः सर्वत्र समुच्चिताः"। कुलाचारादीनां मान्यता स्मृतेर्विरुद्धेऽपि प्रायशः सर्वे शास्त्रकाराः स्वीकुर्वन्ति[1]। एवमेव ग्रामाचारस्यापि प्रामाण्यं विशिष्यते—ग्रामवचनं च कुर्युर्विवाहश्मशानयोर्ग्रामं प्रविशतादिति वचनात्तस्मात्तयोर्ग्रामः प्रमाणमितिश्रुतेः (पार० गृ० सू० १।८)। एतेषामाचाराणामिव जात्याचारस्यापि प्रभुत्वं स्थापितमस्ति[2]। राजा परामृष्टोऽस्ति याज्ञवल्क्येन (१।३६१)। तथा च कात्यायनः—

प्रतिलोमप्रसूतेषु तथा दुर्गनिवासिषु।
विरुद्धं नियतं प्राहुस्तं धर्मं न विचालयेत्॥
(कात्या०, व्य० प्र० ८९)

प्रातिलोम्ये प्रसूतानां ... निवासिनाम्।
शास्त्रवद् यत्नतो रक्ष्या सन्दिग्धौ साधनं तु सा॥ (बृह०)

अस्मिन् स्थले परिभाषाप्रकाशे मित्रमिश्रस्य निर्णयोऽवधेयः—

"अथवा आचारश्चैव साधूनामितिच्छेदः। एवञ्चावेदविदामपि क्षीणदोषपुरुषाणामाचारः प्रमाणम्। तथा च सच्छूद्राद्याचारस्तत्पुत्रादीन्प्रति भवति प्रमाणम्" (परि० पु० पृ० ९)।

आचाराणां परस्परविरोधे सति राज्ञां किं पालनीयमित्यत्र सहिष्णुतासिद्धान्तस्यापूर्वपक्षः पुर आयाति। अशोक आश्वासयति पत्रेन सङ्घब्राह्मणाजीवकपाखण्डिनः सर्वे रक्षणीयाः आसन्। श्रीमद्भगवद्गीता सर्वेषां परस्परविरुद्धाचारसम्पन्नदेवानामुपासनां श्रेष्ठत्वेन स्वीकरोति। मानसोल्लासोऽन्येषां देवानां निन्दां द्वेषञ्च वर्जयति; देवं देवकुलं च दृष्ट्वा नमस्कुर्यान्न लङ्घयेत्, इति सिद्धान्तं प्रतिपादयति च। तथाहि देशविशेषेण परस्परं निन्दाबाहुल्यमुपलभ्यते। दाक्षिणात्यैर्विप्रैरौत्तराह। वेदविदो विप्रा मांसभक्षिणो निन्द्यन्ते। औत्तराहैश्च मातुलसुतोद्वाहिनो यात्रासु मृद्भाण्डवाहिनो दाक्षिणात्या निन्द्यन्ते। बह्वृचा आश्वलायनशाखां काण्वशाखायाः प्रशस्तां मन्यन्ते वाजसेयिनस्तु वैपरीत्येन (जीवन्मुक्ति० वासनाक्षय० पृ० ५४)।

---

१. गौ० ११।२०; हरदत्तः, आप० ध० सू० २।६।१६।७।

२. गौ० ११।२०; वसिष्ठ० १।१७; मनु० १।११८; ८।४१,४६; कौ० ३।७; शुक्र० ४।५।४७।

याज्ञवल्क्यस्य सिद्धान्त :—

श्रेणिनैगमपाखण्डिगणानामप्ययं विधिः ।
भेदं चैषां नृपो रक्षेत्पूर्ववृत्तिं च पालयेत् ।। ( याज्ञ० २।१९२ )

मिताक्षरानुसारेण नैगमाः ये वेदस्याप्तप्रणीतत्वेन प्रामाण्यमिच्छन्ति पाशुपतादयः । पाखण्डिनो ये वेदस्य प्रामाण्यमेव नेच्छन्ति नग्नाः सौगतादयः ।... एतेषां च श्रेण्यादीनां भेदं धर्मव्यवस्थानं नृपो रक्षेत् । दीपकलिका "नैगमौ वणिगादिनानापौरनैगमाख्यः प्रकीर्तितः" इति स्वीकरोति । षट्त्रिंशन्मते 'प्रामाण्यमेव ये वेदे न वदन्ति कुदृष्टयः । तेषां बौद्धर्हतादीनां पाषण्डाख्या प्रकीर्त्यते । प्रव्रज्यावसिता ये तु पाषण्डाख्याः प्रकीर्तिताः" । इत्थमेव व्यवहारनिर्णये ( पृ० १३ ), अपरार्के ( पृ० १७१-१७२ ), विष्णुधर्मोत्तरे, विष्णुपुराणे च पाखण्डिनो व्याख्याताः । समयस्यानपाकर्म इति प्रकरणे नारद उद्घोषयति—

पाषण्डनैगमादीनां स्थितिः समय उच्यते ।
पाखण्डिनैगमश्रेणिपूगव्रातगणादिषु ।।
संरक्षेत्समयं राजा दुर्गे जनपदे तथा ।
यो धर्मः कर्म यच्चैषामुपस्थानविधिश्च यः ।।
यच्चैषां वृत्त्युपादानमनुमन्येत तत्तथा ।

बृहस्पतिरपि--

कीनाशाः कारुका मल्लाः कुसीदश्रेणिनर्त्तकाः ।
लिङ्गिनस्तस्कराश्चैव स्वेन धर्मेण निर्णयः ।।
( व्य० मा० पृ० २८१; व्य० वि० पृ० ११; व्य० प्र० पृ० २३ )

निःसन्धिग्धमेतद् यन्मनुस्मृत्यादौ वेदवाह्यस्मृतीनां तुल्यता न स्वीकृता, परञ्च स्वस्मिन् विषये तेषां प्रामाण्यमस्त्येव—

कितवान् कुशीलान् क्रूरान् पाषण्डस्थांश्च मानवान् ।
विकर्मस्याञ्छौण्डिकांश्च क्षिप्रं निर्वासयेत्पुरात ।।
( मनु० ९।२२५ )

पाषण्डिनो विकर्मस्थान् बैडालव्रतिकाञ्छठान् ।
हैतुकान्वकवृत्तींश्च वाङ्मात्रेणाऽपि नार्चयेत् ।। ( मनु० ४।३० )

स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः ।
रङ्गावतारिपाखण्डिकूटकृद्विकलेन्द्रियाः ।। ( याज्ञ० २।७० )

## स्मृत्याचारयोर्बलाबलम्

तेष्वदर्शनाद् विरोधस्य समा विप्रतिपत्तिः स्यात् ( १।३।४।८ ) शास्त्रस्था वा तन्निमित्तत्वात् ( ९ )। यथा हि मन्वादिस्मृतीनां श्रुतिमूलत्वं तथा सदाचाराणामपि श्रुतिमूलत्वम्, स्मृतिविरुद्धानमपि अदृश्यमानलोभादिमलानां वेदव्यवहारिभिरेव आचर्यमाणत्वेन सदाचारत्वाविशेषात् "अपि वा कर्त्तृसामान्यात् प्रमाणानुमानं स्यात्" ( १।३।१।२ ) इत्यनेन न्यायेन स्मृतिविरोधेऽपि वेदविरोधाभावेन विप्रतिपत्तेः समत्वात् सदाचारस्य वेदमूलत्वमेव। अथवा आचारस्यैव बलीयस्त्वम्। स हि श्रुत्यनुमाने लिङ्गभूतः प्रत्यक्षेणैवावगम्यते। स्मृतिः पुनः मनुवचनादनुमिता श्रुतिमनुमापयति इति विप्रकर्षात् दुर्बला। येषामपि मनुवचनमेव श्रुत्यनुमाने लिङ्गम्, तेषामपि वक्तृज्ञानानुमानद्वारेण श्रुत्यनुमानमिति विप्रकृष्टवत्वमेव स्मृतिः, आचारात् इति।

तदुक्तं "यावद् विस्मरणं दृष्ट्वा श्रुतिरन्याऽनुमास्यते। तावल्लब्धात्मकः पूर्वमाचारः प्रतितिष्ठति॥ प्रतिष्ठितस्य बाधश्च कीदृशः परिकल्प्यताम्। तेनाचारबलीयस्त्वं समत्वं वेह युज्यते"॥ भवेदेवं यदि स्मृत्याचरयोस्तुल्यरूपत्वं भवेत्। किन्तु स्मृतिः भ्रान्त्यादि शून्याप्ततरमन्वादिप्रणीता सोपनिबन्धना च अन्यथासिद्धा वेदमेव मूलभूतं कल्पयति इति युक्तम्। आचारस्य तु वेदव्यवहारिभिः धर्मबुद्ध्या प्रयुक्तस्यापि कालविप्रकर्षात् न्यायभासादिमूलतया च अन्यथाभावशङ्कया न स्मृतिविरोधे प्रमाण्यम्। दृश्यन्ते च अद्यत्वेऽपि वेदव्यवहारिणामेव धर्मबोधेऽनाचाराः स्मृतिविरुद्धाः। यथा दाक्षिणात्यब्राह्मणीनामनुस्मरणम्—

"मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात्।
इतरेषां तु वर्णानां स्त्रीधर्मोऽयं व्यवस्थितः॥

न च स्मृतेः मनुवचनानुमितायाः अप्रत्यक्षत्वेन आचारस्यैव बलवत्त्वमिति वक्तव्यम्। यतः स्मृतेः साक्षादेव श्रुत्यनुमानम्। आचारस्य तु अस्मर्यमाणस्य अनाचरणीयत्वात् तद्विषयं तावत् आचरितृस्मरणम्। ततश्च अपरापरपूर्वपूर्वभाविनानाविधाचरितृस्मृत्यनुमानपरम्परया मन्वादिस्मृत्यनुमानम्, ततश्च श्रुत्यनुमानमिति बहुतरविप्रकर्षात् न तुल्यबलत्वं नतरामाचारबलीयस्त्वम्। तदुक्तम्—

"आचारात्तु स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पना।
तेन द्व्यन्तरितं तस्य प्रामाण्यं विप्रकृष्यते॥"

न च मन्वादिस्मृतीरिव आचरितृस्मृतेरपि साक्षादेवश्रुतिमूलत्वम्, मन्वादयो हि महर्षयः प्रकृष्टज्ञानतया विप्रकीर्णनानाशाखागतां तत्तदाचारमूलभूतां श्रुतिमनुस्मृत्य स्मृत्वा स्वनिबन्धनैः प्रतिपादयन्ति, न तु आचरितारः सर्वे नानावेदशाखाऽनुसरणक्षमाः। किन्तु मन्वादिमहर्षिसङ्कल्पितमेव अर्थं पूर्वपूर्वाचरितृपर-

म्पराऽऽयातमवगम्य स्मृत्वा आचरन्ति इति सम्भवति। तेन यत् पूर्वाधिकरणे शिष्टाचारस्य श्रुतिमूलत्वेन प्रामाण्यमभिहितम्, तत् मन्वादिस्मृत्यविरुद्धस्यैव। तेन न वक्तव्यं 'व्यभिचारास्पदत्वादाचारस्य क्वचिदपि न प्रामाण्यम्', एवं भूतस्याचारस्य अव्यभिचारादिति। शास्त्रस्था ये मन्वादयः तेषामेव स्मरणं बलवत् तन्निमित्तत्वादेव शिष्टाचारस्येति।

स्मृत्याचारविरोधे वा साम्यवैषम्यसंशये। समा विप्रतिपत्तिः स्यात् (१।३।४।८)। मूलसाम्याद् द्वयोरपि। यथैव श्रुतिमूलत्वात् स्मरणानां प्रमाणता। आचाराणां तथैव न विशेषो बलाबले। यद् वाऽऽचारबलीयस्त्वं फलस्थत्वात् प्रतीयते। फलाद् वियुज्यमानं हि प्रमाणं दुर्बलीभवेत्। श्रुतिराचारमूलं या फलस्था सोपलभ्यते। यावद्धि स्मरणं दृष्ट्वा श्रुतिरन्याऽनुमास्यते। तावल्लब्धात्मकः पूर्वमाचारः प्रतितिष्ठति। प्रतिष्ठितस्य बाधश्च कीदृशः परिकल्प्यताम्। तेनाचारबलीयस्त्वं समत्वं वेह युज्यते। स्मृतीनां वा बलीयस्त्वं शास्त्रस्था वेति वर्ण्यते। उभयोः श्रुतिमूलत्वं न स्मृत्याचारयोः समम्। सप्रत्ययप्रणीता हि स्मृतिः सोपनिबन्धना। तथा श्रुत्यनुमानं हि निर्विघ्नमुपजायते। आचारात्तु स्मृतिं ज्ञात्वा श्रुतिर्विज्ञायते। ततः तेन व्यवन्तरितं तस्य प्रामाण्यं विप्रकृष्यते। न ह्येकैव श्रुतिः काचिदाचाराणां प्रवर्त्तिका। भिन्नाभिर्विप्रकीर्णत्वान्नास्मृताभिः प्रवर्त्तनम्। नैव प्रपाठकेनैव ह्याचाराणां विधिस्थितिः। क्वचित् प्रकरणे कश्चित् कथञ्चिदुपलभ्यते। कुमारिलमतेन स्मृतिसदाचारयोः प्रामाण्यतारतम्यं विचारितम्। उभयोरपि वेदमूलत्वात् तुल्यमेव प्रामाण्यमिति पूर्वपक्षे, स्मृतेः साक्षात् वेदमूलत्वात् सदाचारस्य च स्मृतिद्वारैव वेदमूलत्वकल्पनासम्भवात् स्मृतेरेव बलवत्तरं प्रामाण्यमिति सिद्धान्तः।

वेदाविरुद्धशाक्यादिवचसामप्रामाण्यनिरूपणम्। यत्तर्हि वेदविहितं न बाधते, शिष्टात् वा वेदविदो न कोपयति विहाराराममण्डलकारणवैराग्यध्यानाभ्यासाहिंसासत्यवचनदमदानदयादि, तत् बुद्धादिभाषितं प्रमाणेनाविरुद्धं चेत्। न। शास्त्रपरिमाणत्वात्। परिमितान्येव हि चतुर्दशाष्टदश वा विद्यास्थानानि धर्मप्रमाणत्वेन शिष्टैः परिगृहीतानि वेदोपवेदाङ्गोपाङ्गाष्टादशधर्मसंहितापुराणशास्त्रशिक्षादण्डनीतिसंज्ञकानि, न च तेषां मध्ये बौद्धार्हतादिग्रन्थाः स्मृता गृहीता वा। "प्रतिकञ्चुककरूपेण पूर्वशास्त्रार्थगोचरम्। यदन्यत् क्रियते तस्य धर्मं प्रत्यप्रमाणता"।

तथा च प्रायश्चित्तादिदानकाले यो वाक्यमात्मीयमन्त्रकाविकृतं वा श्लोकं सूत्रं वा उच्चार्य मानवादिप्रायश्चित्तं दद्यात् स न कश्चिदपि धमार्थं प्रतिपद्येत्। "वेदे नैवाभ्यनुज्ञाता येषामेव प्रवक्तृता। नित्यानामभिधेयानां मन्वन्तरयुगादिषु। तेषां विपरिवर्तेषु कुर्वतां धर्मसंहिताः। वचनानि प्रमाणानि नान्येषामिति

निश्चयः"। "ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमथर्ववेदं चतुर्थमितिहासं पुराणं पञ्चमम्" इति। तेन प्रतिकल्पमन्वन्तरयुगनियतनित्यऋषिनामाभिधेय-कृत्रिमविद्यास्थानकारा ये वेदेऽपि मन्त्रार्थवादेषु श्रूयन्ते, तत्प्रणीतान्येव विद्या-स्थानानि धर्मज्ञानाङ्गत्वेन संमतानि।

## आत्मतुष्टिप्रामाण्यवादः

मनुस्मृतेर्द्वितीयाध्यायस्य प्रथमश्लोके धर्मं प्रतिपिपादयिषुर्धर्मसामान्य-लक्षणं प्रथममाह—

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत॥

विद्वद्भिर्वेदविद्भिः सद्भिर्धार्मिकै रागद्वेषशून्यैरनुष्ठितो हृदयेनाभिमुख्येन ज्ञात इत्यनेन श्रेयः साधनमभिहितम्। तत्र हि स्वरसान्मनोऽभिमुखीभवति। वेद-विद्भिर्ज्ञात इति विशेषणोपादानसामर्थ्याज्ज्ञातस्य वेदस्यैव श्रेयःसाधनज्ञाने कारणत्वं विवक्षितम्। खड्गधारिणा हत इत्युक्ते धृतखड्गस्यैव हनने प्राधान्यम्। अतो वेदप्रमाणकः श्रेयः साधनं धर्म इत्युक्तम्। एवंविधो धर्मस्तं निबोधत। उक्तार्थसङ्ग्रहश्लोकाः—

वेदविद्भिर्ज्ञात इति प्रयुञ्जानो विशेषणम्।
वेदादेव परिज्ञातो धर्म इत्युक्तवान् मनुः॥

हृदयेनाभिमुख्येन ज्ञात इत्यपि निर्दिशन्।
श्रेयः साधनमित्याह तत्र ह्यभिमुखं मनः॥

वेदप्रमाणकः श्रेयः साधनं धर्म इत्यतः।
मनूक्तमेव मुनयः प्रणिन्युर्धर्मलक्षणम्॥

अत एव हारीतः—"अथातो धर्मं व्याख्यास्यामः। श्रुति प्रमाणको धर्मः। श्रुतिश्च द्विविधा वैदिकी तान्त्रिकी च"। भविष्यपुराणे—

धर्मः श्रेयः समुद्दिष्टं श्रेयोऽभ्युदयलक्षणम्।
स तु पञ्चविधः प्रोक्तो वेदमूलः सनातनः॥

अस्य सम्यगनुष्ठानात्स्वर्गो मोक्षश्च जायते।
इह लोके सुखैश्वर्यमतुलं च खगाधिप॥

जैमिनिरपि इदमपि धर्मलक्षणमसूत्रयत्—"चोदनालक्षणोऽर्थोधर्म" इति। उभयं चोदनया लक्ष्यते, अर्थः श्रेयः साधनं ज्योतिष्टोमादिः। अनर्थः प्रत्यवाय-साधनं श्येनादिः। तत्र वेदप्रमाणकं श्रेयः साधनं ज्योतिष्टोमादि धर्म इति

सूत्रार्थः। स्मृत्यादयोऽपि वेदमूलत्वेनैव धर्मे प्रमाणम्। गोविन्दराजस्तु हृदयेभ्यनुज्ञात इत्यन्तःकरणविचिकित्साशून्य इति व्याख्यातवान्। तन्मते वेदविद्भिरनुष्ठितः संशयरहितश्च धर्म इति धर्मलक्षणं स्यात्। एवञ्च दृष्टार्थग्रामगमनादिसाधारणं धर्मलक्षणं विचक्षणा न श्रद्दधते। मेधातिथिस्तु हृदयेनाभ्यनुज्ञात इति यत्र चित्तं प्रवर्त्तयतीति व्याख्याय, अथवा हृदयं वेदः स ह्यधीतो भावनारूपेण हृदयस्थितो हृदयमित्युच्यते।

तार्किकपाशुपतपाञ्चरात्रसांख्यपातञ्जलादि उपपत्तिप्रधानमुपदेशप्रधानं शास्त्रम्। तत्र वैदिके शास्त्रे पूर्वोत्तरमीमांसे उपदेशप्रधाने वैशेषिकतार्किकपाशुपतपाञ्चरात्रसांख्यपातञ्जलादीनि उपपत्तिप्रधानानि अवैदिकेऽपि लौकायतं शास्त्रमुपपत्तिप्रधानम्। आर्हतसौगते चत्वारो भेदाः सौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकाः सर्वाण्येतानि विभिन्नप्रस्थानानि मोक्षार्थञ्च प्रवृत्तानि, मोक्षश्च 'नान्यः पन्था विद्यतेऽयनाय' इति एकमार्गः श्रूयते। सर्वेषु शास्त्रेषु स्वमते एव मोक्षोऽस्ति न परमते इति साटोपं प्रतिपाद्यते विनिगमनाविरहाच्च नैतेषामन्यतमस्य श्रैष्ठ्यमध्यवसातुं शक्यम्। नाप्येषामैकमत्यं वक्तुं शक्य विभिन्नप्रस्थानतयायाः स्पष्टत्वात्। ऐकशास्त्र्यापत्तेश्च। अतः शास्त्राणां तत्त्वानवधारणात्संशयः किमुपादेयमिति। ननु 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः' इति श्रुतेरात्मानुभव एव संशयोच्छेदं करिष्यति किमुत्तप्ततयेत्याशङ्क्याह--

अतत्त्वज्ञस्य शास्त्राणां सन्ततं संशयात्मनः।
अकृतव्यवसायस्य श्रेयो ब्रूहि पितामह॥ ( शान्ति० २८७।१ )

व्यवसायः आत्मदर्शनार्थं शमदमाद्यनुष्ठानं तदकुर्वतः किं हितं स्यात्तद् ब्रूहि, यद्यपि सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्यय इति न्याये नाशरीरतालक्षणे मोक्षे तत्साधने शमादौ सर्वेषां शास्त्राणामैकमत्यमस्ति। तथा हि, शून्यदेहात्मवादिनौ माध्यमिकलौकायतिकौ सङ्घातस्य तुच्छत्वं तस्यैव कर्त्तृत्वादिधर्माश्रयत्वं च प्रथयितुमेव सदात्मानमपलपत एवं तार्किकादयोऽप्यहमर्थस्यैव कर्त्तृत्वादिकं प्रथयितुं चिदात्मानमपलपन्ति। अतो न तेषामात्मापलापे तात्पर्यं किं तु सङ्घातादेस्तुच्छत्वादौ तथा सांख्या अपि आत्मनोऽसङ्गत्वमेव प्रथयितुं प्रधानादिक कल्पयन्ति न तु तेषामात्मनः कर्त्तृत्वे प्रधानादिसत्यत्वे आत्मभेदे वा तात्पर्यमस्ति। एवं तन्त्रान्तरतात्पर्यमप्यूह्यम् सर्वथाऽपि देहनाशो वा दुःखनाशो वा निर्विषयज्ञानधारा वा चितितन्मात्रां वा परमानन्दो वा मोक्ष इति शब्दजविकल्पमात्रं सुषुप्तवदद्वैतदर्शनाभावः सर्वेषां मोक्षे तुल्यः शमादीनां साधनत्वं च व्यावहारिकप्रक्रियाणामात्मतत्त्वप्रतिपादनप्रकारभेदानां च तेषां परस्परविरोधानैकशास्त्र्यं विधिमुखेनैव अखण्डसच्चिदानन्दैकरसं ब्रह्म वेदान्ताः विस्पष्टं प्रतिपादयन्तीति तेषामेव श्रैष्ठ्यञ्च स्पष्टम्।

धारणार्थाद् धृञो धातोः कर्त्तरि प्रत्यये मनि, विश्वं धरति यत्कर्म तद्धर्ममिति सिध्यति। इत्थं धर्मस्वरूपं तु सुबोधमिव लक्ष्यते। परन्तु धारणं पुंसा दुराचाराच्च सम्भवेत्। दुराचारस्य धर्मत्वे तदुपासकाः सर्वे स्युः। अन्योन्यस्य दुराचारान्मारणम्, न तु धारणम्। तस्माद्विशिष्ट आचारो धर्मः स्यादिति निर्णयं कर्त्तुं विद्वद्भिरित्यादि प्राह धर्मस्य लक्षणम्। 'विद्वान्सः' इह गृह्यन्ते नरा अध्यात्मवित्तमाः। 'सन्तो' विवक्षिताः शिष्टाः, "श्रुतिप्रत्यक्षहेतवः"। 'अद्वेषरागिणो'ऽलूक्षा अनासक्ता अहेतुकाः, कृपया कर्मकर्त्तारो लोकसङ्ग्रहकारणात्। योऽभ्यनुज्ञायते स्वस्मिन्नन्याचारो हृदात्मनः, स हृदयाऽभ्यनुज्ञातशब्दार्थोऽत्र विवक्षितः। हृदयस्याऽभ्यनुज्ञानं स्वस्य च प्रियमात्मनः, आत्मतुष्टिश्च, तुल्यार्थे मनोः शास्त्रे प्रयुज्यते। 'विद्वद्भिः सेवितो'ऽनेन शिष्टाचारः प्रदर्शितः। रागद्वेषनिषेधाच्च तदसद्हेतुखण्डनम्। 'हृदयेनाऽभ्यनुज्ञात' इत्यात्मप्रियता स्मृता। न शिष्टाचारमात्रस्य धर्मत्वमुच्यते, यतः धर्मव्यतिक्रमो दृष्टः शिष्टानामपि साहसम्। तस्मादद्वेषरागित्वं प्रोक्तं शिष्टविशेषणम्। शिष्टाचारोऽपि नैव स्याद्धर्मो द्वेषादिमूलकः। शिष्टाचारस्य सद्धेतुमूलकत्वपरीष्टये आत्मतुष्टिः प्रमा प्रोक्ता, स्वहृदयाभ्यनुज्ञया। अन्येषां कर्मणा येन स्वस्मिस्तुष्टिः प्रजायते। तदेवान्येषु कर्त्तव्यं स्वयश्चापीति या प्रमा। सा हृदयाऽभ्यनुज्ञेति स्वात्मतुष्टिश्च कथ्यते। सैवात्मौपम्यबुद्धिश्च यया धर्मः प्रमीयते। न सर्वसुगमं शास्त्रं नैकमत्यं च शास्त्रिणाम्—

शास्त्रं यदि भवेदेकं श्रेयो व्यक्तं भवेत्तदा।
शास्त्रैश्च बहुभिर्भूयः श्रेयो गुह्यं प्रवेशितम्॥ ( शां० २८७।१० )

आत्मतुष्टौ परेषां कल्याणं विधेराधारो भवति। धार्मिकाधार्मिकत्वाभ्यां पीडाऽनुग्रहकारिणौ प्रसिद्धौ; हि तथा चाह पाराशर्योऽत्र वस्तुनि—इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये, आचाण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम्[१]। मनः प्रसृज्यते भावम्, बुद्धिरध्यवसायिनी, हृदयं प्रियाप्रिये वेद, त्रिविधा कर्मवेदना[२]। प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये। आत्मौपम्येन पुरुषः प्रमाणमधिगच्छति[३]। अन्यैराचरितं कर्म यदिच्छेदात्मनः प्रियम्। स्वधर्ममपि तद् विद्यादात्मौपम्येन निश्चितम्। यथैवात्मा परस्तद्वद् द्रष्टव्यः सुखमिच्छता। सुखदुःखानि तुल्यानि यथात्मनि तथा परे। नाश्रमः कारणं धर्मे क्रियमाणो भवेद्धि सः। अतो यदात्मनोऽपथ्यं परेषां न तदा चरेत्[४]। भीष्मोऽपि शास्तीदं धर्मराजं युधिष्ठिरं हृदयेनाऽभ्यनुज्ञातं मनूक्तं धर्मलक्षणम्—

---

१. वाक्यपदीये ब्रह्म० श्लो० ४०; श्लोकवार्त्तिके च औत्पत्तिक—( मी० द० १।१।५ ) सूत्रे कारिका २–३ धृतं वेदव्यासवचनम्।

२. महा० शां० २५४।१। ३. महा० अनु० ११३।९। ४. याज्ञ० ३।६५।

श्रूयतां धर्मसर्वस्वं श्रुत्वा चाप्यवधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥

यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः ।
न तत्परेषु कुर्वीत जानन्नप्रियमात्मनः ॥

जीवितुं यः स्वयं येच्छेत्कथं सोऽन्यं प्रघातयेत् ।
यद्यदात्मन इच्छेत तत्परस्यापि चिन्तयेत् ॥

सर्वं प्रियाऽभ्युपगतं पुण्यमाहुर्मनीषिणः ।
पश्य त्वं लक्षणोद्देशं धर्माधर्मे युधिष्ठर ॥

लोकसङ्ग्रहसंयुक्तं विधात्रा विहितं पुरा ।
सूक्ष्मधर्मार्थनियतं सतां चरितमुत्तमम् ॥ (शान्ति० अ० २६५)

न तत्परस्य सन्दध्यात्प्रतिकूलं यदात्मनः ।
एष साङ्ग्राहिको धर्मः कामादन्यः प्रवर्त्तते ॥ ( अनु० १७५।८ )

यत्कर्मकुर्वतोऽस्यानुष्ठातुः पुरुषस्यान्तरात्मनस्तुष्टिः स्यात्तत्प्रयत्नतोऽनुष्ठेयम् । अतुष्टिकरं वर्जयेत् । एतच्चाविहितानिषिद्धगोचरं वैकल्पिकविषयञ्च—

यत्कर्म कुर्वतोऽस्य स्यात्परितोषोऽन्तरात्मनः ।
तत्प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत् ॥ ( मनु० ४।१६१ )

तस्माद् द्वेषरागादिमूलकं हृदयङ्गमं शिष्टाचरणमेवात्र धर्मस्वरूपमिष्यते। न सतां साहसं नाऽपि कामाद्धर्मव्यतिक्रमः, न वा तत्कर्म धर्मः स्यादात्मने यन्न रोचते । सुचरितान्युपास्यानि, नेतराणि त्वया सदा । अस्माकमिति सूष्ठूक्तं मन्त्रद्रष्टा महर्षिणा—

यान्यनवद्यानि कर्माणि तानि सेवितव्यानि, नो इतराणि ।
यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि, नो इतराणि ॥
( तै० उ० अनु० ११ )

तेषां तेजो विशेषेण प्रत्यवायो न विद्यते । तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरकोनरः—दृष्टो धर्मव्यतिक्रमः साहसञ्च पूर्वेषाम् । तेषां तेजो विशेषेण प्रत्यवायो न विद्यते । तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरः ( आप० ध० सू० २।१३।७-९ ) । दृष्टो धर्मव्यतिक्रमः साहसञ्च महताम् । अवरदौर्बल्यात् (गौ० ध० सू० ३-४) ।

धर्मव्यतिक्रमो दृष्ट ईश्वराणाञ्च साहसम् ।
तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥

नैतत्समाचरेज्जातु मनसाऽपि ह्यनीश्वरः ।
विनश्यत्याचरन्मौढ्याद्यथाऽरुद्रोऽब्धिजं विषम् ॥

ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित् ।
तेषां यत्स्ववचो युक्तं बुद्धिमांस्तत्समाचरेत् ॥
( भा० स्क० १०।३३।३०-३२ )

कर्त्तव्यविचिकित्सायामथवा धर्मं संशये। अनाम्नाते च धर्मेऽस्ति शिष्टाचारप्रमाणता। "अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्, ये तत्र ब्राह्मणाः सम्मर्शिनः, युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः, यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः। अथाऽनाभ्याख्यातेषु ये तत्र" इत्यादि पूर्ववत् ( तै० उ० अनु० ११ )। शिष्टाचारेषु सन्देहे विरोधे वा मिथः सति, आत्मतुष्टिः प्रमाणं स्याद् धर्माधर्मविनिर्णये। तन्त्रवार्त्तिकेऽपि—"एवञ्च विद्वद्वचाद्विनिर्गतं प्रसिद्धरूपं कविभिर्निरूपितम्। सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणवृत्तयः"।

तस्माद् हृदाऽभ्यनुज्ञाते रागद्वेषादिवर्जिते सदाचारेऽस्ति धर्मत्वम्। शिष्टाचारोपदेशाभ्यामुक्त्वा धर्मविनिर्णयम्, आत्मतुष्टिप्रमाणमाह शिष्टाचारविशुद्धये "सर्वमात्मनि सम्पश्येत्सच्चासच्च समाहितः, सर्वमात्मनि संपश्यन् नाऽधर्मे कुरुते मनः"। "आत्मैव देवताः सर्वाः; सर्वमात्मन्यवस्थितम्। आत्मा हि जनयत्येषां कर्मयोगं शरीरिणाम्"। शिष्टाचरणमप्यात्मतुष्टयाध्यात्मदृशा स्वयं सदसद्वेति वीक्ष्यैव ग्राह्यं धर्मस्वरूपतः। इत्थं हि दृश्यन्ते धर्मशास्त्रकाराणां मतानि। तस्माद्धर्मस्वरूपं स्यात्तदेवाचरणं सतां यदध्यात्मविदादिष्टं स्वीकृतञ्च हृदात्मनः। इत्येवं मानवं धर्मस्वरूपमपरे जगुरापस्तम्बादयो धर्मशास्त्रकाराः श्रुतर्षयः—

"न धर्माधर्मौ चरत 'आवां स्व' इति, न देवगन्धर्वा न पितर इत्याचक्षते—'अयं धर्मोऽयमधर्म' इति। यं त्वार्याः क्रियामाणं प्रशसन्ति स धर्मो यं गर्हन्ते सोऽधर्मः। सर्वजनपदेषु एकान्तसमाहितमार्याणां वृत्तं सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामादाम्भिकानां वृत्तसादृशं भजेत" ( आप० ध० सू० १।७।२० )।

स्वहृदयाभ्यनुज्ञाख्या यात्मतुष्टिः परा प्रमा धर्मे प्रोक्ता, तया स्याद्धि कामात्मताग्रहभ्रमः। "हृदयेनाभ्यनुज्ञात" इतीच्छाविषयोऽस्ति यः, स धर्मः स्यादिति व्याख्याविकल्पे भ्रमसम्भवः। ततः कामात्मता स्वेच्छाचारिताख्या प्रसज्यते, तया परार्थबाधेति न सा लोके प्रशस्यते। स्वार्थाभिरुचयो लोका निर्मर्गाश्रित्तवृत्तयः, स्वभावतः परहान्यात्मतुष्टये प्रवर्त्तते। अथ धर्मस्वरूपञ्चेत् स्वेच्छाचरणमिष्यते, तर्हि भूयाननर्थोऽत्रानपेक्षितः प्रसज्येत। यत्र यस्यात्मा तुष्यति स तत्कर्म करिष्यति। एवं कामात्मता लोकेऽव्यवस्था प्रचरेत्। यद् हिरण्यं पशवः स्त्रियः व्रीहियवं पृथिव्यां तदेकस्यापि कामात्मनः सतः पर्याप्तं नास्ति। एवमेकस्य पुंसोऽपि कामात्मताऽवरोत्स्यते। लोकवृत्तिं हि सम्पूर्णामतः सा प्रतिषिध्यते। यथा कामात्मताऽवरोत्स्यते। लोकवृत्तिं हि सम्पूर्णामतः सा प्रतिषिध्यते।

यथा कामात्मता हेया तथैवाकात्मता नृभिः, लोकार्थबाधिका ह्याद्या, कर्मण्यन्त्याऽप्रयोजिका। अकामस्य कदापि नुः कर्मणि प्रवृति न स्यात्, तस्माद् अकामता चापि नृणामत्र निषिध्यते।

ये 'साधूनामात्मनस्तुष्टिरित्येवं' योजयन्ति, मूलविरोधतस्तेषां मतं प्रेक्षावद्भिरुपेक्ष्यम्। आत्मनस्तुष्टिरित्यर्थे 'स्वस्य च प्रियमात्मनः' इत्युक्तम्; 'आत्मनः' 'स्वस्य' चेति पदद्वयम्। तुष्टिपदार्थसम्बन्धः स्वात्मनैव प्रदर्शितः। अतस्तदन्वयः 'साधूनामित्यत्र' न युज्यते। अविशेषात् स्वशब्देन नृणाम् प्रत्येकं गृह्यते। तस्मात् सर्वेषामात्मनः प्रियं धर्मे प्रमाणम्।

ननु सर्वात्मतुष्टेश्चेदिष्यते धर्ममानता, तर्हि कामात्मनस्तुष्टेरपि प्रामाण्यमापतेत्; तथा सति अधर्मो धर्मस्वरूपतः प्रसज्येत। प्रायेण नृणामातुष्टिर्निम्नगा दृश्यते। मन्वादिभिरपि सदाचारप्रमाणत्वं स्मृतम्। तैरात्मतुष्टिर्धर्मे अन्या स्मृता; सा चानवस्थिता। कस्यचिदशुभेऽपि कर्मणि तुष्टिर्जायते, शाक्यस्येव कुहेतूक्तिवेदब्राह्मणदूषणे। द्विजाः पशुहिंसादिसम्बन्धे यज्ञे तुष्यन्ति। तेभ्यो यज्ञेभ्यः पीडिताः शाक्याः क्रुध्यन्ति। अन्ये द्विजातयः शूद्रान्नभोजनेनाऽपि तुष्यन्ति। स्वमातुलसुतां प्राप्य दाक्षिणात्यस्तु तुष्यति; अन्ये तु सव्यलीकेन मनसा तन्न कुर्वते[1]।

शान्तिपर्वणि—

दृश्यते धर्मरूपेण ह्यधर्मं प्राकृतश्चरन्।
धर्मं चाधर्मरूपेण कश्चिदप्राकृतश्चरन्॥ ( २६६।६ )

पशूनां वृषणं छित्वा ततो भिन्दन्ति नस्तकान्।
वहन्ति बहवो भारान्, बध्नन्ति, दमयन्ति च॥
( महा० शा० १५।५१ )

मानुषा मानुषानेव दासभावेन भुञ्जते।
वधबन्धनिरोधेन कारयन्ति दिवानिशम्॥ ( शा० २६८।३९ )

परस्वहरणे चोराः, परदारेषु कामुकाः, असंयताः स्त्रियश्च नित्यं नवेषु पुंसु तुष्यन्ति। पौञ्जिकाः श्रमिकाजितसर्वस्वग्रहात्तुष्यन्ति। 'हत्त्वा सत्त्वानि खादयन्ति' मानवा आत्मतुष्टये। केषाञ्चिदिष्टदेवो गोहत्ययाऽपि प्रसीदति। अपरे तां स्वधर्मेणातिदुःखिताः न क्षमन्ते। गोमांसैर्यवनादीनामात्मतुष्टिः प्रजायते। तद्दर्शनेऽपि हिन्दूनां धर्महानिः प्रसज्यते। एतेन वैदिकानन्तधर्मधीसंस्कृतात्मनाम्, आत्मतुष्टेः प्रमाणत्वं प्रसिद्धं धर्मशुद्धये;

यथा रुमायां लवणाकरेषु मेरौ यथा वोज्ज्वलरुक्मभूमौ।
यज्जायते तन्मयमेव तत्स्यात्तथा भवेद्वेदविदात्मतुष्टिः॥
( मी० त० वा० १।३।३ )

---

१. मी० तं० वा० १।३।३।

तस्मादस्तु सतामात्मतुष्टेर्धर्मप्रमाणता, नान्येषामिति चेद् ? अत्र ब्रूमः शास्त्रसदुत्तरम् ।

इन्द्रियतर्पणमात्मतुष्टिपदस्यार्थो नास्ति, येन कामात्मतृप्तेः अधर्मेऽपि धर्मता स्यात् । आत्मतुष्टिप्रमा सा हृदयाभ्यनुज्ञाख्या आत्मोपमानजा बुद्धिः, तस्मात् सर्वमनुष्याणामात्मतुष्टिः स्वके स्वके कार्ये धर्मतुला न्याय्या, स्वात्मौपम्येन पश्यताम् । कार्ये सार्वजनीने तु भूयोजनमतानुगा आत्मतुष्टिः प्रमाणं पर्षदः स्यात् । आत्मनोऽन्यकृताऽनिष्टं यथा स्वस्मै न रोचते, तथा नैव पराऽनिष्टं स्वयं कार्यमितीदृशी स्व सद्धर्मतुला लोके सर्वेषां हृदये स्थिता, तद्रूपैवात्मनस्तुष्टिः प्रमाणत्वेन सम्मता । न त्वनात्मज्ञलोकानां स्वार्थान्ध्योन्मार्गगामिनामात्मतुष्टिः प्रमाणं स्यादात्म्यौपम्यैरपश्यताम् । तस्मादयमधर्मोऽयं धर्म इत्यर्थनिर्णये सद्धृदयाभ्यनुज्ञैव दृढा धर्मतुला नृणाम् । एतामेव तुलाधारो धर्मतत्त्वार्थविद्वणिक् प्राह धर्मतुलां गुर्वीं शिष्टाचारं प्रमाणयन्—

वेदाऽहं जाजले, धर्मं सरहस्यं सनातनम् ।
सर्वभूतहितं मैत्रं पुराणं यं जना विदुः ॥
अद्रोहेणैव भूतानाम्, अल्पद्रोहेण वा पुनः[1] ।
या वृत्तिः स परो धर्मः, तेन जीवामि जाजले ॥
सर्वेषां यः सुहृन्नित्यं सर्वेषां च हिते रतः ।
कर्मणा मनसा वाचा, स धर्मं वेद जाजले[2] ॥
नाऽनुरुध्ये, विरुध्ये वा, न द्वेष्मि, न च कामये ।
समोऽहं सर्वभूतेषु, पश्य मे जाजले व्रतम् ॥
तुला मे सर्वभूतेषु समा तिष्ठति जाजले ।
नाहं परेषां कृत्यानि प्रशंसामि न गर्हये ।
आकाशस्येव विपेन्द्र पश्यन् लोकस्य चित्रताम् ॥
इति मां त्वं विजानीहि सर्वलोकस्य जाजले ।
समं मतिमतां श्रेष्ठ, समलोष्ठाश्मकाञ्चनम् ॥

---

१. अल्पद्रोहेण आपदि वा, 'नाऽनुपहत्य भूतानि भोगः सम्भवति' इति न्यायेनाऽद्रोहेण वृत्त्यसंभवाद्वा ।

२. लोके हि उपकारिणं प्रत्युपकुर्वन्ति, अद्रोहिणे न द्रुह्यन्ति च, इत्युत्सर्गः; तत्सामान्यादैहिकौ उपकाराऽपकारौ जन्मान्तरेऽपि सुखदुःखप्रदानाय प्रभवतः, न त्वाकस्मिकं कस्यचित्सुखं दुःखं वाऽस्ति जन्मान्तरीयं कारणं विनेत्यनुमीयते; अतः स्वभाववादस्तावदयुक्त एव; श्रुत्यादीनां धर्मे प्रामाण्यमपि वक्ष्यमाणरीत्या युज्यत एवेति ।

यदा चास्यं ते विभेति यदा चास्मान्न बिभ्यति।
यदा नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा॥
यदा न कुरुते भावं सर्वभूतेषु पापकम्।
कर्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा॥
न भूतो न भविष्योऽस्ति न च धर्मोऽस्ति कश्चन।
योऽभयः सर्वभूतानां स प्राप्नोत्यभयं पदम्॥
यस्मादुद्विजते लोकः सर्वो मृत्युमुखादिव।
वाक्क्रूराद् दण्डपरुषात् स प्राप्नोति महद्भयम्॥
यथावद् वर्तमानानां वृद्धानां पुत्रपौत्रिणाम्।
अनुवर्तामहे वृत्तमहिंस्राणां महात्मनाम्[१]॥
प्रनष्टः शाश्वतो धर्मः सदाचारेण मोहितः।
तेन वैद्यस्तपस्वी वा बलवान्वा विमुह्यते॥
आचाराज्जांजले प्राज्ञः क्षिप्रं धर्ममवाप्नुयात्।
एवं यः साधुभिश्चीर्णं चरेदद्रोहचेतसा[२]॥

---

१. "मा नः पथः पित्र्यान्मानवादधि दूरं नैष्ट परावतः" इति मन्त्रलिङ्गात् कुलाचारस्य प्रामाण्यं गम्यते, तदप्यस्मास्वस्तीत्याह—यथावदिति। 'अहिंस्राणाम्' इति हिंसामयः कुलाचारोऽपि अप्रमाणम् इत्युक्तः। मन्त्रार्थस्तु—'पित्र्यात्' पित्रादिसंसेवितात्, 'मानवात्' मनुर्मन्त्रः तत्प्रकाशिताद् वेदाऽविरुद्धादित्यर्थः। 'पथो' मार्गात्, नः अस्मान्, 'दूरं मा नष्ट' नयत, 'परावतः' वह्वायुष्मतोऽस्मानिति।

२. शिष्टाचारं प्रमाणयति—प्रनष्ट इति द्वाभ्याम्। शाश्वतः शश्वद्भवः परम्परया वेदमूलकत्वादनादिर्धर्मः शिष्टाचारः, स प्रनष्टः, यतः सदाचारेण क्वचिदंशे विरुद्धेन, मोहितः मोहं प्रापितः, यथा—'अवर्त्या शुन आन्त्राणि पेचे'। 'यः पूजयितुं पितृदेवमनुष्यात् पेच आन्त्राणि शुनः' इति श्रुतिस्मृतिभ्यां वामदेवस्य श्रेष्ठतमस्यापि बीभत्स आचार आपदि श्वमांसभक्षणरूपः प्रदर्शितः, पुराणे वा ऋषभादीनां महायोगिनामाचारं दृष्ट्वा आर्हतादयो मोहिताः पाषण्डमार्गमनुगता इत्युक्तम्; 'तेन' मोहरूपेण कारणेन, वैद्यो विद्वान् तपस्वी जितेन्द्रियः, बलवान् जितकामक्रोधः, सोऽपि विमुह्यते। विमुच्यत इति पाठे तेन सदाचारेणेत्यर्थः। अयंभावः—

सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः।
अर्धनाशे समुत्पन्ने सर्वं त्यजति दुर्मतिः॥

इति न्यायेन मूढाः शिष्टाचारमंशे विगीतं दृष्ट्वा कृत्स्नमपि त्यजन्ति, स्वभाववादं चानुरुद्ध्यन्ते; बुद्धास्तु श्रुत्यन्तरविरुद्धं विरुद्धांशमात्रं त्यक्त्वा तेनैव सदाचारेण मुच्यन्त इति। एतदेवाह—आचारादिति। 'धर्मं' मोक्षोपयोगिनमधिभारम्। उपसंहरति—एवमिति। साधुभिश्चीर्णं धर्मं यश्चरेत्, स धर्ममाप्नुयादित्यन्वयः (नैलकण्ठीयम्)।

एवमेवायमाचारः प्रादुर्भूतो यतस्ततः ।
सहायवान्द्रव्यवान्यः सुभगोऽथ परस्तथा ॥

अकारणो हि नैवास्ति धर्मः सूक्ष्मो हि जाजले ।
भूतभव्यार्थमेवेह धर्मप्रवचनं कृतम् ॥

सूक्ष्मत्वान्न स विज्ञातुं शक्यते बहुनिह्नवः ।
उपलभ्यान्तरा चाऽन्यानाचारानवबुध्यते[1] ॥

ये च च्छिन्दन्ति वृषणान् ये च भिन्दन्ति नस्तकान् ।
वहन्ति महतो भारान् बध्नन्ति दमयन्ति च ॥

हत्वा सत्त्वानि खादन्ति तान् कथं न विगर्हसे ?
मानुषा मानुषानेव दासभावेन भुञ्जते ।
वधबन्धनिरोधेन कारयन्ति दिवानिशम् ॥

आत्मनश्चापि जानन्ति यद्दुःखं वधबन्धने ।
अदंशमशके देशे सुखसंवर्धितान् पशून् ॥

तांश्च मातुः प्रियाञ्ज्ञानन्नाक्रम्य बहुधा नराः ।
बहुदंशाकुलान् देशान् नयन्ति बहुकर्दमान् ॥

वाहसम्पीडिता धुर्याः सीदन्त्यविधिना परे ।
न मन्ये भ्रूणहत्यापि विशिष्टा तेन कर्मणा ।

कृषिं साध्विति मन्यन्ते सा च वृत्तिः सुदारुणा ॥
भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम् ।

तथैवानडुहो युक्तान् समवेक्षस्व जाजले ॥
'अघ्न्या' इति गवां नाम क एता हन्तुमर्हति ।

---

१. 'अकारणः कारणम्' अनुष्ठानप्रयोजकं फलम्, तद्धीनः 'सूक्ष्म.' अभयदानात्मकः, भूतं ब्रह्म, भव्यं स्वर्गादि, उभयार्थमेव धर्माणां शमादीनां यज्ञादीनां च प्रवचनम् अध्ययनम्, वेदे कृतम् । अतः स्थूल धर्माद् यज्ञादेरन्यः सूक्ष्मधर्मोऽस्तीतिभावः ।

कुतः सूक्ष्मो धर्मो दुर्ज्ञेयः ? यतो बहुनिह्नवः, 'सप्तदश प्राजापत्यान् पशूनालभते, सप्तदश प्रजापतिः प्रजापतेराप्त्या' इत्यादिविधयः श्रेयः साधनत्वेन हिंसामुपदिशन्तोऽहिंसाशास्त्रमुपमृद्नन्तीत्यर्थः । तर्हि तदप्रमाणमेवेत्याशङ्क्याह—उपलभ्येति । 'उक्षाणं वा वेहन्त वाक्षदन्ते' 'महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्' इति श्रुतिस्मृतिविहितो मधुपर्के गवालम्भ एक आचारः, 'मा गामनागामदितिं वधिष्ट' इति मन्त्रलिङ्गाऽवगतो गवोत्सर्गविधिस्तद्विरुद्धोऽन्य आचारः, तत्र 'अनागाम्' इति विशेषणात् क्रत्वर्थहिंसाविधेरहिंसाविधिर्ज्यायानिति गम्यते, अनागस्त्वस्य प्राजापत्यपशुष्वपि तुल्यत्वादिति ( नैलकण्ठीयम् ) ।

महच्चकाराकुशलं वृषं गां वाऽऽलभेत्तु यः[१] ।
ईदृशानशिवान् घोरानाचारानिह जाजले ॥
केवलाचरितत्वात्तु निपुणो नाऽवबुद्ध्यसे ।
कारणाद्धर्ममन्विच्छेन् न लोकचरितं चरेत् ॥
यो हन्याद् यश्च मां स्तौति तत्रापि शृणु जाजले ।
समौ तावपि मे स्याताम्, न हि मेऽस्ति प्रियाप्रियम् ॥
एतदीदृशकं धर्मं प्रशंसन्ति मनीषिणः ।
उपपत्त्या हि सम्पन्नो यतिभिश्चैव सेव्यते ॥
सततं धर्मशीलैश्च निपुणोपलक्षितः[२] ।
( महा० शां० २६२।५-५५ )

आचारस्यात्मतुष्टेश्च भट्टपादः कुमरिलः प्रामाण्यमन्यथाप्याह तन्त्रवार्तिके— "यद्वा शिष्टात्मतुष्टीनां वचनादेव धर्मता, पुण्यकृद्ध्यानवत् तस्मादाचारेष्वपि सा मता"। यथा वा वरदानादौ देवताराधनोद्भवे, 'यद्वक्ष्यसि स मन्यस्ते विषघ्न' इति मन्त्रिते, लोकः स्मरति तं मन्त्रं विषापहरणादिषु; यथा वा सूर्यसिद्धान्ते नकुलो यां किलौषधिं दन्तैर्गृह्णाति, तामाहुः समस्तविषहारिणीम् । यथा वा मां भुवं कश्चिदध्यावसति पुण्यकृत्, तत्सम्पर्कपवित्रत्वात् सेव्यते पुण्यकारणम् । तथाऽऽचारात्मतुष्ट्यादिधर्म्यं धर्ममयात्मनां वेदोक्तमिति निश्चित्य ग्राह्यं धर्मबुभुत्सुभिः ।

मनुस्मृतौ कुल्लूकभट्टः मेधातिथिश्च—

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥
( मनु० २।६ )

वेद ऋग्यजुः सामाथर्वलक्षणः स सर्वो विध्यर्थवादमन्त्रात्मा धर्मे मूलं प्रमाणम् । अर्थवादानामपि विध्येकवाक्यतया स्तावकत्वेन धर्मे प्रामाण्यात् । यदाह जैमिनिः "विधिनात्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" मन्त्रार्थवादानामपि विधिवाक्यैकवाक्यतयैव धर्मे प्रामाण्यम्, प्रयोगकाले चानुष्ठे-

---

१. 'आप्यायध्वमघ्न्यादेव भागम्' इति श्रुतिप्रसिद्धमघ्न्या इति गवां नाम न हन्तुं शक्या 'अघ्न्या' इति योगात्; गवामवध्यत्वं श्रौतमित्यर्थः । 'चकार' कृतवान् आलभेत् हिंस्यात् ( नैलकण्ठीयम् ) ।

२. हर्षविषादौ, तौ हि हिंसायां प्रवर्तयतः, तथा चापस्तम्बः—हृष्टो दृप्यति, दृप्तो धर्ममतिक्रामति । क्रुद्धो हन्यात् पितॄनपि इति, तस्मात् सर्वभूताभयप्रदानमेव महान् धर्म इत्याशयः ( नैलकण्ठीयम् ) ।

यस्मारकत्वम्, वेदस्य च धर्मे प्रामाण्यं यथानुभवकरणत्वरूपं न्यायसिद्धम्। स्मृत्यादीनामपि तन्मूलत्वेनैव प्रामाण्यप्रतिपादनार्थमनूद्यते। मन्वादीनां च वेदविदां स्मृतिधर्मे प्रमाणम्। वेदविदामिति विशेषणोपादानाद्वेदमूलत्वेनैव स्मृत्यादीनां प्रामाण्यमभिमतम्। शीलं ब्रह्मण्यतादिरूपम्। तदाह हारीतः— "ब्रह्मण्यता देवपितृभक्तता सौम्यता अपरोपतापिता अनसूयता मृदुता अपारुष्यं मैत्रता प्रियवादित्वं कृतज्ञता शरण्यता कारुण्यं प्रशान्तिश्चेति त्रयोदशविधं शीलम्"। गोविन्दराजस्तु शीलं रागद्वेषपरित्याग इत्याह। आचारः कम्बलवल्कलाद्याचरणरूपः, साधूनां धार्मिकाणामात्मतुष्टिश्च वैकल्पिकपदार्थविषया धर्मे प्रमाणम्। तदाह गर्गः—"वैकल्पिके आत्मतुष्टिः प्रमाणम्" (कुल्लूकभट्टः)।

"वेदो धर्म मूलम्···वेद शब्देन ऋग्यजुः सामानि ब्राह्मणसहितान्युच्यन्ते। तानि चाध्येतॄणां वाक्यान्तरेभ्यः प्रसिद्धभेदानि। उपदेशपरम्परासंस्कृता अध्येतारः श्रुत्वैव वेदोऽयमिति प्रतिपद्यन्ते, यथा ब्राह्मणोऽयमिति। तत्र वाक्यसमूहेऽपि 'अग्निमीले' 'अग्निर्वै देवानामवम' इत्यादौ 'संसमिद्युवसे' 'अथ महाव्रतमित्यन्ते' वेदशब्दः प्रयुज्यते; तदवयवभूतेषु केवलेषु वाक्येष्वपि।...

व्युत्पाद्यते च वेदशब्दः—विदन्त्यनन्यप्रमाणवेद्यं धर्मलक्षणमर्थमस्मादिति 'वेदः'। तच्च वेदनमेकैकस्माद्वाक्याद् भवति, न यावानृग्वेदादिशब्दवाच्योऽध्यायाऽनुवाकसमूहः।

स च वेदो बहुधा भिन्नः—**सहस्रवर्त्मा सामवेदः, सात्यमुग्रिराणायनीयादिभेदेन; एकशतमध्वर्यूणाम्, काठकवाजसेनयकादिभेदेन; एकविंशतिर्बाह्वृच्या, आश्वलायनैतरेयादिभेदेन; नवधा आथर्वणम्, मोदकपैप्पलादिभेदेन।...**

स वेदो विशिष्टः शब्दराशिरपौरुषेयो मन्त्रब्राह्मणाख्योऽनेकशाखाभेदभिन्नः धर्मस्य 'मूलम्' प्रमाणम्, परिज्ञानहेतुः। कारणं मूलम्, तच्च वेदस्मृत्योर्धर्मं प्रति ज्ञापकतयैव, न निर्वर्तकतया, न च स्थितिहेतुतया वृक्षस्येव।

धर्मशब्दश्च प्राग्व्याख्यातः, यत्पुरुषस्य कर्त्तव्यं प्रत्यक्षाद्यवगम्य विलक्षणेन स्वभावेन श्रेयः साधनम्। कृषिसेवादि भवति पुरुषस्य कर्त्तव्यम्, अस्य च तत्साधनत्वस्वभावोऽन्वयव्यतिरेकाभ्यामवगम्यते; यादृशेन व्यापारेण कृष्यादेर्व्रीह्यादिसिद्धिः, साऽपि प्रत्यक्षाद्यवगम्यैव। यागादेस्तु साधनत्वं येन च रूपेण अपूर्त्तोत्पत्तिर्व्यवधानादिना, तन्न प्रत्यक्षाद्यवगम्यम्। श्रेयश्च अभिलषितस्वर्गग्रामादिफलप्राप्तिः सामान्यतो दुःखशब्दवाच्या तत्परिहारश्च। अन्ये तु परमानन्दादिरूपं 'श्रेयः'।

अयं धर्मो ब्राह्मणवाक्येभ्योऽवगम्यते लिङादियुक्तेभ्यः, क्वचिच्च मन्त्रेभ्योऽपि। 'वसन्ताय कपिञ्जलानालभते' इत्येवमादिभ्यः।

अखिलः कृत्स्नः, न किञ्चित्पदं वर्णो मात्रा वा, यन्न धर्माय।...विध्यर्थ-

वादमन्यनामधेयात्मको वेदः; ... सर्वेषामेतेषां धर्मप्रतिपादनपरत्वम् । ... तस्मात् सिद्धं कृत्स्नस्य वेदस्य धर्ममूलत्वम् । अन्ये तु श्येनादिवाक्यानां धर्मोत्पत्तिमत्त्वाभावमाशङ्कमाना निषेधानां च 'न लशुनं भक्षयेद्' इत्यादीनामखिलग्रहणं मन्यन्ते ।

केश्चित्तु 'मूल' शब्दः कारणपर्यायो व्याख्यायते; धर्मस्य वेदो मूलम्, प्रतिष्ठाकारणं साक्षात्प्रणाड्या च—'स्वाध्यायमधीयीत । 'ऋग्वेदं धारयन्विप्रः' इत्यादिचोदनासु साक्षात्, अग्निहोत्रादिकर्मस्वरूपज्ञापकतया प्रणाड्या ।

'स्मृतिशीले च तद्विदाम्'; 'अनुभूतार्थविषयं विज्ञानं स्मृतिरुच्यते' । तच्छब्देन वेदः प्रत्यवमृश्यते, तं विदन्ति 'तद्विदः'; वेदार्थविदाम्--'इदं कर्त्तव्यम्, इदं न कर्त्तव्यम्' इति यत् स्मरणं तदपि प्रमाणम् ।

स्मृतिशीले च तद्विदाम्, स्मृतिश्च शीलञ्च स्मृतिशीले । शीलं रागद्वेषप्रहाणमाहुः, तच्च धर्ममूलं वेदस्मृतिवन्न ज्ञापकतया, किन्तु निर्वर्तकत्वेन, रागद्वेषप्रहाणानि धर्मो निर्वर्तते ।

ननु च 'श्रेयः साधनं धर्म' इत्युक्तम्; रागद्वेषप्रहाणमेव च तत्स्वभावम् । तत्राऽसति व्यतिरेके किमुच्यते 'रागादिप्रहाणाद्धर्मो निर्वर्तत' इति ?

उक्तमस्माभिः – "धर्मशब्दोऽयं स्मृतिकारैः कदाचिद्विधिनिषेधविषयभूतायां क्रियायां प्रयुज्यते, कदाचित्तदनुष्ठानजन्य आफलप्रदानाऽवस्थायिनि कस्मिंश्चिदर्थे; तस्य च सद्भावे शब्द एव प्रमाणम्, यदि हि यागस्तथाविधं वस्त्वनुत्पाद्य विनश्येत्, तदा कालान्तरे कुतः फलोत्पत्तिः ? तदेतद्वस्तु, 'धर्म' शब्देनाऽत्राभिप्रेतम्; तस्य 'शीलं' मूलमिति न किञ्चिदनुपपन्नम् । तदभिप्राया एव व्यवहाराः— "एक एव सुहृद्धर्मो निधनेऽप्यनुयाति च" इति । क्रियाया, अनुष्ठानसमनन्तरमेव नाशात्, कुतः कालान्तरान्वयः ?

वयं तु ब्रूमः—"समाधिः शीलमुच्यते" । तथाहि शीलसमाधाविति धातुषु पठ्यते; समाधानं च मानसो धर्मः, यच्चेतसोऽन्यविषयव्याक्षेपपरिहारेण शास्त्रार्थनिरूपणप्रवणता, तच्छीलमुच्यते । द्वन्द्वश्चाऽयमितरेतरयोगे; तेन परस्परसापेक्षयोः स्मृतिशीलयोः धर्मं प्रति प्रामाण्यमेवाऽभिप्रेतम्, न तु पूर्ववन्निर्वर्तकत्वम्; एतदुक्तं भवति—"समाधानवती या स्मृतिः सा प्रमाणम्, न स्मृतिमात्रम् । तेन सत्यपि वेदार्थवित्त्वे यदेतत्पराणां स्मरणं न तद्धर्ममूलम्, भ्रान्त्यादिसम्भवाच्छास्त्रार्थऽवधानशून्यानाम् । ... विदुषामुपाध्यायादागमितविद्यानां तथा तदभ्यासपराणामनुष्ठानपराणां च स्मृतिः प्रमाणम् । एतत्सर्वं मन्वादीनामासीद् इति स्मर्यते; नाऽन्यथा तत्कृतेषु ग्रन्थेषु शिष्टानां परिग्रहोपपत्तिः । ... अद्यत्वेऽपि यस्यैतद्धेतुसद्भावः सोऽपि मन्वादिवद् ग्राह्यवाक्यः स्यात् । तथा च विदुषां प्रायश्चित्ताद्युपदेशे; तथाभूता एव परिषत्त्वेन प्रमाणीभवन्ति--एकोऽपि वेदविद्धर्मं यं व्यवस्येद् द्विजोत्तम' इति । अत एव स्मर्तृपरिगणना—'मनुर्विष्णुर्यमोऽङ्गिरा' इति निर्मूला । तथाहि—

"पैठीनसिबौधायनप्रचेतःप्रभृतयः" शिष्टैरेवं रूपाः स्मर्यन्ते, न च परिगणनायामन्तर्भाविताः; सर्वथा यमविज्ञानेन शिष्टाः स्मरन्ति वदन्ति वा एवं विधैर्गुणैर्युक्तम्, तेन चैतत्प्रणीतमिति तस्य वाक्यं सत्यपि पौरुषेयत्वे धर्मे प्रमाणं स्यादिति 'स्मृतिशीले च तद्विदाम्' इत्यस्यार्थः। अद्यत्वे य एवंविधैर्गुणैर्युक्तः ईदृशमेव च हेतुना ग्रन्थमुपनिबध्नीयात् उत्तरेषां मन्वादिवत्प्रमाणीभवेत्।

"आचारश्चैव साधूनाम्"; 'च' शब्देन वेदविदामिति सम्बध्यते, पदद्वयेन शिष्टत्वं लक्ष्यते; शिष्टानां य आचारः सोऽपि धर्मे मूलम्; आचारो व्यवहारः = अनुष्ठानम्; यत्र श्रुतिस्मृतिवाक्यानि न सन्ति, शिष्टाश्च धर्मबुद्ध्याऽनुतिष्ठन्ति, तदपि वैदिकमेव पूर्ववत्प्रतिपत्तव्यम्। ... ईदृशः आचारः, एषोऽपि हि स्वभावभेदेन, पुरुषाणां मनःस्वास्थ्यदौःस्थ्यादिभेदेनाऽनेकरूपः प्रतिविशेषमानन्त्याद् अशक्यो ग्रन्थेनोपनिबद्धुम्। यदेव बहुशः प्रियमस्येत्युपलक्षितं तदेवाऽवसरान्तरे विपरीतं सम्पद्यते;...न तत्र सामान्यतः शक्यं वेदानुमानम्, न विशेषतः अष्टकादीनां तु नियतैकरूपसमस्तप्रयोगस्मरणमित्येष स्मृत्याचाराणां भेदः।

'आत्मनस्तुष्टिरेव च' धर्ममूलमित्यनुषज्यते, वेदविदां साधूनामिति च। अस्याश्च धर्ममूलत्वं प्रामाण्येनैवेत्याहुः, यत्र ह्येवंविधानामनुष्ठेयेऽर्थे मनः प्रसीदति, द्वेषो न भवति, स धर्मः।

एवमेतद्—ईदृशानां महात्मनां मतिमतां महाप्रभावो मनःप्रसादो येनाऽधर्मोऽपि धर्मतामेति धर्मश्चाधर्मतां न रागद्वेषादिदोषवताम्, यथा रुमायां यत्किञ्चिद्द्रव्यं प्रविशति, तत्सर्वं लवणसात्सम्पद्यते; एवं वेदविदा सहसोत्पन्नेन मनःपरितोषेण सर्वं निर्मलीक्रियते।...अथवा नैव तेषामधर्मे आत्मा परितुष्यति; यथा विषघ्नीमेवौषधीं नकुलो दशति, नाऽन्याम्; अत एवोच्यतो नकुलो यां यां दशति सा विषघ्नीति। इह भवन्तश्चाहुः—ये वैकल्पिकाः पदार्थास्तेषु यस्मिन् पक्षे मनः प्रसीदति स पक्ष आश्रयितव्यः ("वैकल्पिके आत्मतुष्टिः प्रमाणम्" इति गर्गः) वक्ष्यति च द्रव्यशुद्धौ प्रायश्चित्तेषु च—तस्मिंस्तावत्तपः कुर्याद् यावत्तुष्टिकरं भवेत्। अथवा योऽश्रद्दधानो नास्तिकतया तस्याऽनधिकारमाह; नास्तिकस्य हि न वैदिकं कर्म कुर्वतोऽपि आत्मा तुष्यति, अतस्तेन क्रियमाणमपि कर्म निष्फलमेव अथवा सर्वकार्यविषयो भावप्रसाद उपदिश्यते; अनुष्ठानकाले क्रोधमोहशोकादि त्यक्त्वा प्रमुदितेन भाव्यम्, अतश्च शीलवदस्याः सवशेषतया धर्ममूलत्वाभिधानम् ( मेधातिथिः )।

आधुनिकैस्तार्किकैर्बुद्धिवादिभिश्च शास्त्रार्थधर्माधर्मनिर्णये बुद्धेः परमं प्रामाण्यं स्थापितम्। स्वमतस्थापने शास्त्रवचनान्यप्युद्धृतानि तैः। तेषां मते श्रेयोलक्षणधर्मे तु वेदस्यापि प्रवर्त्तके बुद्धिरेव परं मानं श्रुतिप्रत्यक्षहेतुकी। यत्, साक्षात्कृतधर्मभ्यो मन्त्रद्रष्टृभ्य आगतः वाङ्मयो ग्रन्थरूपोऽत्र 'वेद' इत्यभिशब्दितः,

तत्, सतां सात्त्विकी बुद्धिरेव वेदस्य कारणम् । न स्यादाकस्मिको वेदो ग्रन्थात्मा वाक्यराशिकः । एवञ्च वेदहेतुत्वात्, तद्द्वारा वेदकृन्मुनेः बुद्धिरेव परं मानं धर्मे सिद्ध्यति चान्ततः । साधारणस्य लोकस्य बुद्धिः शास्त्रत्वनिश्चये शास्त्रार्थनिर्णये चैवं परमं प्रमाणं भवेत् । शास्त्रं यदि प्रमाणं स्यात् कार्याकार्यव्यवस्थितौ किं नु तर्हि प्रमाणं स्याच्छास्त्राशास्त्रव्यवस्थितौ ? शास्त्रार्थश्च यथार्थः कः ? कथञ्चेदित्यादिसंशये—"बुद्धौ शरणमन्विच्छ" बुद्धिरेवान्तिमा गतिः ।

शास्त्रार्थनिर्णये चैवं सदसच्छास्त्रनिश्चये, साधारण्येन लोकानां बुद्धेः प्रामाण्यमिष्यते । नरो विवक्षितानर्थान् विनिश्चित्य धिया सदा, वक्ति लिखति वा; तच्च स्वयमेवानुभूयते । वेदेऽपि बुद्धिपूर्वैव वाक्यानां रचना स्मृता । तस्माद्धर्मस्य विज्ञाने बुद्धिः शास्त्राद्गरीयसी । वस्तुतस्तु न भेदोऽस्ति दूरतो बुद्धिशास्त्रयोः । आपाततोऽविचारेण तयोर्भेदः प्रतीयते । यथा शरीरसञ्चारी वायुरेकोऽपि भिद्यते उपाधिना, तथा बुद्धिरेकैवाभासते द्विधा । अध्यात्मं समवेतं सत् यत्तत्त्वं बुद्धिसंज्ञकम्, तद्ध्येव बहिरुद्बुद्धं वाङ्मयं शास्त्रमुच्यते । स्वबुद्धिपरबुद्धिभ्यां भेदे च बुद्धिशास्त्रयोः, शास्त्रीय परबुद्धिभ्यः स्वबुद्धिस्तु विशिष्यते । परबुद्धिः सदोषा स्यात्—शास्त्ररूपत्वमापिता, लेखकादिप्रमादाच्च दुष्टहेतोश्च सम्भवात् ।

आत्मनः प्रियकामाय समाजस्य हिताय वा, धर्मबुभुत्सया यस्तु स्वयमेव प्रवर्त्तते । तस्य बुद्धौ न दोषः स्यादसद्धेतोरसम्भवात् । शास्त्रबुद्धेरतः साक्षादात्मबुद्धिः प्रशस्यते । आत्मबुद्धिप्रकाशस्य पुंसोऽपि भ्रमसम्भवः, तथाप्यध्यात्मबुद्ध्यैव कार्यः शास्त्रार्थनिर्णयः पद्भ्यां हि गच्छतः पुंसः स्यादेव स्खलनं क्वचित् । नातः कश्चिदनुमत्तो बाहुभ्यां गन्तुमीहते । शास्त्रकृद्विदुषां चापि क्वचिद्रागादिदर्शनात्, सम्भवद्दूषणं शास्त्रं स्याद्, भ्रमादेश्च सम्भवात् । अतो बुद्ध्या परीक्ष्यैव ग्राह्यं शास्त्रमतं सदा; तस्मात्प्रधानता बुद्धेः शास्त्राणां तदधीनता । किं बहुनाऽथवोक्तेन, सुखं सर्वं स्वबुद्धिजम्, दुःखञ्च सर्वशः पुंसामस्ति प्रज्ञापराधजम् । तस्माच्छास्त्रं प्रमाणं स्यात्कार्याकार्यव्यवस्थितौ, शास्त्राशास्त्रव्यवस्थायां बुद्धिरेवेति निर्णयः । बुद्धिश्च त्रिविधा प्रोक्ता गीतायां गुणभेदतः । तत्र धर्मे प्रमाणं तु सात्त्विकी बुद्धिरिष्यते ।

अयं साधारणो लोकः सर्वस्तदनुसारतः, धर्मे प्रवर्त्तते; ह्येतदेव शास्त्रप्रयोजनम् । यथा च राजशास्त्राणि व्यवस्थापकपर्षदि, केचिदेव प्रकुर्वन्ति विशेषज्ञा महाशयाः । शेषो लोकस्तु तान्येवाऽनुसृत्यार्थे प्रवर्त्तते । तद्वद्धर्मे च मोक्षे च ज्ञेया शास्त्रप्रमाणता । व्यक्तिधर्मे स्वकीयैव बुद्धिःस्यात्परमा प्रमा, पारलौकिकधर्मे सा ज्ञेया श्रद्धास्वरूपिणी । लौकिके व्यक्तिधर्मे तु साऽऽत्मतुष्टयात्मिका स्मृता, सैवात्मौपम्यदृष्टिश्च ज्ञेया धर्मतुला नृणाम् । सामाजिके तु सद्धर्मे लौकिके पारलौकिके,

तेन तद्वाक्यचेष्टानां सर्वदैवास्ति सम्भवः,
तदुक्तिज्ञापनाद्वेदो नाऽनित्योऽतो भविष्यति ;
प्रतियज्ञं भवन्त्यन्ये सर्वदा षोडशर्त्विजः,
आदिमत्त्वं च वेदस्य न तच्चरितबन्धनात् ।

उक्तञ्च—यथर्तावृतुलिङ्गानि नानारूपाणि पर्यये दृश्यन्ते तानि तान्येव तथा भाति युगादिषु । इतिहासः पुराणञ्च कृत्रिमत्वेन निश्चिते, तथाऽप्यकृत्रिमे वेदे तद्विद्यात्वेन सम्मतम् ( मी० तं० वा० १।३।३।७ ) ।

इतिहासपुराणाभ्यां सा त्वनैकान्तिकी स्मृता
या त्वेषां ब्रह्मयज्ञेऽपि विधानान्नित्यतोदिता;
इतिहासपुराणानि कल्पान् इति हि सा श्रुतिः । (तै० आ० २।१०)

तस्मात् कृत्रिमप्यत्र विद्यास्थानं ग्रहीष्यते ( तं० वा० १।३।६।१३ ) । स एष बहुश्रुतो भविष्यति, लोकवेदवेदाङ्गवित्, वाकोवाक्येतिहासपुराणकुशलः ( गौ० ध० ८।४-६ ); तस्य च व्यवहारो वेदो धर्मशास्त्राणि अङ्गानि उपवेदाः पुराणम् ( गौ० ध० ११।२१ ) । अथ पुराणे श्लोकावुदाहरन्ति ( १।१९।१३; २।२३।३) । यो हिंसार्थमभिक्रान्तं हन्ति मन्युरेव मन्युं स्पृशति, न तस्मिन् दोष इति पुराणे ( १।२९।७ ) । "पुनः सर्गे बीजार्था भवन्ति" इति भविष्यत्पुराणे ( २।२४।६ ) इत्यापस्तम्बधर्मसूत्रादिषु च पुराणेतिहासयोः सबहुमानमुल्लेखो दृश्यते ।

## पुराणपदनिर्वचनम्

पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्; नित्यं शब्दमयं पुण्यं शतकोटिम-विस्तरम् । पुराकल्पाद् यदानीतं भवत्यत्र नवं नवम्, उत्तरोत्तरकल्पेषु तत्पुराण-मिति तु पूर्वं प्रतिपादितम् । पुराकल्पे प्रणीतस्य यन्नवीकरणम्, पुनः प्रतिकल्पं तदेवाऽस्ति पुराणस्य 'पुराणता' । वेदादपि 'पुरा' यस्माद् 'आनीतं' ब्रह्मणा स्मृतौ, तस्मादपि पुराणं स्यात् सर्वशास्त्रपुरातनम् । सर्गादिपञ्चमेयानां नित्यत्वेन पुराणता, तन्निरूपसम्बन्धाद् वा पुराणं निरुच्यते । पुरापरम्परां वष्टिपुराणं वै स्मृतम् (पद्म० पु० सृ० खं० २।५३) । यस्मात्पुरा ह्यनन्तीदं पुराणं तेन तत्स्मृतम्, निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ( वा० पु० १।२०३; १०३।५५ ) ।

पुराणरत्नमिति, न केवलं पूर्वसिद्धप्रबन्धप्रवर्तनमात्रमिति भावः, 'पुरा' एव विद्यमानत्वेऽपि सम्प्रति 'नवत्वात् पुराणत्वं चिरानुभूतत्वेऽपि अपूर्ववन्नित्यानु-भाव्यमित्यर्थः, अनादिवैदिकार्थविषयतया विद्यान्तरेभ्यः पुरातनाद्वा 'पुराणत्वम्' यथोक्तं वायव्ये" ( शि० पु० वा० सं० पू० भा० १।२७ ) । प्रथमं सर्वशास्त्राणां

पुराणं ब्रह्मणोदितम्, अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिःसृता इति ( स्तोत्र-रत्नभाष्ये श्रीवेङ्कटनाथाचार्यः ) ।

शाश्वतोऽयं पुराणः ( २।२० ) इति गीतावचनभाष्ये श्रीशङ्कराचार्यैः— "पुराऽपि नव एवेति पुराणः" इति । स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा इत्यमरः । प्रबन्धेऽविच्छेदेन क्रियाकरणे । पुरति, 'पुर' अग्रगमने ( तु० प० से० ) बाहुलकात् 'का' । पुरा पुराणे निकटे प्रबन्धातीतभाविषु (इति मेदिनी) इति तत्रत्या व्याख्यासुधा । पुराणं पञ्चलक्षणम्, इत्यमरवाक्यव्याख्याने—पुराणमिति, पुरा भवम्; सायंचिरम् (पा. ४।३।२३) इति ट्यु-ट्युलौ, पूर्वकालैक—(पा. २।१।४९) इति सूत्रे निपातनात्तुडभावः । यद्वा पुराऽपि नवम् पुराणम् । पुराणप्रोक्तेषु—( पा० ४।३।१०५ ) इति सूत्रे निपातितम् । यद्वा 'पुरा' अतीतानागतावर्थौ 'अणति' । अणशब्दे ( भ्वा० प० से० ) पचाद्यच् । पुराणं, पञ्चलक्षणे, पणे पुंसि, त्रिषु प्रत्ने । पञ्चलक्षणान्यस्य—

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
भूम्यादेश्चैव संस्थानं पुराणं पञ्चलक्षणम् ॥

क्वचिदिह "वंशानुचरितं चैव" इति तृतीयपादे पाठान्तरम् । द्वे ( नामनी= पुराणम्, पञ्चलक्षणञ्चेति ) व्यासादिप्रणीतमत्स्यपुराणादेः" इति व्याख्यासुधा ।

अनन्तरं च वक्त्रेभ्यो वेदास्तस्य निःसृताः ।
मीमांसा न्यायविद्याश्च प्रमाणाष्टकसंयुताः ॥

(मत्स्य० ३।२-४; ५३।३; पद्म० सृ० खं० १।४५; शि० पु० वा०सं० पू० १।२७)

"मन्वन्तरयुगान्तरेषु चातीनानागतेषु सम्प्रदायाभ्यासप्रयोगावच्छेदो वेदानां नित्यत्वम्, आप्तप्रामाण्याच्च प्रामाण्यम्; लौकिकेषु पुराणादिशब्देषु चैतत्समानम्" इति न्यायभाष्यम् ( २।१।६७ ) । अथ योऽयमभिलोपा 'नित्या वेदा' इति, स कथम् ? सम्प्रदायस्याविच्छेदात् । तान्येव वेदवाक्यानि मन्वन्तरचतुर्युगान्तरेषु सम्प्रदायाऽभ्यासाऽविच्छेदेन प्रवर्त्तन्ते, तदपेक्षया लौकिकाः शब्दान् प्रयुञ्जन्ते—'नित्या वेदा'इति । यथा नित्याः पर्वताः, नित्या सरित इति । तन्मन्वादिवाक्येषु समानम् । कुत एवम् ? सम्प्रदायाविच्छेदात् । नित्यत्वं न पुनर्नित्यत्वादेव, अनित्यत्वोक्तप्रमाणाऽविघातात् । यानि मया अनित्यत्वे प्रमाणान्युपन्यस्तानि तानि न विहन्यन्ते, तेषामविघाताद् अनित्यत्वे सति सम्प्रदायाऽविच्छेदात् नित्यत्वोपचार इति तत्रत्यं न्यायवार्त्तिकम् । तदर्थं ( वेदार्थं ) पालनायां च महर्षिपरम्पराभिरङ्गोपाङ्गेतिहासपुराणधर्मशास्त्राणि प्रणीतानि;... महाप्रलये तु ईश्वरेण वेदान् प्रणीय सृष्टयादौ सम्प्रदायः प्रवर्त्यत एवेति भावः इति च तत्र न्यायवार्तिकतात्पर्यटीका ।

उपबृहणञ्च श्रुतिप्रतिपन्नार्थविशदीकरणं तच्च विरुद्धार्थया स्मृत्या न शक्यते कर्तुम्, ब्रह्मसूत्रभाष्ये ( २।१।१ ) श्रीरामानुजाचार्यः । नानाविधोपाख्यानप्रतिपादनपर्यवसिते पुराणे कः प्रसङ्गो वेदार्थस्य ? तत्राह 'सर्गश्चेत्येकेन'। ब्रह्मणस्तटस्थलक्षणत्वेन सृष्टिस्थितिप्रलया एव वेदे प्रधानं प्रमेयम्, 'आत्मैवेदमग्र आसीत्', 'स ऐक्षत' इति महासर्गः। 'नेह नानाऽस्ति' इति महाप्रलयः, अन्यत्सर्वं स्थित्यवस्थाविलासः। इत्थमेव पुराणेऽपि वंशमन्वन्तरवंशानुचरितानि स्थित्यवस्थान एवेति सूतसंहितायाः ( १।१।३३ ) व्याख्याने सायणाचार्यः। एवमादिभिः शास्त्रवचनैः 'तुल्यार्थतया' 'अविरुद्धार्थतया, एव वा इतिहासपुराणादेर्वेदोपबृंहणत्वं वाच्यम्, तच्च तुल्यार्थत्वं यथायोग्यं पञ्चलक्षणार्थप्रतिपादकत्वमेवेति दिक्।

अद्याऽपि देवलोके शतकोटिप्रविस्तरं पुराणमस्ति इत्यस्याः पुराणवार्तायास्तात्पर्यं तु बहुधा वक्तुं शक्यते। तत्रैकं यथाश्रुतसरलाक्षरार्थानुगतम्, तद्यथा—एकैकस्मिन् अपि सौरजगति भूयसां ब्रह्माण्डानां सत्ता श्रूयते, सूक्ष्मेक्षिकयाऽनुभूयते च, सौरजगतां चाऽपि बहुत्वमस्तीति तद्विद्यासिद्धान्तः। तत्र प्रत्येकमनन्ते लोकसन्ताने देवलोकस्याऽपि स्थितिः, तस्मिंश्च 'शतकोटिप्रविस्तरं पुराणम्' अद्यापि विद्यत इत्येका व्याख्या।

द्वितीयं तु, 'देवानां' विद्यया विद्योतमानानां विदुषाम्, तत्तद्युगीयपुराणकृतां व्यासदेवानां वा, 'लोके' ( लोक्यते, लोकयति वाऽस्मिन्निति ) अन्तर्हृदये 'शतकोटिप्रविस्तरं', तावदर्थज्ञानरूपं 'पुराणम्', अतीतानागतसर्गादिपञ्चलक्षणप्रमेयविषयकं विद्यते—

सर्वमात्मनि सम्पश्येत् सच्चासच्च समाहितः।
आत्मैव देवताः सर्वाः, सर्वमात्मन्यवस्थितम् ॥
( मनु० १२।११८-१९ )

इति मनूक्तन्यायात्; ततः चतुर्लक्षमेवाद्ययावन्मनुष्यलोके, जनसमाजे यथा—प्रयोजनं प्रकाशितम्, शेषं च भावियुगेषु क्रमात् प्रकाशिष्यत इति।

तृतीयं तु स्वसत्तया विद्योतमानानामाब्रह्मस्तम्बपर्यन्तानां सर्वेषामेव भावात्मकपदार्थानां सर्वेषामेव भावात्मकपदार्थानां देवत्वाङ्गीकारात्, तल्लोकेऽपि तत्स्थानभूतं सम्पूर्णं 'जगद्' एव। तत्र तु स्वल्पमेवैतदुक्तं 'शतकोटिप्रविस्तरम्' इति, प्रत्युत तदुपलक्षितमनन्तकोटिप्रविस्तरं च पञ्चलक्षणविषयस्वरूपं 'पुराणम्' एतस्मिन् वर्तते, विश्वरूपस्य प्रकृतिसाम्राज्यस्य पुराणोपादानभूतानन्तवस्तुमयत्वात्। तत्र सर्वेषामेकैकशः सर्गादिपञ्चलक्षणवर्णनासम्भवात्, पुरुषार्थोपकरणमात्रार्थं चतुर्लक्षपरिमितमेव पुराणमिह लोके प्रकाश्यत इति।

अयं भावः—पुराणपदं तन्त्रेण अर्थद्वयं बोधयति। तत्रैकं 'पुरा' अतीता-

नागतात्मके सर्वस्मिन्नपि काले प्रकृत्यैव 'नीयमानं' "कल्पस्य कल्पपूर्वत्वात्, नाऽनीदृशं जगद्" एव 'पुराणम्'। द्वितीयं तु 'पुरा' अतीते, भाविनि च काले यत् प्रतियुगं पारम्पर्योपदेशेन 'नवं' सदनुवर्तमानम्, तत्तद् व्यासेन प्रतिद्वापरमानीतं वा भवति, तद्रूपं विधिप्रस्थानं 'पुराणाम्' नामेति।

'पञ्चलक्षणम्' इति च पुराणस्यैवापरं नामधेयम्, अत्राऽपि तद्वदेवार्थद्वयं व्युत्पाद्यते। तद्यथा—सर्गादीनि पञ्चलक्षणानि स्वरूपाणि ( अवस्थाविशेषात्मकानि ) यस्य, तत्पञ्चलक्षणं विश्वरूपं प्रमेयमिति प्रथमम्। सर्गादीनि पञ्च लक्ष्यन्तेऽनेनेति 'पञ्चलक्षणम्' मात्स्यादिग्रन्थरूपमिति द्वितीयम्।

अत्र प्रथमोक्तप्रकारं प्रतिपाद्यविश्वरूपं पुराणं तु सुतरामनन्तप्रमेयनिर्वचनीयं चेति सामग्र्येण वाङ्मये तत्प्रकाशनं न सम्भवतीति सुष्ठूक्तं 'शतकोटि प्रविस्तरम्' इति। उपलक्षणं चैतद्, अनन्तकोटिप्रविस्तरस्यापि संभवत्वात्। अतस्तद्वर्णनरूपं द्वितीयप्रकारकं पुराणे चतुर्लक्षमेव प्रकाशितमिति। एवमाद्यन्यत्स्वयमूह्यमिति दिक्।

## पुराणभेदाः

'म'द्वयम् ( मात्स्यम्, मार्कण्डेयम् ) 'भ' द्वयञ्चैव ( भविष्यम्, भागवतम् ) 'ब्र' त्रयम् ( ब्राह्मम्, ब्रह्माण्डम्, ब्रह्मवैवर्त्तम् ) 'व' चतुष्टयम् ( वामनम्, वायनीयम्, वैष्णवम्, वाराहम् )। 'अ' ( आग्नेयम् ) 'ना' ( नारदीयम्' ) 'प' ( पाद्मम् ) 'लिं' ( लैङ्गम् ) 'ग' ( गरुडम् ) 'कू' (कूर्मम्) 'स्कानि' (स्कान्दम्) पुराणानि पृथक्पृथक्। देवीभागवते—

चतुर्दशसहस्रं च मात्स्यमाद्यं प्रकीर्तितम्।
तथा ग्रहसहस्रं तु मार्कण्डेयं महाद्भुतम्॥
चतुर्दशसहस्राणि तथा पञ्चशतानि च।
भविष्यं परिसङ्ख्यातं मुनिभिस्तत्त्वदर्शिभिः॥
अष्टादशसहस्रं वै पुण्यं भागवतं किल।
तथा चायुतसङ्ख्याकं पुराणं ब्राह्मसंज्ञकम्॥
द्वादशैव सहस्राणि ब्रह्माण्डं च शताधिकम्।
तथाऽष्टादशसहस्रं ब्रह्मवैवर्त्तमेव च॥
अयुतं वामनाख्यञ्च वायव्यं षट्शतानि च।
चतुर्विंशतिः सङ्ख्यातः सहस्राणि तु शौनक॥
त्रयोविंशतिसाहस्रं वैष्णवं परमाद्भुतम्।
चतुर्विंशतिसाहस्रं वाराहं परमाद्भुतम्॥

षोडशैव सहस्राणि पुराणं चाग्निसंज्ञितम् ।
पञ्चविंशतिसाहस्रं नारदं परमं मतम् ॥
पञ्चपञ्चाशत्साहस्रं पाद्माख्यं विपुलं मतम् ।
एकादश सहस्राणि लिङ्गाख्यं चातिविस्तृतम् ॥
एकोनविंशतिसाहस्रं गारुडं हरिभाषितम् ।
सप्तदशसहस्रञ्च पुराणं कूर्मभाषितम् ॥
एकाशीतिसहस्राणि स्कान्दाख्यं परमाद्भुतम् ॥
(१।३।२-१२)

मत्स्यपुराणे तु भागवतीयगणनातः षट्शत्याऽग्निपुराणम्, द्विशत्या च ब्रह्माण्डपुराणम्, अधिकमुक्त्वा अन्ते 'चतुर्लक्षम्' इत्युपसंहृतम् । तददूरविप्रकर्षेण भवन्ति हि ईदृशा अपि वादा, यत् किञ्चिन्न्यूनाधिकं शतं लब्ध्वा शतं मया लब्धमिति । एवं भागवतीयमपि चतुर्लक्षवचनं व्याख्येयम् ।

याऽपि विष्णुपुराणे ब्रह्माण्डमादाय वायवीयत्यागेन, या च ब्रह्मवैवर्त्ते वायवीयमुपादाय ब्रह्माण्डपुराणपरित्यागेन अष्टादशसङ्ख्योक्ता, सा कल्पभेदेन व्यवस्थापनीया । काशीखण्डादयस्तु स्कान्दान्तर्गता एव । तथा च प्रभासखण्डम्—

स्कान्दं तु सप्तधा भिन्नं वेदव्यासेन धीमता ।
एकादशीति सहस्राणि शतञ्चैकञ्च सङ्ख्यया ॥
तस्याद्यो यो विभागस्तु स्कन्दमाहात्म्यसंयुतः ।
माहेश्वरः समाख्यातो द्वितीयो वैष्णवः स्मृतः ॥
तृतीयो ब्राह्मणः प्रोक्तः सृष्टिसंक्षेपसूचकः ।
काशीमाहात्म्यसंयुतः चतुर्थः परिपठ्यते ॥
रेवायाः पञ्चमो भागः सोज्जयिन्याः प्रकीर्तितः ।
षष्ठस्तस्य विभागस्तु तयोर्माहात्म्यसूचकः ॥
सप्तमो यो विभागोऽयं स्मृतः प्राभासिको द्विजाः ।
(वीर० परि० पृ० १२-१३)

## उपपुराणानि

मत्स्यपुराणे—

उपभेदान् प्रवक्ष्यामि लोके ये सम्प्रतिष्ठिताः । पाद्मे पुराणे यत्प्रोक्तं नरसिंहोपवर्णनं तच्चाष्टादशसाहस्रं नारसिंहमिहोच्यते । नन्दाया यत्र माहात्म्यं कार्त्तिकेयेन वर्ण्यते, नन्दीपुराणं तल्लोकैराख्यातमिति कीर्त्यते । यत्तु साम्बं पुर-

स्कृत्य भविष्येऽपि कथानकं प्रोच्यते तत्पुनर्लोके साम्बमेतन्मुनिव्रताः। एवमादित्य-संज्ञा च तत्रैव परिगद्यते। अष्टादशभ्यस्तु पृथक् पुराणं यत्प्रदिश्यते। विजानीध्वं द्विजश्रेष्ठास्तदेतेभ्यो विनिर्गतम् (५३।६०-६४)। यथा महाजनपरिगृहीत-नन्दिकेश्वरपुराणाऽऽदिपुराणदेवी पुराणादीति ( वीरमित्रोदये परिभाषाप्रकाशे पृ० १५ )। कूर्मपुराणे—

आद्यं सनत्कुमारोक्तं नारसिंहमतः परम्।
तृतीयं स्कान्दमुद्दिष्टं कुमारेण तु भाषितम्॥
चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम्।
दुर्वाससोक्तमाश्चर्यं नारदीयमतः परम्॥
कापिलं वामनञ्चैव तथैवोशनसेरितम्।
ब्रह्माण्डं वारुणञ्चैव कालिकाह्वयमेव च॥
माहेश्वरं तथा साम्बं सौरं सर्वार्थसञ्चयम्।
पराशरोक्तं मारीचं तथैव भार्गवाह्वयम्॥
( कूर्म० अ० १; गरुडपु० २२७।१४-१७ )

"उपपुराणान्तर्गते नारदीयब्रह्माण्डपुराणे भिन्ने। एतान्युपपुराणानि पुराणेभ्य एव निर्गतानि इति याज्ञवल्क्येन ( १।३ ) पुराणत्वेन सङ्गृहीतानि" इति वीरमित्रोदये परिभाषाप्रकरणे ( पृ० १२-१४ )।

खिलान्युपपुराणानि यानि चोक्तानि सूरिभिः।
इदं ब्रह्मपुराणस्य खिलं सौरमनुत्तमम्॥ ( सौ० पु० ९।१२ )

खिलं...सारतः संक्षिप्ते पूर्वत्रानुक्तपरिशिष्टे, यथा ऋग्वेदादौ श्रीसूक्तम्, यजुर्वेदे शिवसङ्कल्पादि, महाभारते हरिवंशः। 'खिलेषु हरिवंशः' इति पुष्पिका व्याख्याने "खिलो नारायणः प्रोक्तः, तद्गुणा इषवः स्मृताः" इति नीलकण्ठेनोक्तेः नारायणे च, इति शब्दस्तोममहानिधौ।

तत्र तावत्पुराणेषु भागवतद्वयं प्रसिद्धम्—एकं महापुराणान्तर्गतम्, अपरमुपपुराणान्तर्गतम्। लोकेऽप्युपलम्भो द्वयोर्देवीभागवतनाम्ना, विष्णुभागवतनाम्ना च, अस्त्येव। तत्रैकं महापुराणान्तर्गतम्, अन्यदुपपुराणान्तर्गतम्, इत्यपि निर्विवादमेव। तथापि किं देवीभागवतं महापुराणम्, अन्यदुपपुराणम्? अथवा विष्णुभागवतं महापुराणम्, अन्यदुपपुराणम्? इति संशये केचिद् विष्णुभागवतमेव महापुराणमिति वदन्ति। केचिद्देवीभागवतमेव महापुराणमिति वदन्ति। तत्र प्रथमपक्षैकदेशिनः केचिदुपपुराणेषु द्वितीयं भागवतं नास्त्येव, महापुराणेष्वेवैकं भागवतं प्रसिद्धम्। तच्च विष्णुभागवतमेव, न देवीभागवतम्, देवीभागवतं तु निर्मूलमेव इति वदन्ति। द्वितीयपक्षैकदेशिनोऽपि विष्णुभागवतं वोपदेवकृतिमिति

वदन्ति । वस्तुतस्तु उभयोरपि पुराणयोः पुराणमतभेदेन महापुराणत्वमुपपुराणत्वञ्च ।

ननु देवीभागवतस्य—'तत्र भागवतं पञ्चमं वेदसम्मतम्' इति प्रथमाध्यायस्थवचनेनाष्टादशमहापुराणेषु पञ्चममिदं पुराणमिति स्वस्य महापुराणत्वं बोधयतः कथमन्यपुराणमुपपुराणत्वं बोधयेद् ... इति चेत्, न, नारदीयशिववायव्याऽऽदित्यपुराणानां स्वमुखेन, अन्यमुखेन च, महापुराणत्वेन ज्ञायमानानाम् अन्यपुराणैरुपपुराणत्वस्य व्यवस्थापनात्। पुराणमतभेदेनैकस्यापि पुराणस्य महापुराणत्वोपपुराणत्वसिद्धया तदविरोधाभावात् । ... तथा हि—नारदीयस्य पुराणस्य स्वान्तर्गतमहापुराणग्रन्थसूच्या स्वमुखेनैव स्वात्मनो महापुराणत्वं बोधयतः—

मद्वयं भद्वयञ्चैव ब्रत्रयं वचतुष्टयम् ।
आलिंपाग्निपुराणानि कूस्कंगारुडमेव च ॥

इति वचनेन; मुद्गलपुराणवचनेन च महापुराणबहिर्भूतत्वं बोध्यते । आलिंपाऽग्नीत्यत्र आ शब्देन आदित्यपुराणस्य, तथा शैवपुराणस्य स्वमुखेन स्वस्य महापुराणत्वं बोधयतो 'मद्वयं भद्वयम्' इत्येव वचनं तद्बहिर्भूतत्वं बोधयति ।... तथा वायव्यपुराणस्य स्ववचनेन स्वस्य महापुराणस्यापि 'आलिंपाग्निपुराणानि' इति क्वचित् पुराणसम्मतपाठेन महापुराणत्वम्, 'अनापलिंगकूस्काख्यम्' इति क्वचित्पुराणसम्मतपाठेन महापुराणबहिर्भूतत्वम् इत्यादि देवीभागवतटीकोपाद्घाते श्रीनीलकण्ठोक्तमनुसन्धेयम् ।

## पुराणेतिहासनिर्माणप्रयोजनम्

वेदे विधिनिषेधाभ्यां प्रोक्ते सुकृतदुष्कृते साक्षात्कृत्येतिहासेन लोकवर्त्मनि दर्श्येते । श्रुतिप्रत्यक्षहेतुत्वात्सर्ववेदार्थसङ्ग्रहः, आर्षेतिहासेषु लोकवृत्तानुषङ्गतोऽभूत् । अतः पञ्चमवेदत्वं महाभारत इष्यते । वेदोपबृंहणत्वं च तत्र संगच्छते । "धर्मार्थकाममोक्षाणामुपदेशसमन्वितम्, पुरावृत्तकथायुक्तम् इतिहासं प्रचक्षते" इति इतिहासपदम् । अयमितिहासलक्षणश्लोकः —"इतिहासं पुराणञ्च धर्मप्रवचनानि च, भवन्त एव जानन्ति; रघूणां च कुलस्थितिम्" इत्युत्तररामचरित ( ५।२३ ) पद्यटीकायाम्; काव्यप्रकाशटीकायाम्; वाचस्पत्ये, शब्दस्तोममहानिधौ च समुद्धृतो दृश्यते । "तत्र इतिहासमाचक्षते" इति निरुक्तवचनव्याख्याने—"यः कश्चिदाध्यात्मिक, आधिदैविक, आद्यभौतिको वाऽर्थ आख्यायते दिष्टयुदितार्थाऽवभासनार्थम्, स 'इतिहास' इत्युच्यते; स पुनरयमितिहासः सर्वप्रकारो हि नित्यमविवक्षितस्वार्थः, तदर्थप्रतिपत्तृणामुपदेशपरत्वात्" इति दुर्गाचार्यं इतिहासपदार्थं निरवोचत । "पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययम्" इति, "इतिहासः पुरावृत्तम्" इति चामरः । "इतिह इति पारमपर्योपदेशेऽव्ययम्, तदास्तेऽस्मिन्" ( स इतिहासः ) इति तत्रत्या व्याख्यासुधा ।

इतिहासपुराणानि पञ्चमं वेदमीश्वरः सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शनः ( भा० ३।१२।३९ )। यश्चतुरो द्विजः साङ्गोपनिषदो वेदान् विद्यात्, न चेत्पुराणं संविद्यात्, नैव स स्याद्विचक्षणः[1]। यश्चतुर्वेदविद्विप्रः पुराणं नार्थतः वेत्ति, तं दृष्टवा भयमाप्नोति वेदो मा प्रतरिष्यति[2]। वेदस्य प्रतारणं नाम तदभिप्रेतविपरीतार्थवर्णनमेव[3]। 'स तु मेधाविनौ दृष्टवा वेदेषु परिनिष्ठितौ, वेदोपबृंहणार्थाय तावग्राहयत प्रभुः' ( १।४।६ ) एतद् वाल्मीकिवाक्येन व्यक्तं रामायणस्य च वेदोपबृंहणार्थत्वम्; भारतादेश्च तन्मतम्। जगज्जन्मादिकारणं ब्रह्मेत्यवसिते सति—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति[4] ॥

अस्मिन् श्लोके 'वेद' शब्दो वेदान्तपरः, वेदोपबृंहणभूतेषु धर्मशास्त्रेतिहासपुराणेषु धर्मशास्त्राणि पूर्वभागोपबृंहाणि, इतिहासपुराणानि उपरितनभागोपबृंहणपराणि इति हि विभागः।...तत्र धर्मशास्त्रेषु ब्रह्मप्रतिपादनं कर्मणा तदाराधनरूपत्वज्ञापनार्थम्। इतिहासपुराणेषु कर्मप्रतिपादनं कर्मणां ब्रह्मोपसमाङ्गत्वज्ञापनार्थम्[5]। "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" इति मनुवचनात् इतिहासपुराणादि वेदस्य परिबृंहणानि; अविनाभावाच्च व्याकरणादीनि[6]। उपबृहणं नाम—विदितसकलवेदतदर्थानां स्वयोगमहिमसाक्षात्कृतवेदतत्त्वार्थानां वाक्यैः स्वाऽवगतवेदवाक्यार्थव्यक्तीकरणम्; सकलशाखानुगतस्य वाक्यार्थस्य अल्पभागश्रवणाद् दुखगमत्वेन, तेन विना निश्चयायोगाद् 'उपबृहणं हि कार्यमेव" ( श्रीभाष्ये १।१।१; पृ० १४६-४९ )।

**न्यायः**

वेदोपाङ्गं द्वितीयं तु 'न्याय' आन्वीक्षिकीमदः सत्तर्कात्माऽस्ति, तच्छास्त्रं गौतमीयादिकं मतम्। असत्तर्काऽप्रतिष्ठानात्[7]। सत्तर्को न्याय उच्यते। आन्वीक्षिकी तस्यैव नामान्तरम्।

---

१. शि० पु० वा०, सं० पू० १।३५; वा० यु० १।२००; पद्म० सृ० खं० २।५०।
२. सू० सं० शि० मा० १।३४।
३. श्री० भा० श्रुतप्र० १।१।१ पृ० १४७।
४. म० भा० १।१।२६७; वा० पु० १।२०१; पद्म० सृ० खं० २।५१; शि० पु० वा० सं० पू० १।३६; सू० सं० शि० मा० खं० १।३५।
५. श्रीभा० श्रुतपु० पृ० १४६।
६. या० स्मृ० १।८ अपरार्कः।
७. ब्र० सू० २।१।११; "तर्कोऽप्रतिष्ठः" महा० वन० ३१३।१७।

"प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥
आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणाऽनुसन्धत्ते, स धर्मं वेद, नेतरः ।"

विषयो वेदवाक्यानां पदार्थैः प्रतिपाद्यते ।
ते च जात्यादिभेदेन संकीर्णा लोकवर्त्मनि[1] ॥

स्वलक्षणविविक्तैस्तैः प्रत्यक्षादिभिरञ्जसा ।
परीक्षकार्पितैः शक्याः प्रविवेक्तुं न तु स्वतः ॥
वेदोपि विप्रकीर्णात्मा प्रत्यक्षाद्यवधारितः ।
स्वार्थं साधयतीत्येवं ज्ञेयास्ते न्यायविस्तरात्[2] ॥

इत्थं न्यायस्य वेदार्थज्ञाने प्रोक्तोपयोगिता । अतो वेदार्थगर्भायां स प्रयोज्यो मनुस्मृतौ । तत्र न्यायेऽक्षपादीये, कणादे च निर्दशिताः अध्यायाऽऽह्निकसूत्राङ्कास्तद् भाष्यादिष्वपि क्रमात् । साङ्ख्ये संख्या विनिर्दिष्टा क्रमादध्यायसूत्रयोः, कारिकाङ्काश्च । योगे तु पादसूत्राङ्कदर्शनम् । तस्य वैयासिके भाष्ये तद्वदेव विभाजनम् । वार्तिकादावपि ज्ञेयं तत्क्रमादङ्कलेखनम् । एवमत्रोद्धृतेष्वन्यग्रन्थवाक्येष्वपि क्रमस्तद्विभागाऽनुसारेण मूलस्थानोपलब्धये ।

## मीमांसा

वेदो मीमांस्यते तया मीमांसा । तच्छास्त्रमपि तन्नाम्ना मीमांसेति निरुच्यते । तत्पूर्वम्, उत्तरञ्चेति द्वयम् मुख्यं प्रकीर्तितम् । यत्र मीमांस्यते कर्म, ब्रह्म, चेति द्वयं क्रमात्, सेयं सम्भूय मीमांसाद्वयी षोडशलक्षणी । अन्यच्च भक्तिमीमांसाशास्त्रमप्यस्ति । तत्र तु शाण्डिल्यं नारदीयं च प्राधान्येन प्रसिध्यतः । मीमांसाश्लोकवार्त्तिकप्रतिज्ञा (१) सूत्रे—

मीमांसाशास्त्रतेजोभिर्विशेषेणोज्ज्वलीकृते ।
वेदार्थज्ञानरत्ने, मे तृष्णाऽतीव विजृम्भते ॥

धर्मे प्रमीयमाणे हि वेदेन करणात्मना ।
इति कर्त्तव्यताभागं मीमांसा पूरयिष्यति ॥

मीमांसायां त्विहाऽज्ञाते दुर्ज्ञातेवाऽविवेकतः ।
न्यायमार्गे महान् दोषः इति यत्नोपचर्यता ॥
मीमांसाख्या तु विद्येयं बहुविद्यान्तराश्रिता ।
तस्मादेषा प्रयोक्तव्या विध्यर्थनिर्णये ॥

१. कौ० १।२।१ । २. मी० तं० वा० १।३।१।२ ।

# उपसंहारः

विधेः स्रोतांसि विषये मानवः षष्ठः ( मनु० २।६-१३ ) याज्ञवल्कीयश्च-सप्तमः श्लोक उपन्यस्य व्याख्यातौ मित्रमिश्रेण–वेद इति, वेदो 'मन्त्रब्राह्मणयोर्वेदनामधेयमित्यापस्तम्बाद्युक्तो मन्त्रब्राह्मणसमुदायः अखिलः लिङ्गवाक्यप्रकरणस्थानसमाख्यानुमितोऽतिदेशकल्पश्च 'यज्ञं व्याख्यास्यामः स त्रिभिर्वेदैर्विधीयते" इति आपस्तम्बवचनात्त्रय्या धर्ममूलत्वं नाथर्वणस्येति शङ्काव्यावृत्त्यर्थं वाऽखिलग्रहणम्। आथर्वणस्य प्राधान्येन वैतानिकाग्निहोत्रादिधर्माप्रतिपादकत्वेऽपि तुलापुरुषशान्त्यादिसर्ववर्णसाधारणधर्मप्रतिपादकत्वाद्युक्तं धर्ममूलत्वम्। धर्मग्रहणमधर्मस्याप्युपलक्षणम्, तस्याऽपि तत्त्वज्ञानप्रतिबन्धकीभूतान्तःकरणाशुद्धिहेतोर्हेयत्वेनावश्यप्रतिपादकत्वात्। मूलम् प्रमाणम्। तद्विदाम् वेदविदाम्। एतेन न स्मृत्यादेः स्वातन्त्र्येण प्रामाण्यम् किन्तु वेदमूकतयेति ज्ञापयति। स्मृतिः याज्ञवल्क्यादिधर्मशास्त्रम्। शीलम्– ब्रह्मण्यता, देवपितृभक्तता, सौम्यता, अपरोपतापिता, अनुसूयता, मृदुता, अपारुष्यम्, मैत्रता, प्रियवादिता, कृतज्ञता, शरण्यता, कारुण्यम्, प्रशान्तिश्चेति त्रयोदशविधं हारीतोक्तम्। अत्र च प्रवृत्तिभिन्नाद्रोहाद्याचारस्य प्रामाण्यमुच्यते, आचारश्चेत्यत्र तु प्रवृत्त्यात्मकस्येत्यपौनरुक्त्यम्, आचारः विवाहादौ कङ्कणबन्धनाद्यनुष्ठानम्। साधूनामिति क्वचिद्धर्मत्वसन्देहे सति वैदिकसंस्कारवासनावासितान्तःकरणानां साधूनामेकत्रपक्षे आत्मनो मनसः परितोषस्तुष्टिधर्मे प्रमाणमिति कल्पतरुः। तथा च तैत्तिरीये धर्मसन्देहमुपन्यस्य "ये यत्र ब्राह्मणाः सम्मर्शिनो युक्ता अयुक्ता अलूक्षा धर्मकामाः स्युः यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथा" इति अनेन पर्षद्रूपमपि प्रमाणं भवति। अथवा आचारश्चैव साधूनामितिच्छेदः। एवञ्चावेदविदामपि क्षीणदोषपुरुषाणामचारः प्रमाणम्। तथा च सच्छूद्राद्याचारस्तत्पुत्रादीन्प्रति भवति प्रमाणम् आत्मानस्तुष्टिरेव चेति वैकल्पिकेऽर्थे। सा चात्मानं प्रत्येव। श्रुतिः स्मृतिरिति सम्यक् सङ्कल्पात् शास्त्राविरुद्धसङ्कल्पाज्जातः कामः मया भोजनव्यतिरेकेणोदकं न पातव्यमित्येवंरूपः। अथवा सम्यक् सङ्कल्पात् रागादिरहितसङ्कल्पात् ज्ञानात् उपजातं ब्राह्मणोपचिकीर्षाद्येव मनुना शीलत्वेनोक्तं सम्यक् सङ्कल्पज इत्यनेनोच्यते इति कल्पतरुः अत्रापि धर्मग्रहणमधर्मोपलक्षणम्।

मन्त्रब्राह्मणसमुदायो वेदः। शब्दातिरिक्तं शब्दोपजीविप्रमाणातिरिक्तञ्च यत्प्रमाणं तज्जन्यप्रमितिविषयानतिरिक्तार्थको यो यस्तदन्यत्वे सति, आमुष्मिक-

सुखजनकोच्चारणकत्वे च सति जन्यज्ञानाजन्यो यः प्रमाणशब्दस्तत्त्वं वेदत्वम्। मन्वादिस्मृतिभारताद्यदृष्टार्थकभागेष्वतिव्याप्तिवारणायाजन्य इत्यन्तम्। तदुक्तौ नातिव्याप्तिः। वेदार्थं प्रतीत्यैव स्मृत्यादेः प्रणयनात् तार्किकमतसाधारण्याय ज्ञाने जन्यत्वनिवेशः ईश्वरज्ञानस्य तार्किकमते नित्यत्वात्। बुद्धाद्यागमानां तु न वेदत्वम्, न वा धर्मे प्रामाण्यम, भ्रान्तेः पुरुषधर्मतया तेषां निजानिदानानुगामिदूषणगण-ग्रासशङ्कापङ्ककलङ्कितत्वात्।[1]

अथोक्तरीत्या वेदस्य स्वरूपलक्षणयोरुपपत्तावपि न धर्मे प्रामाण्यमुपपद्यते। शब्दार्थयोरुत्पत्त्यनन्तरं हि परमेश्वरेणान्येव वा तपोः सङ्केतरूपः सम्बन्धः कल्पितः। अस्य समाधानम्—

औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशो व्यतिरेकश्चार्थेऽनुप-लब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्।[2]

वेदप्रामाण्योपोज्जिघांसयैव च शाबरभाष्यभाट्टश्लोकवार्तिकयोः अस्य सूत्रस्य तात्पर्यविषयत्वेन षोडशार्था निरूपिताः। ते यथा—

(१) अत्र यस्य च दुष्टं करणम्, यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्ययः, इति भाष्योक्तस्य–कारणदोषज्ञानस्याप्रामाण्यहेतोरभावस्तु शब्दविकल्पेन सम्बन्ध इत्यन्तेन चतुष्पदेन प्रथमावयवेनोक्तः।

(२) उक्तभाष्योक्तस्यार्थान्यिथात्वज्ञानस्य द्वितीयस्याप्रामाण्यहेतोरभावः अव्यतिरेक इत्यनेनोक्तः। तदुक्तं वार्त्तिकेऽबाधोऽव्यतिरेकेणेति।

(३) उपदेशस्तस्य ज्ञानम्, इत्यनेन अज्ञापकत्वरूपस्याप्रामाण्यस्याभाव उक्त; "अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः" इति।

(४) एवं श्रेयःसाधनं हि धर्मः। साधनत्वञ्च भावनाद्वारकम्। भावना च सर्वेष्वेवाख्यातेषु गम्यते, अख्यातश्च सर्वेष्वेव वाक्येषु, आकाङ्क्षापूरणस्य तदायत्तत्वात्। अतो विधिं विनाऽपि आख्यातघटितेन वाक्येन स्वर्गादियज्ञयोर्मिथः साध्यसाधनभावस्यावगन्तु शक्यत्वाद्विधिरनर्थक एव। न च पुरुषप्रवृत्तये स इति वाच्यम् नहि विधिरपि बलात्पुरुषं प्रवर्तयति किन्तु यज्ञादेः श्रेयः साधनतां गमयत्येक तस्याश्च ज्ञानात्पुरुस्येच्छा तथैव च प्रवृत्तिः; श्रेयःसाधनताज्ञानं च विधिनेव जन्यत एवाख्यातान्तरेणापीति किं विधिना। नापि 'न ब्राह्मणं हन्यात्' इत्यादौ निवृत्तिसिद्धये विधिरिति युक्तम्; प्रतिषेधमभिदधता नञैव तत्साधनस्य सुकरत्वात्, तथा चान्यथासिद्धत्वात् कथं विधेर्धर्मे प्रामाण्यम् इत्याक्षिप्य—

---

१. सत्संप्रयोगे पुरुषेन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ( जैमि० १।१ )।

२. पूर्वमीमांसादर्शने १।१।५।

विधाववनश्रिते साध्यः पुरुषार्थो न लभ्यते ।
श्रुतस्वर्गादिबाधेन धात्वर्थः साध्यतां व्रजेत् ।।
विधौ तु तमतिक्रम्य स्वर्गादिः साध्यतेष्यते ।
तत्साधनस्य धर्मत्वमेवं स च लभ्यते ।। १४–१५ ।

(५) अर्थेऽनुपलब्धे इत्यनेन स्मृतेरिव विधेरपि गृहीतग्राहित्वेनापादितम-प्रामाण्यं निरस्तम् ।

(६) अनपेक्षत्वादित्यनेन च प्रामाण्यस्य स्वतस्त्वं कारणगुणसंवादार्थक्रिया-ज्ञानानधीनत्वरूपमुपदर्शितम् । प्रामाण्यं ह्यर्थतथात्वरूपो विषयधर्मःज्ञाने तु प्रामाण्यस्य बुद्धिव्यवहारावर्थप्रामाण्यनिबन्धननावेव भवतः । अर्थतथात्वरूपं प्रामाण्यञ्च घटाद्यर्थवत्स्वतो गृह्यते, ज्ञानेनैव विषयीक्रियते । अप्रामाण्यं तु अर्था-न्यथात्वम्, तच्च बाधकज्ञानकारणदोषज्ञानसंवादज्ञानैर्गृह्यते इति परत इत्युक्तम् ।

(७) अनेन च सूत्रावयवेन लौकिकवाक्येषु प्रामाण्यस्य प्रतिष्ठावक्तृज्ञान-हेतुनिश्चयमपेक्षते वेदे तु न तत्र वक्तुरभावात् अतो नोक्तनिश्चयाभावादप्रामाण्य-शङ्काऽपीत्यपि प्रतिपादितम् ।

(८) एवञ्चोदनायास्तदर्थस्य तत्फलस्य स्वर्गादेश्च सत्त्व एव तस्याः प्रामाण्यं धर्मे सम्भवति नासत्त्व इति बाह्यर्थानां नीलाद्याकाराणां चासत्त्वमवलम्बमानस्य निरालम्बनवादस्य निरासेन वाह्यार्थसद्भावः प्रतिपादितो भाष्ये ।

(९) एवं महायानिकसम्मतस्य शून्यवादस्य खण्डनमपि भाष्ये कृतम् । तदुक्तं वार्त्तिके—

"अर्थशून्यमिदं ज्ञानं योगाचाराः प्रपेदिरे ।
तस्याप्यभावमिच्छन्ति ये माध्यमिकवादिनः" ।।

(१०) एवं चोदनाया धर्मे प्रामाण्यसिद्धयर्थमेव स्फोटनिरासोऽपि कृतः । ऊहादिमान् हि मन्त्रोच्चारणादिधर्मः चोदनायाः प्रमेयः पदादिधर्मश्चोहादिः स कथं पदाद्यसत्त्वे प्रतीयेत तदेतत् स्फोटनिरासस्य वैफल्यशङ्कापूर्वकयुक्तं वार्त्तिककारैः—

वर्णातिरेक प्रतिषिध्यमानः पदेषु मन्दं फलमादधाति ।
कार्याणि वाक्यावयवाश्रयाणि सत्यानिकर्त्तुं कृत एष यत्नः ।।

(११) एवमनित्याया व्यक्तेः शब्दार्थत्वे—पूर्वपक्षोक्तयुक्त्या वेदस्याप्रामाण्या-पत्तिरतत्प्रामाण्यप्रतिष्ठापयिषैवाकृतिवादेन नित्याकृतिः पदार्थत्वेन स्थापिता । आकृतिशब्दश्च जातिवाची मीमांसकानां 'जातिमेवाकृतिं प्राहुर्व्यक्तिराश्रीयते यया" इति वार्त्तिकात् ।

(१२) जातेश्च सौगतसूत्रानुसारेणावस्तुरूपतुच्छान्यपोहरूपत्वे वेदेष्वप्रामाण्यापत्तिरतोऽपोहवादनिरासेन जातेर्भावरूपता प्रतिपादिता।

(१३) एवं वनादिवत्परमाणुपुञ्जात्मक एवावयवी नार्थान्तरमिति सौगतनयेऽवयवानां परमाणूनामप्रत्यक्षत्वेन तत्समुदायस्याप्रत्यक्षतया व्यवहारानुपयोगित्वात्तत्र पदानां शक्तिग्रहासम्भवेन वेदाप्रामाण्यं प्रत्यापन्नमेवेति तत्प्रामाण्योपपत्तये वनवादेन वनादिदृष्टान्तवैषम्यमुपपाद्य परमाणुपुञ्जातिरिक्तोऽवयवी साधितः।

(१४) ततः पदपदार्थसम्बन्धस्येश्वरकृतसङ्केतात्मकत्वे वेदस्य तद्ग्रहसापेक्षत्वपत्त्या निरपेक्षतया प्रामाण्यस्य पुनरप्यनुपपत्तिः। किञ्च बुद्धादिसार्वज्ञ्यखण्डनयुक्तीनामीश्वरेऽपि प्रसजन्तीनां दुर्वारतया प्रामाण्यमूलोच्छेदिनः कारणदोषस्यापि वेदेष्वाक्रमणापत्तिरत ईश्वरे वेदकारत्वस्य निरासमात्रे पर्यवस्यन्तीश्वरनिरासः सम्बन्धसापेक्षपरिहारेण कृतः। नहि ईश्वर सद्भावेन वेदप्रामाण्यं प्रतिहन्ति, जीवसद्भाववत् किन्तु तस्य वेदकारत्वमात्रम्। वेदकारत्वमात्रप्रत्याख्यानेन च न भगवतः सिद्धिः प्रतिबद्धुं शक्यते "द्यावाभूमी जनयन्नित्यादिभिः" "कार्यायोजनवृत्त्यादेः" इत्यादिना न्यायाचार्योक्तैः सपरिकरैः प्रचुरतरैर्हेतुभिश्च तस्या अतिसौकर्यात्, एवञ्चेश्वरद्वेषिणो मीमांसका इति केषाञ्चिद् भ्रममात्रम्।

(१५) ततो यः प्रत्यक्षसूत्रे 'अनिमित्तं विद्यमानोपलम्भनत्वादि' त्यवयवेनानन्तरफलानुपलब्ध्या चित्रादिचोदनाक्षेपः कृतः स परिहृतः।

(१६) ततस्तेनैव प्रत्यक्षसूत्रावयवेन "स एष यज्ञायुधी आत्मा अञ्जसा स्वर्गं लोकं याति" इत्यादि चोदनानां यज्ञायुधवतः शरीरस्य स्वर्गगमनासम्भवरूपप्रत्यक्षविरोधादप्रामाण्यमापाद्य तत्सामान्यादग्निहोत्रादिचोदनानां यः प्रामाण्याक्षेपः कृतस्तत्परिहारो देहाद्यतिरिक्तात्मसाधनेनात्मवादे कृतः। उभौ चेमावन्त्योपान्त्यावर्थाविव्यतिरेकश्चेत्यनेनैनसूत्रावयवेक्ताविति।

वेदस्य स्वतः प्रामाण्यसिद्धे विधेर्वेदैकवेद्यत्वम् विचारणीयम्। ननु द्रव्यक्रियागुणादीनामेव धर्मपदार्थता पूर्वमुपपादिता तेषाञ्चैन्द्रियकत्वात्कथं धर्मस्य चोदनैकगम्यत्वमिति चेत्। स्यादपि एवं यदि धर्मत्वमेषामैन्द्रियकेणैव द्रव्यत्वादिना स्यात्। न च तथा श्रेयस्साधनत्वेनैव धर्मत्वाङ्गीकारात्, न च तदैन्द्रियकं किन्तु चोदनागम्यमेवेति तद्विशिष्टो धर्मपदार्थश्चोदनैकप्रमाणकः। तदुक्तं वार्त्तिके—

द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते।
तेषामैन्द्रियकत्वेऽपि न तावद्रूप्येण धर्मता॥ १३॥

श्रेयःसाधनता ह्येषां नित्यं वेदात् प्रतीयते।
तावद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः॥ १४॥

नन्वेवमपि कथं धर्माधर्मयोश्चोदनैकप्रमाणकत्वम्, धर्माधर्मपदप्रयोगविवेकस्य लोके प्रसिद्धत्वात्। इति चेन्न। इयं हि प्रसिद्धिर्न निर्मूला, निर्मूलत्वे निष्प्रमाणकैतिह्यवदन्धकारपरम्परापत्तेश्च। मूलं चास्या भ्रान्तिर्वा प्रत्यक्षादिर्वा चोदना वा स्यात्, नाद्यः अप्रामाण्यापत्तेः। तथा चोक्तमौत्पत्तिकसूत्रे वार्त्तिके—

प्रत्यक्षादौ निषिद्धेऽपि ननु लोकप्रसिद्धितः।
धर्माधर्मौ प्रमास्येते ब्राह्मणादिविवेकवत्॥

धार्मिकाधार्मिकत्वाभ्यां पीडानुग्रहकारिणौ।
प्रसिद्धौ हि तथा चाह पाराशर्योऽत्र वस्तुनि॥

इदं पुण्यमिदं पापमित्येतस्मिन्पदद्वये।
आ चाण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम्॥

निर्मूलासम्भवादत्र प्रमाणैः सैव मृग्यते।
कुतः पुनः प्रवृत्तेति प्रत्यक्षादि तु वारितम्॥

न चैतानि परित्यज्य पृथग् लोके प्रमाणता।
संसारमोचकादेश्च हिंसा पुण्यत्वसम्मता॥

न पश्चात्पुण्यमिच्छन्ति केचिदेवं विगानतः।
म्लेच्छार्याणां प्रसिद्धत्वं न धर्मस्योपपद्यते॥

न चार्याणां विशेषोऽस्ति यावच्छास्त्रमनिश्चितम्।
तन्मूलाऽर्थप्रसिद्धिस्तु तत्प्रामाण्ये स्थिते भवेत्॥ १–७॥

ननु हिंसादिषु शक्यमनुमानेनाप्यधर्मत्वमवगन्तुम्, हिंस्यमानस्य हि दुःखदर्शनेन हिंसितुर्दुःखं भविष्यतीत्यनुमीयते। न च यः परस्मै दुःखं ददाति स दुःखी भविष्यतीति व्याप्तौ मानाभावः किञ्च हिंसितुः साम्प्रतं सुखदर्शनादायत्यामपि प्रत्युत सुखमेवानुमीयते इति वाच्यम्। हिंसा कालान्तरे दुःखजनकतया अधर्मः, सम्प्रति दुःखजनकक्रियाविशेषत्वात्। या हि क्रिया स्वविषये सम्प्रति यादृशं फलं प्रसूते सा कालान्तरे स्वकर्त्तरि तत्सजातीयमेव फलं प्रसूते, यथा दानं सम्प्रदाने सम्प्रति सुखं कालान्तरे च दातर्यपि सुखम्, एवं हिंसापि सम्प्रति हिंस्यमाने दुःखं कालान्तरे हिंसितर्यपि दुःखम्।

एवञ्च धर्माधर्मयोरनुमानगम्यत्वात् कथं चोदनैकप्रमाणकत्वमिति चेन्न, गुरुदारगमनादेः सम्प्रति स्वविषये सुखजनकत्वेऽपि कालान्तरे कर्त्तरि दुःखजनकत्वेन व्यभिचारात्। एवं सुरापानादिषु व्यभिचारस्य दुर्वारत्वात्। किञ्च, एवं सति दानादिना कर्त्तुः कालान्तरे दुःखानात्मकं फलं स्यात्, साम्प्रतिकस्य सम्प्रदानगतस्य फलस्य सुखात्मकतया इव दुःखानात्मकता या अविदर्शनात्।

एवञ्च दुःखविपरीतसुखसाधनत्वनियमासिद्धया विरोधः। किञ्च कालान्तरे सुखस्य दुःखस्य वा विध्येकगम्यत्वात् कथं विधिमनुजीव्यानुमानोत्थानमपि, किञ्च सम्प्रदानस्य स्वल्पमपि सुखं कर्तुस्तु 'समद्विगुणसहस्रानन्तानि फलानि' इति स्मरणान्महदिति साध्यविकलो दृष्टान्तः। किञ्च, सपक्षे यस्य हेतौ व्याप्तिर्गृहीता तदेव पक्षे साधयितव्यम्, प्रकृते तु सपक्षे सम्प्रदानतुल्यफलकत्वम्, पक्षे च कर्मकारकतुल्यफलकत्वमिति वैषम्यम् विषयेति—शब्दमात्रानुगमस्त्वकिञ्चित्करः।

न च सम्प्रदानतुल्यफलकत्वमेव सपक्षवत् पक्षे साध्यमिति वाच्यम्, तथा सति सम्प्रदानवत्प्रकृतेऽपि प्रीतिसाधने विरोधप्रसङ्गात्, दृष्टान्ते च दानकर्मणो हिरण्यादेः स्वरूपतः फलाजनकत्वान्न तदनुसारेण पक्षे फलकल्पनसम्भवः। किञ्च अग्निषोमीयहिंसा, सुखकरी 'चोदितत्वात्' जपादिवत्, इति प्रकृतो हेतुर्विरुद्धाव्यभिचारी। अपि चैवं सुरापानादिः कालान्तरे न दुःखजनकः, सम्प्रति दुःखजनकत्वाभावात्, जपादिश्च न कालान्तरे सुखजनकः, सम्प्रतिसुखजनकत्वाभावादित्यप्यनुमीयेत।

एवञ्च जपसुरापानादौ धर्माधर्मभावयोर्निर्णयाय विधिनिषेधयोरवश्याश्रयणीयतया सर्वत्र ताभ्यामेव तौ निर्णयनीयाविति क्वाचित्कोऽसावनुमानाभासाडम्बरोऽनादरणीय एव। अपि च कर्मणा विषयफलानुरूपफलदायितां मन्यमानेन परस्यानुग्रहपीडानिबन्धनं धर्माधर्मत्वमाश्रीयते। ततश्च जपे सुरापाने च परोपकारापकारयोरभावाद्धर्मत्वमधर्मत्वं वा किमपि न स्यात्।

अपि च हृदयेन क्रोशतामपि गुरुदारादिगामिनामात्मनोऽपकारस्य स्वल्पत्वादुपकारस्य च भूयस्त्वाद् गुरुद्वाराभिगमो भूयान् धर्मः स्यात्। अनुमानप्रधानस्य च हृदयक्रोशनमपि न घटतेऽदृष्टपीडाविरहात्। यदि तु हृदयक्रोशात्मपीडावशादेवाधर्मत्वाधर्मत्वाच्च हृदयक्रोशोपपत्तिरित्युच्यते तदाऽन्योन्याश्रयम्। अपि चैवं सति शास्त्रज्ञानशून्यानां शास्त्रविद्वेषिणां म्लेच्छादीनां च हृदयक्रोशसम्भावनाया अप्यभावात्तत्र गुरुदाराभिगमस्य धर्मतायामापद्यमानायां न कश्चित्कुतर्कोऽस्ति। तस्मादनुग्रहं पीडां तदभावञ्चानभ्याशमित्यत्वेनावधृत्य धर्माधर्माववदिधारयिषुभिर्विधिनिषेधावेव शरणीकरणीयौ तावेव च चोदनेति तस्याः सिद्धं धर्माधर्मयोरसाधारणप्रमाणम्।[1]

अथ सर्वमिदं वेदस्यापौरुषेयत्वे स्यात्, अपौरुषेयत्वं च वेदस्य प्रतिज्ञातमौत्पत्तिकसूत्रे तच्च तदैव घटते यदि वर्णात्मकस्य शब्दस्य नित्यत्वं स्यात्, तच्च न सम्भवति तदनित्यत्ववादिभिस्तार्किकैर्निरस्तत्वात्।

किञ्च शब्दसामान्याद्वेदस्य जन्यतया पौरुषेयत्वेन भ्रमप्रमादपुरुषदूषणा-

१. चोदनासूत्रे वार्तिके २३५–२४९।

क्रान्तस्य सुतराम प्रामाण्यापत्तिरतस्तार्किकपक्षं पूर्वपक्षीकृत्याष्टादशसूत्रात्मकेनाधिकरणेन शब्दानां नित्यत्वं स्वयमेव सिद्धान्तितं जैमिनिना पूर्वमीमांसादर्शने ( १।१।६-२३ )।

नन्वप्रामाण्ये कारणद्वयमेव पूर्वमुपपत्तिभिर्निणीतम् कारणदोषोऽर्थबाधश्च। प्रमाणसामान्याच्च शब्देऽपि तदेवाप्रामाण्यनिर्णायकम्। शब्दसामान्याच्च वेदेऽपि तदेव प्रसज्यमानमपि पूर्वं निराकृतम्। तत्र वेदस्य नित्यत्वोपपादनेन निराश्रयत्वात्कारणदोषो निरस्तः। अर्थबाधस्तु अवशिष्यत एव निराकर्त्तुम्, स च वेदनिरपेक्षप्रमाणान्तरानवलीढविषयेषु स्वर्गकामादिवाक्येषु विरुद्धप्रमाणान्तरानवताराम्नैव संभूत सांदृष्टिकफलेषु तु 'कारीर्य्या यजेत वृष्टिकामः' 'चित्रया यजेत पशुकामः' 'श्येनेनाभिचरन् यजेत' इत्यादिषु दृष्टफलाभिलापकेषु प्रत्यक्षबलादेव प्रसजन्नर्थबाधो नोपायशतैरपि शक्यते प्रतिषेद्धुम्। कृतेऽपि कारीर्य्यादौ बहुशः फलालाभोपलम्भात्।

एवं प्रयोजनबाधप्रयुक्तार्थबाधप्रयुक्तार्थबाधपर्य्यवसायिनी वैयर्थ्यापरपर्य्याया पुनरुक्तिरपि वेदस्य प्रामाण्यमास्कन्दति। सा यथा 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति। अत्र त्रिःकथनेनोत्तमत्वस्यैव प्रथमत्वे पर्य्यवसानात्पुनरुक्तिः स्पष्टैव एवञ्चोक्तनिदर्शनत्रयानुसारेणादृष्टार्थकानां स्वर्गकामादिवाक्यानामप्यप्रामाण्यमध्यवसातुं सुकरमेव[1]।

अर्थवादविषये निष्कर्षः। अध्ययनविधिबलादर्थवादानां प्राशस्त्यमप्राशस्त्यञ्चेति द्वयं यथायथं लक्ष्योऽर्थः तत्रैव च तेषां तात्पर्यं मुख्यमिति 'विधिनात्विति सिद्धान्तसूत्रव्याख्यानावसरे निपुणतरमुपपादितमधस्तात् येषु चार्थवादेषु निन्दापरत्वं न घटते तेषां सर्वप्रकाराणामेव प्रशस्तत्वे तात्पर्यमिति केचिदप्यर्थवादाः प्रशस्तत्वात्प्रशस्तत्वलक्षणकतारूपाभ्यां धर्माभ्यामुपपादितं द्वैराश्यं नातिक्रामन्तीति निन्दावादव्यतिरिक्तेषु सर्वेष्वर्थवादेषु प्रशंसार्थत्वमविशिष्टम्" इति शङ्करभट्टेनापि निर्णीतं युक्तञ्चैतत् विधिनिषेधात्मिकयोः शब्दभावनयोर्यथाक्रमं प्रवृत्तिनिवृत्तिफलकतया प्रशंसानिन्दयोरेव तदनुगुणत्वात् विधेयनिषेध्यधर्माधर्मरूपक्रियागतयोः प्रशस्तत्वाप्रशस्तत्वयोः शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणगोचरतया तद्बोधकतयैव निरुक्तपूर्वं वेदत्वमर्थवादानामुपपद्यतेतराम् अन्यथा वायुक्षेपिष्ठत्वादीनां प्रत्यक्षादिगोचरतया तद्बोधमात्रतात्पर्यकत्वे स्वीक्रियमाणे वेदत्वमेव तेषां भज्येत आपद्येत च गृहीतग्राहित्वलक्षणमाप्रामाण्यमप्रयोजनकत्वञ्च एवञ्च श्रुतमात्रेभ्योऽर्थवादेभ्यःशब्दशक्तिस्वाभाव्याद् वायुक्षेपिष्ठत्वादिरूपस्य वाच्यार्थस्य प्रत्योदयेऽपि न तदंशमात्रे कथञ्चिदर्थवादानां वेदत्वं तस्यार्थस्यार्थवादमुख्य-

---

१. गौतमः, न्यायदर्शने २।१।५६-५९, ६१-६४।

तात्पर्यविषयत्वाभावात् लौकिकप्रमाणगोचरत्वाच्चेति तादृशार्थमात्रस्य बाधो नार्थवादानां वेदत्वं प्रामाण्यं वोपपादयितुमिष्टे बाधिताभ्यामपि गुणदोषाभ्यामारोपितमात्राभ्यां स्तुतिनिन्दयोः प्रवृत्तिनिवृत्त्योपपत्तेः सार्वलौकिकत्वात्, एवंविधे स्थले हि गौणार्थे लक्षणा प्रशस्तत्वाप्रशस्तत्वयोस्तु लक्षितलक्षणेति सिद्धान्तः। तथा च तादृशस्य लक्षितालक्ष्यार्थस्याबाधित्वान्मानान्तरागम्यत्वाच्च सर्वेष्वेवार्थवादेषु वेदत्वप्रमाण्ययोरुपपत्तिः, एवं मुख्यतात्पर्यविषयस्य वाच्यार्थमात्रस्य बाधोऽपि न तेषां ते विहन्तुमलम्।

अर्थतो महत्त्वं च वेदस्य किमिव वर्णनीयं यतः सकलान्येव चतुर्दश विद्यास्थानानि प्रत्येकमनेकग्रन्थगहनत्वात्स्वयमप्यनन्तानीव वेदार्थस्यैव व्याख्याभूतानि।

वेदविभागोऽपि विचारणीयः। तं चैनमेकग्रन्थभूतमेव वेदं भगवान् हिरण्यगर्भः शैष्योपाध्यापिकया प्रचारयांबभूवेति 'तेनाऽसौ' इत्यादिभ्यः 'चतुर्युगेषु' इत्यन्तेभ्यः श्रीमद्भागवतवाक्येभ्यो लभ्यते। तत्र 'चतुर्भिर्वदनै' रिति तु शिष्याणां भूयस्त्वात्संघशः पृथक् पृथगध्यापनमित्यभिप्रायेण, न तु वेदविभागाभिप्रायेण। तथा सति तदनन्तरं तत्रैवोक्तस्य व्यासकृतस्य वेदचतुर्धाविभागस्यासंगतिप्रसङ्गात्।

एवमेव भागवते ( ३।१२ ) स्वयम्भुवः पूर्वादिक्रमेण ऋग्वेदादिसृष्ट्यभिधानमपि वेदस्यैकस्य ऋग्वेदादीनाम्पादानां ये येंऽशास्तत्र तत्र विकीर्णास्तेषां तेन तेन मुखेनोच्चारणनियममभिप्रेत्यैव न तु वेदविभागमिति ध्येयम्।

स्त्रर्वेष्वेव महाकल्पेषु चेयमेत्र रीतिर्यत् प्रत्येकद्वापरयुगावसानपर्यन्तमविभक्त एवैकग्रन्थभूतो वेदोऽध्याप्यते। तदा यावदेवाविभक्तवेदाध्ययनयोग्यपुरुषसद्भावात्। अत एव 'नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम्। किञ्चिदन्यथाजातं त्रेतायाम् द्वापरे स्थितम्' इति मध्वाचार्योद्धृतः स्कान्दश्लोकः सङ्गच्छते। तत्र हि ज्ञायतेऽनेनेति व्युत्पत्त्या वेदबोधकाज्ज्ञानपदादेकवचनं निर्दिश्यते। अत एव च 'वेदमेकं चतुष्पादं चतुर्धा व्यभजत्प्रभुः' इति विष्णुपुराणमपि सङ्गच्छते। त्रेतायां द्वापरे तज्ज्ञानं किञ्चिदन्यथा जातं स्थितमिति स्कान्दोक्त्यैव सत्ययुगान्तरमारभ्यैव शनैः शनैर्वेदाध्ययनसम्प्रदायह्रासोपक्रमः सूचितः।

एकैकस्मिंश्चावान्तरकल्पे चतुर्दशमन्वन्तराणि भवन्ति। प्रति मन्वन्तरं च द्वापरे व्यास एव वेदान्व्यस्यति। व्याससंज्ञा वेदव्यसनाधिकारनिबन्धना। पूर्वेषु मन्वन्तरेषु वैवस्वताख्यैतन्मन्वन्तरीयसप्तविंशतितमद्वापरपर्यन्तेषु प्रतिद्वापरान्तमन्योऽन्य एव महर्षिर्व्यासास्पदभाग् यथायथं वेदं व्यास्थत्। तथा च "अत्र व्यस्ता द्वापरादौ महर्षिभिः। क्षीणायुषः क्षीणसत्वान्दुर्मेधान्वीक्ष्य कालतः। वेदान्महर्षयो व्यसन् हृदिस्थाच्युतनोदिताः।" इत्युदाहृतं श्रीमद्भागवते। अत्र च "द्वापर-

मादिर्यस्य तदन्त्यांशलक्षणस्य कालस्य तस्मिन् इत्यर्थः"। द्वापरान्ते वेदविभाग प्रसिद्धेः शन्तनुसमकालं व्यासावतारप्रसिद्धेश्चेति श्रीधरस्वामिनः।

कलियुगान्ते च शक्तीनामिव बुद्धीनामप्यस्तमयदेशीयेन ह्रासेन वेदस्यात्यन्तमुत्सादे धर्मस्यतुरीयं चरणमपि सीदन्तमवधार्य 'धर्मसंस्थापनार्थाय सम्भवामि युगे युगे' इति स्वप्रतिज्ञामनुरुध्यावतीर्णेन कल्किना कलिमपगमय्य भूयः स्थापिते सत्ययुगे पुनरपि पुण्यशालिनो महाबुद्धीनध्युष्य पूर्ववदेवाविभक्तवेदाध्ययनप्रचारः समुज्जृम्भत इत्येषा शाश्वतिकी मर्यादा। अस्मिंस्तु वैवस्वतमन्वन्तरेऽष्टाविंशतितमेऽन्तरे द्वापरेंऽशेनावतीर्णो भगवान् कृष्णद्वैपायनो नाम व्यासो येन प्रकारेण वेदं व्यास्थत् सोऽपि प्रकारः पूर्वोपन्यस्तेषु स्कान्दश्रीमद्भागवतविष्णुपुराणभागेषु 'गौतमस्य ऋषे०' इत्यारम्य 'पुनस्तस्यार्थवित्तये' इत्यन्तेन 'अस्मिन्नप्यन्तरे' इत्यारभ्य 'मन्त्रैर्मणिगणा इव' इत्यन्तेन, 'ब्रह्मण चोदितो व्यास' इत्यारभ्य 'अत्रैव मत्सुतो व्यास अष्टाविंशतिमेऽन्तरे। वेदमेकं चतुष्पादं चतुर्धा व्यभजत्प्रभुः' इत्यन्तेन पराशरवाक्येन च यथाक्रममुक्तः। अत्र चाष्टाविंशतिमे द्वापरयुगे इति मेषः इति महिदासोक्तं स्मर्तव्यम्।

तथा चायमुक्तपुराणत्रयैकवाक्यतासिद्धो मुक्तिकोपनिषदभिप्रेतो वेदविभागक्रमः। प्रथमस्तावत्, मन्त्रब्राह्मणस्वरूपऋग्वेदादिवेदचतुष्टयस्य सङ्ग्रहरूपग्रन्थचतुष्टयनिर्माणपर्यवसितो विभागः। क्रमेण तत्तद्वेदग्रहीतारश्च पैलवैशम्पायनजैमिनिसुमन्तवो व्यासान्तेवासिनो महर्षयः। ततश्चोक्तेषु ग्रन्थेषु शाखाविभागः स्कान्तोक्तो द्वितीयः। तत्र चोपनिषदुक्ता एकविंशतिमृग्वेदशाखा, बोधसौकर्यमनुसरन् कृष्णद्वैपायनः शाखांशानामावापोद्वापाभ्यां चतुर्विंशतिधा विभज्य चतुर्विंशतिं शाखाग्रन्थात् सङ्कलयामास।

यजुर्वेदस्य नवाधिकसंख्याकासूपनिषदुक्तासु तास्वष्टौ शाखा अवशिष्टास्वेव स्थाने स्थाने प्रकरणानुसारेण योजयित्वैकाधिकं शतं ग्रन्थान् सङ्कलितवान्। सामवेदस्य तूपनिषदुक्ता यावतीः शाखास्तथैव प्रचारयामास। अथर्ववेदस्य तु श्रुत्युक्तासु पञ्चाशच्छाखासु द्वादशैव राशीन्कृत्वा द्वादशग्रन्थांश्चकार। मन्त्राणां च पूर्वोक्तमन्त्राधिकरणन्यायेन स्वरगानयुक्तस्वरूपपाठतोऽपिच्छन्दोदेवतादिज्ञानपूर्वकमेव कर्मसूपयुक्तानां पदक्रमजटादिभिरभ्यासपरिपाटीभिरावश्यकात्यन्ताभ्यासनीयत्वं बुबोधयिषुर्भगवान् कृष्णद्वैपायनः विभागसङ्गृहीतानां वेदानां पुनः स्वविभक्तसङ्गृहीताभ्यः शाखाभ्यो मन्त्रगणमात्रमुद्धृत्योद्धृत्य तत्तच्छाखीयब्राह्मणभागानुसारेण यथाप्रकरणं योजयित्वा प्रतिशाखं संहिता निर्माय ऋग्वेदीयाश्चतुर्विंशतिं संहिता बह्वृचाख्ययैकत्वेन व्यवहृत्योक्ताय ऋग्वेदग्राहिणे पैलाय, तथा यजुर्वेदीयास्वेकोत्तरशतशाखासु षडशीतेरेव शाखानां षडशीतिं संहिता निगदाख्ययैकत्वेन

प्रकल्प्य तादृशा च जैमिनये, तथा अथर्ववेदीया द्वादशसंहिता अथर्वाङ्गिरसीनाम्नैकत्वेन व्यपदिश्य तथाविधाय सुमन्तवे, च स्वशिष्याय ददौ।

सङ्कलनया च वेदशाखानां प्रत्येकं मन्त्रसंहिताब्राह्मणात्मिकानां सप्तत्रिंशशताधिकसहस्रसङ्ख्याकत्वेऽपि वेदभेदापेक्षया चतुष्ट्‌ंव विंशतिसंख्यपूर्ववर्णापेक्षया यमानां विंशतित्वेऽपि 'चत्वारश्च यमाः स्मृता' इत्यत्र वर्ग्यवर्णचतुष्टयापेक्षया चतुष्टवत्। एकस्याः संहिताया अनेकशाखीयसकलमन्त्रसङ्ग्रहकत्वे तु तस्यां निरूढः एकशाखीयत्वव्यपदेशो व्याकुप्येत्। न सङ्गच्छेत च वाजसनेयीनां संहितानां पाञ्चदश्यम्, पञ्चदशशाखास्थनिखिलमन्त्रसङ्ग्राहिण्यैकयैव संहिताया निर्वाहात्। पश्चाद्धि व्यासेन मन्त्रब्राह्मणभागाभ्यामविभक्तासु यजुर्वेदस्य पञ्चदशशाखासु मन्त्रब्राह्मणभागविभागो याज्ञवल्क्येन कृतः। आसामेव च शाखानां मन्त्रसंहिताः पञ्चदश वाजसनेय्य इति व्यवह्रियन्ते षडशितिश्चापरास्तैत्तिरीया इति भागवताभिप्रायः। अनन्तरं च पैलादीनां शिष्योपशिष्यपरम्परान्तःपातिभिर्महर्षिभिः स्वस्वशिष्याध्ययनसौकर्याय क्लृप्तचरीभ्यः संहिताऽध्ययनपरिपाटीभ्यः प्रकारान्तराण्यपि गौणशाखापदापदेश्यानि समभ्यूहितानि इति त्वन्यदेतद् अतः सकलमनाकुलमिति।

स्मृतिप्रामाण्यं प्रतिपादितम्। अत्र मीमांसासूत्रम्–धर्मस्यमूलत्वाद् अशब्दमनपेक्ष्यं स्यात् ( १।३।१।१ )। धर्मस्य शब्दः वेदः मूलं यस्य तत्त्वात्। अष्टकाः कर्त्तव्या इति केवलपौरुषेयवाक्यप्रतिपाद्यमवेदमूलमनपेक्ष्यमनादरणीयं स्यात्। शाबरभाष्यम्—एवन्तावत्कृत्स्नस्य वेदस्य प्रामाण्यमुक्तम्, अथ इदानीं यत्र न वैदिकं शब्दमुपलभेमहि, अथ च स्मरन्ति, एवमयमर्थोऽनुष्ठातव्यः, एतस्मै प्रयोजनाय इति। तावद् विध्यर्थवादमन्त्रनामधेयात्मकस्य वेदस्य धर्मं प्रत्युपयोगः साधितः। इदानीं पौरुषेयीषु स्मर्यमाणार्थविधिषु मन्वादिप्रणीतनिबन्धनासु स्मृतिष्वनिबन्धनासु स्मृतिष्वनिबद्धेषु चाचारेषु चिन्ता।

पूर्वविज्ञानविषयं विज्ञानं स्मृतिरुच्यते। सर्वस्मरणानि हि प्रत्यक्षाद्यवगतेऽर्थे तदानुरूप्येणोपजापमानान्यर्थं समर्थयन्ति। तदिहाष्टकादीनां स्वर्गादिसाध्यसाधनभावं प्रत्यक्षादीनि तावन्न गृह्णन्ति इति साधितम्। शब्दोऽपि यथाऽग्निहोत्रादिषु प्रत्यक्षेणोपलभ्यते नैवमत्र। प्रत्यक्षानुपलब्धे च शब्दे सद्भावकल्पना। धर्मास्तित्वप्रमाणाद्धि विप्रकृष्टतरा भवेत्। यथैव धर्मे सम्बन्धादर्शनान्न किञ्चिलिङ्गं क्रमते तथाऽष्टकादिश्रुतावपि।

न च मन्वादिवचनाद्वेदमूलत्वं विश्निनुमः। ते हि निर्मूलमपि विप्रलम्भादिहेतोरुक्त्वा लोकं वञ्चयितुमेवं वदेयुः। तस्मादप्रमाणम्। अत्र सिद्धान्तः—अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात् ( १।३।२ )। अत्र वृत्तिः। सिद्धान्तमाह। अपि वेति। स्मृतिः, स्वमूलभूतवेददर्शनवत्प्रणीता, वेदातिरिक्तगम्यो धर्मो न

भवतीति निश्चयवता परेषां धर्मज्ञानार्थं प्रणीतत्वात् कल्पसूत्रादिवत्। नन्विदं प्रतारकवाक्यमित्येव किं नोच्यत इत्यत आह। कर्त्तृसामान्यात् वैदिकानुष्ठानस्मृत्योरेककर्त्तृकत्वात्। न हि वैदिकं कर्म, धर्मबुद्ध्या अनुतिष्ठन् प्रतारको भवेदिति भावः।

अपि वा इति पक्षो व्यावर्त्यते। प्रमाणं स्मृतिः, विज्ञानं हि तत्, किमिति सर्वथा तावन्मन्वादिप्रणीताः सन्निबन्धनाः स्मृतयः शेषाणि च विद्या...अन्यथा भविष्यति ? पूर्वज्ञानस्य नास्ति कारणाभावादिति चेत्। अस्या एव स्मृतेर्द्रढिम्नः कारणमनुमास्यामहे। तत्तु न अनुभवनम् अनुपपत्त्या, न हि मनुष्या इहैव जन्मनि एवं स्थानानि स्वार्थं प्रतिपादयन्त्वुपलभ्यन्ते। मन्वादीनां चाप्रत्यक्षत्वात्तद्विज्ञानमूलमदृष्टं किञ्चिदवश्यं कल्पनीयम्। सम्भाव्यते च मन्वादीनां चोदना, कर्त्तृसामान्यात्स्मृतिवैदिकपदार्थयोः। तेन उपपन्नो वेदसंयोगस्त्रैवर्णिकानाम्। यानि पुनरनुपपन्नवेदसम्भवनानां म्लेच्छादीनामतीन्द्रियार्थस्मरणानि तेषां मूलकल्पनावेलायामेव चोदना, सम्भावनापदं नारूढेति मिथ्यात्वहेतुमूलचतुष्टयपारिशेष्यादप्रमाणत्वम्। सम्भावितायां पुनश्चोदनायां कारणान्तरनिषेधे कृते निर्मूलत्वासम्भवात्परिशेषासिद्धं चोदनामूलत्वम्।

यत्तु किमर्थं चोदना नोपलभ्यन्त इति। तत्र केचिदाहुः। नित्यानुमेयास्ता न कदाचिदुच्चार्यन्ते। यथा लिङ्गादिकल्पिताः। कथमनुच्चारितानां मूलत्वोपपत्तिरिति चेत्। नैष दोषः। पाठाविच्छेदवत्पारम्पर्येण स्मरणात्तत्सिद्धेः यथैव हि ग्रन्थः सम्प्रदायादविच्छिन्नेऽस्तित्वं भजते तथैव प्रतिज्ञया नित्यानुमेयश्रुतिसम्प्रदायाविच्छेदसिद्धिः। तत्त्वयुक्तम्। अन्धपरम्परान्यायादेव। या हि चोदना न कदाचिदुच्चार्यते तस्याः सर्वपुरुषप्रत्यक्षादिप्रसराभावाद् दुर्लभतरमस्तित्वम्। तथा च स्मृतेरपि सैव वन्ध्यादौहित्रतुल्यता। लिङ्गादीनां तु नित्यत्वन्नित्यमनुच्चरितश्रुत्यनुमानकारणत्वमविरुद्धम्। तेन वरं प्रलीनश्रुत्यनुमानमेव।

न च प्रलयो न सम्भाव्यते। दृश्यते हि प्रमादालस्यादिभिः पुरुषक्षयाल्पविषयत्वम्। लभन्त एवं जातीयकं ग्रन्थम्। अनुपलभमाना अप्यनुमिमीरन् विस्मरणमप्युपपद्यते इति। न चैवं सति यत्किञ्चित्प्रमाणमापत्स्यते। शिष्टत्रैवर्णिकदृढस्मरणानुपपत्तिलभ्यत्वाच्छ्रुत्यनुमानस्य। यद्वा। विद्यमानशाखागतश्रुतिमूलत्वमेवास्तु। कथमनुपलब्धिरिति चेत्। उच्यते।

शाखानां विप्रकीर्णत्वात्पुरुषाणां प्रमादतः।
नानां प्रकरणस्थत्वात् स्मृतेर्मूलं न दृश्यते॥

यत्तु किमर्थं वेदवाक्यान्येव नोपसंगृहीतानि। सम्प्रदायविनाशभीतेः। विशिष्टानुपूर्व्या व्यवस्थितो हि स्वाध्यायोऽध्येतव्यः श्रूयते। स्मार्ताश्चाराः केचित्

क्वचित् कस्याश्चिच्छाखायाम् । तत्रापि तु केचित् पुरुषमेवाधिकृत्याम्नायन्ते ये न क्रतुप्रकरणाम्नाताः केनचिन्निमित्तेनोत्कृष्यमाणाः पुरुषधर्मतां भजन्ते । यथा 'मलवद्वाससा सह न संवदेत्' 'तस्मान्न ब्राह्मणायावगुरेदित्येवमादयः' । तत्र यदि तावत्तान्येव वाक्यान्युद्धृत्याध्यापयेयुस्ततः क्रमान्यत्वात्स्वाध्यविधिविरोधःस्यात् । अनेन च निदर्शनेन अन्येऽप्यर्थवादोद्धारेण विधिमात्रमधीयीरन् कर्मौपयिकमात्रं वा । तत्र वेदप्रलयः प्रसज्येत ।

न चावश्यं मन्वादयः सर्वशाखाध्यायिनः । ते हि प्रयत्नेन शाखान्तराध्यायिभ्यः श्रुत्वार्थमात्रं स्ववाक्यैरविस्मरणार्थं निबध्नीयुः । न च वाक्यविशेषो न ज्ञायते । यथैव हि स्मृतेर्दृढत्वाद्भ्रान्तिमूलत्वं नास्त्येवमर्थवादमूलत्वमपि । शक्नुवन्ति हि ते विध्यर्थवादौ विवेक्तुम् । तत्र स्मृतेर्विध्यात्मकत्वात्प्रकृतितादात्म्यानुमानलब्धास्पदेऽर्थवादपूर्वकत्वं निष्प्रमाणकम् । अपि च । 'वेदोऽखिलो धर्ममूलम्' 'स सर्वोऽभिहितो वेद' इति च स्वयमेव स्मर्तृभिरात्मा बद्ध्वा तदुपपन्नत्वात्पूर्वविज्ञानस्य त्रैवर्णिकानां स्मरताम्, विस्मरणस्य च उपपन्नत्वात् ग्रन्थानुमानमुपद्यते इति प्रमाणं स्मृतिः ।

समर्पितस्तच्चैतन्वियोगस्तत्कालैः कर्तृभिर्बुद्धिकारित्वादुपलब्धमतः सिद्धं वेदद्वारं प्रामाण्यम् । यस्तु कर्तृसामान्यात् स्वतन्त्रमेव प्रामाण्यं वेदमूलत्वं वाऽनुमानेन साधयति तस्यार्थकामानुसारिभिर्दृष्टार्थैराचारैरनेकान्तः । श्रूयमाणश्रुत्यधीनप्रामाण्यापत्तेश्च विरुद्धता । तस्मादर्थापत्तिरेवात्राव्यभिचारादुपचारात्पश्चान्मानादनुमानत्वेनोक्ता अस्या एव स्मृतेर्द्रढिम्न इति । दृढत्वात्कारणानुमानमथवा दृढत्वस्य ।

नहि मनुष्या इहैवेति निःशेषसंस्कारच्छिदा मरणेनान्तरित्वात्कर्मफलसम्बन्धानुसाधानासम्भवेनोच्यते । स्मृतिवैदिकपदार्थयोः कर्तृसामान्याद्रुपपन्नो वेदसंयोगस्त्रैवर्णिकानामिति चोदनामूलसम्भावनापदलाभार्थं विस्मरणमप्युपपद्यते इति । दृश्यते ह्यद्यत्वेऽप्यर्थस्मरणं ग्रन्थनाशश्च । यदा तु शाखान्तरेषु विद्यन्त एव ताः श्रुतयस्तदापि कस्यां शाखायां काः पठ्यन्त इति अस्यांशस्य विस्मरणम् । वैदिकत्वमात्रन्तु प्रामाण्यसिद्धये परिपालयन्ति । तद्विशेषज्ञानं पुनरनौपयिकत्वादनादर्त्तव्यमेव । तथा प्रत्युपस्थितनियमानामित्यागतमपागतं निमित्तं प्रति नियम्यते वृद्धवयः प्रत्युत्थानादयस्तेषां दृष्टार्थत्वादेव प्रामाण्यमिति । एतदुक्तम् । कुतः । धर्मं प्रति यतोऽत्रेदं प्रामाण्यं प्रस्तुतं स्मृतेः । तस्मादृष्यादिवत्तेषामुपन्यासो न युज्यते ।

न हि यावत्किञ्चिदाचरणं तस्य सर्वस्य मूलमिह प्रमाणीक्रियते । धर्मजिज्ञासाऽधिकारात् । यदि च गुर्वनुगमनादीनां केवलं दृष्टार्थत्वमेव स्यात्तत ऋष्यादिवदधर्मं प्रत्यप्रामाण्यमेवेति नोपन्यसितव्याः । स्यादेतदप्रमाणत्वेनैषामुपन्यास इति ।

न तथा सति हेतुदर्शनाच्चेत्यत्रोदाहर्त्तव्या भवेयुः। तस्माच्छ्रेयांसमिति च दर्शनं निष्फलम्। न च वियोगतः शास्त्रादृते प्राप्तिः। शक्यते हि उपायान्तरेणापि सामदानादिना गुरुरध्यापनादीनि कारयितुम्। तत्राऽस्ति नियमादिविधेरवकाशः। सर्वत्र च यथाकथञ्चिल्लोकपङ्क्तिसहायोपादानात्मरक्षणप्रीत्युत्पादकादिका दृष्टार्थता भाष्यकारोक्ता शक्या वक्तुम्।

नचावघातादीनां वृष्टिकामयजादीनां च दृष्टार्थानामवैदिकत्वम्। तस्मात् सत्यपि दृष्टार्थत्वे सम्भाव्यते वेदमूलत्वम् नियमादृष्टसिद्धेरनन्यप्रमाणकत्वादश्च गुर्वनुगमनादेर्नैमित्तिकत्वादक्रियायां प्रत्यवायःकरणे च न भवति। दृष्टं च प्रीतो गुरुरध्यापयिष्यतीत्येवमादि निष्पद्यते। नियमाविघ्नसमाप्त्यर्थाऽपूर्वसिद्धिः। एवञ्चाचाराद् गृह्यमाणेषु तथा स्यादित्यत्र सकृदसकृद्वा, तथा च दर्शयति, तस्माच्छ्रेयांसं पूर्वं यं तं पापीयान् पश्चादन्वेति। प्रपास्तडागाश्च परोपकाराय, न धर्माय; इत्येवावगम्यते तथा च दर्शनं 'धन्वन्निव प्रपा असि' इति, तथा स्थलयोदकं परिगृह्णन्ति इति च। तेन ये दृष्टार्थाः, ते तत एव प्रमाणम्, ये त्वदृष्टार्थाः, तेषु वैदिकशब्दानुमानमिति।

इतरथा तु दृष्टार्थत्ववशेनैवोदकपादादिवदवधारणं स्यात्। यत्तु भाष्यकारेण दृष्टार्थत्वादेव प्रामाण्यमित्युक्तं तत्पूर्वपक्षवाद्यतिशयार्थमेतदुक्तं भवति। यास्तावददृष्टार्थाः स्मृतयस्ताः कथञ्चिदप्रमाणी कुर्याद् भवान् इमाः पुनर्गुर्वनुगमनादिविषयाः कथमिवाप्रमाणं भविष्यन्तीति। सभाप्रपादीनां यद्यपि विशेषश्रुतिर्नैव कल्प्यते तथापि परोपकारश्रुत्यैव समस्तानामुपादानात्प्रामाण्यम्। तस्माच्छ्रेयांसमित्यश्वे गर्दभेनागन्तव्ये सिद्धवच्छ्रेयसामूनैरनुगमनं दर्शयति। यथा धन्वनि निरुदके कृताः प्रपाःपरेषामुपकुर्वन्त्येवं त्वमिति देवतापरे स्मृतिवाक्ये सिद्धवत् प्रपासद्भावः तस्याश्च पारार्थ्यं दृश्यते। गोत्रचिह्नं शिखकर्मेति। तत्राप्याचारनियमस्यादृष्टार्थत्वान्न तावन्मात्रमेव प्रयोजनम्। शक्यं ह्युपायान्तरेणापि गोत्रं स्मर्तुं तेनायमेवाभिप्रायः। कर्माङ्गभूतं तावच्चतुरवत्तपञ्चावत्तादिविभागसिद्ध्यर्थमवश्यं स्मर्तव्यं गोत्रम्।

अतश्च तच्चिह्नार्थमपि तावच्छिखाकल्पस्मृतेः प्रामाण्यमस्तु। तन्नियमादृष्टस्य त्वेकान्तेनैवानन्यगतिकत्वात् पुरुषार्थता सेत्स्यति। तेन सर्वस्मृतीनां प्रयोजनवती प्रामाण्यसिद्धिः। तत्र तु तावद्धर्ममोक्षसम्बन्धि तद्वेदप्रभवम्। यत्त्वर्थसुखविषयं तल्लोकव्यवहारपूर्वकमिति विवेक्तव्यम्।

एषैवेतिहासपुराणयोरप्युपदेशवाक्यानां गतिः। उपाख्यानानि त्वर्थवादेषु व्याख्यातानि। यत्तु पृथिवीविभागकथनं तद्धर्माधर्मसाधनफलोपभोगप्रदेशविवेकाय किञ्चिद्दर्शनपूर्वकं किञ्चिद्वेदमूलम्। वंशानुक्रमणमपि ब्राह्मणक्षत्रियगोत्रज्ञानार्थं

दर्शनस्मरणमूलम् । देशकालपरिमाणमपि लोकज्योतिः शास्त्रव्यवहारसिद्ध्यर्थं दर्शनगणितसम्प्रदायानुमानपूर्वकम् । भाविकथनमपि त्वनादिकालप्रवृत्तयुगस्वभावधर्माधर्मानुष्ठानफलविपाकवैचित्र्यज्ञानद्वारेण वेदमूलमेव । अङ्गविद्यानामपि क्रत्वर्थपुरुषार्थप्रतिपादनं लोकवेदपूर्वकत्वेन विवेक्तव्यम् ।

तत्र शिक्षायां तावद्यद्वर्णकरणस्वरकालादिप्रविभागकथनं तत्प्रत्यक्षपूर्वकम् । यत्तु तथाविज्ञानात्प्रयोगफलविशेषस्मरणं मन्त्रो हीनः स्वरतो वर्णतो वेति च प्रत्यवायस्मृतिस्तद्वेदमूलम् । एवं कल्पसूत्रेष्वर्थवादादिमिश्रशाखन्तरप्रकीर्णन्यायलभ्यविध्युपसंहारफलमर्थनिरूपणं तत्तत्प्रमाणमङ्गीकृतम् । लोकव्यहारपूर्वकाच्च केचिद् ऋत्विगादिव्यवहाराः सुखार्थहेतुत्वेनाश्रिताः । व्याकरणेऽपि शब्दापशब्दविभागज्ञानं साक्षाद्वृक्षादिविभागवत्प्रत्यक्षनिमित्तम् । साधुशब्दप्रयोगात्फलसिद्धिः, अपशब्देन तु फलवैगुण्यं भवतीति वैदिकम् । छन्दोविचित्यामपि गायत्र्यादिविवेको लोकवेदयोः पूर्ववदेव प्रत्यक्षः । तज्ज्ञानपूर्वकप्रयोगात्तु फलमिति श्रौतम् । तथा चानिष्टं श्रूयते । यो ह वाऽविदितार्षेय छन्दोदैवतब्राह्मणेन मन्त्रेण यजति याजयति वेत्यादि ।

ज्योतिःशास्त्रेऽपि युगपरिवर्तनपरिणामद्वारेण चन्द्रादित्यादिविभागेन तिथिनक्षत्रज्ञानमविच्छिन्नसम्प्रदायगणितानुमानमूलं ग्रहस्वैस्थ्यदौस्थ्यनिमित्तपूर्वककृतशुभाशुभकर्मफलविपाकसूचनं तद्गतशान्त्यादिविधानद्वारेण वेदमूलम् । एतेन सामुद्रवास्तुविद्यादि व्याख्यातम् । ईदृशा वा विधयः सर्वत्रानुमातव्यः । ईदृशे हि गृहशरीरादिसन्निवेशे सत्येतदेतच्च प्रतिपत्तव्यमिति । मीमांसा तु लोकादेव प्रत्यक्षानुमानादिभिरविच्छिन्नसम्प्रदायपण्डितव्यवहारैः प्रवृत्ता । न हि कश्चिदपि प्रथममेतावन्तं युक्तिकलापमुपसंहर्तुं क्षमः । एतेन न्यायविस्तरं—यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ।

प्रायेण च मनुष्याणामधर्मभूयिष्ठत्वात्तज्ज्ञानप्रतिबद्धाः प्रतिभास्तेषु तेषु कुमार्गेषु प्रवर्त्तन्ते । तत्र लोकार्थवादोपनिषत्प्रसूतैस्तर्कशास्त्रैः सर्वान्प्रति मुखप्रदर्शनम् । तदुपपत्तयस्तद्बलाबलपूर्वकं च निश्चयद्वारं कथ्यते । अन्यथा पुनः—प्रतिभान्त्यः स्वयं पुंसामपूर्वा ह्युपपत्तयः । भ्रान्तिं बहुमताः सत्यः कुर्युरज्ञानबोधनात् ।

सर्वासु तु प्रदर्शितासु स्वातन्त्र्येण विशोधयन्तः कश्चिदुत्सृज्यान्याः प्रमाणी करिष्यन्ति । यदपि च नित्यानित्यपृथक्त्वैकत्वसामान्यविशेषव्यतिरेकाद्येकान्तप्रतिपादनं तदपि पक्षपातादृते अन्यतरांशविरूपणाशक्तेः । अवश्यञ्च सर्वात्मकवस्तुयुगपद्ग्रहणासम्भवात्, तद्भागोपनिपातिपदविषयविवेकार्थमेकैकनिरूपणमादरेण कर्त्तव्यम् । अन्यथा येऽनवाप्तसामान्यविशेषाद्युपत्तयः पुरुषास्ते पदप्रतिपाद्यं

निष्कृष्टं वस्तुभागं लोकमात्रालोचनेन नैवाध्यवस्येयुः। मन्त्रार्थवादोपत्ताश्च स्तुतिनिन्दास्तत्तन्नित्यानित्यैकपृथक्त्वैकान्तमाश्रित्य तत्र तत्र विधिप्रतिषेधाङ्गत्वेन प्रवर्त्तमानाः पक्षपातप्रतिपादितवस्तुधर्मवैचित्र्यादृते निरालम्बनाः स्युः।

याश्चैताः प्रधानपुरुषेश्वरपरमाणुकारणादिप्रक्रियाः सृष्टिप्रलयादिरूपेण प्रतीतास्ताः सर्वा मन्त्रार्थवादज्ञानादेव दृश्यमानसूक्ष्मस्थूलद्रव्यप्रकृतिविकार-भावदर्शने च द्रष्टव्याः। प्रयोजनञ्च स्वर्गयागाद्युत्पाद्योत्पादकविभागज्ञानम्। सर्गप्रलयोपवर्णनमपि दैवपुरुषकारप्रभावप्रविभागदर्शनार्थम्। सर्वत्र हि तद्बलेन प्रवर्त्तते तदुपरमे चोपरमतीति विज्ञानमात्रक्षणभङ्गनैरात्म्यादिवादानामप्युपनिषत्प्रभवं विषयेष्वात्यन्तिकं रागं निवर्त्तयितुमित्युपपन्नं सर्वेषां प्रामाण्यम्। सर्वत्र च यत्र कालान्तरफलत्वादिदानीमनुभवासम्भवस्तत्र श्रुतिमूलता। सान्दृष्टिकफले तु वृश्चिकविद्यादौ पुरुषान्तरे व्यवहारदर्शनादेव प्रामाण्यमिति विवेकसिद्धिः।

श्रुतिविरोधे दृष्टिलोभादिमूलकत्वे वा स्मृतेरप्रामाण्यमेव। तथा च सूत्रे 'विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम्। हेतुदर्शनाच्च ( मी० द० १।३।३-४ )। तन्त्रवार्त्तिके—यान्येतानि त्रयीविद्भिर्न परिगृहीतानि किञ्चित्तन्मिश्रधर्मकञ्चुकच्छायापतितानि लोकोपसङ्ग्रहलाभपूजाख्यातिप्रयोजनपराणि त्रयीविपरीतासम्बद्धदृष्टशोभादिप्रत्यक्षानुमानोपमानार्थापत्तिप्राययुक्तिमूलोपनिन्धनानि साङ्ख्ययोगपाञ्चरात्रपाशुपतशाक्यनिर्ग्रन्थपरिगृहीतधर्माधर्मनिबन्धनानि विषचिकित्सावशीकरणोच्चाटनोन्मादनादिसमर्थकतिपयमन्त्रौषधिकादाचित्कसिद्धिनिदर्शनाहिंसास - त्यवचनदमदानदयाऽऽदिश्रुतिस्मृतिसंवादिस्तोकार्थगन्धवासितजीविकाप्रायार्थान्तरोपदेशीनि यानि च वाह्यान्तराणि म्लेच्छाचारमिश्रकभोजनाचरणनिबन्धनानि तेषामेतच्छ्रुतिविरोधहेतुदर्शनाभ्यामनपेक्षणीयत्वं प्रतिपाद्यते। नचैतत्क्वचिदधिकरणान्तरे निरूपितम्। न चावक्तव्यमेव गात्र्यादिशब्दवाचकत्वबुद्धिवदतिप्रसिद्धत्वात्। ब्राह्मणक्षत्रियप्रणीतत्वाविशेषेण वा मानवादिवदेव श्रुतिमूलत्वमाश्रित्य सचेतसोऽपि श्रुतिविहितैः सह विकल्पमेव प्रतिपद्येरन्। धर्मं प्रति त्रयीवाह्यमेवंजातीयकं प्रामाण्येनानपेक्ष्यं स्यात्।

एवं वेदवाह्यबुद्धादिस्मृतिस्थानां श्रुतिस्मृत्यविरुद्धानामहिंसादिवाक्यानामपि न धर्मे प्रामाण्यम्—

> या वेदवाह्याः स्मृतयो याश्च काश्चित्कुदृष्टयः।
> सर्वास्ता निष्फलाः प्रेत्य तमो निष्ठा हि ताः स्मृता ॥ (मनु०।१२।९५)

वार्तिककृत्संमतम् अधिकरणम्—शिष्टकोपेऽविरुद्धम् इति चेत्, न शास्त्रपरिमाणत्वात् (मी० द० १।३।५-६)। असतां वा क्षणभङ्गशून्यवादानात्मकत्वादीनामसद्धेतुभिर्वा प्रतिपादननियमात्तदेककर्त्तृकधर्मवचनानामप्यप्रमाणम्। ननु साङ्-

